उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतव्याकरणम् - ३४६

## पुस्तकम् - १





**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - संस्कृतव्याकरणम् (३४६)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**प्रो. डॉ. अर्कनाथ-चौधरी (समितेः अध्यक्षः)**
उप-कुलपतिः
श्रीसोमनाथ-संस्कृत-विश्वविद्यालयः
वेरावल -३६२२६६ (गुर्जरप्रदेशः)

**डॉ. नीरजकुमारभार्गवः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. हरि-राम-मिश्रः**
सहायकप्राध्यापकः (संस्कृतविभागः)
जवाहरलाल-नेहरू-विश्वविद्यालयः
नवदेहली

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. विजेन्द्र-सिंहः**
वरिष्ठ-प्राध्यापकः (संस्कृतम्)
शिक्षानिदेशालयः, केन्द्रसर्वकारः, देहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १-८)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S)
(संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः ९-११)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः
(संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १२-२०)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २१-२७, ३०-३१)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २८-२९)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**मुखपृष्ठचित्रणम्**
**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**संगणकीयविन्यासः**
**श्रीमान् राहुल-कुलकर्णी**
आचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतव्याकरणस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

(डॉ. चन्द्रभूषणशर्मा)
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतव्याकरणस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

(श्री संजय-कुमार-सिन्हा)
निदेशकः (शैक्षिकविभागस्य)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

# समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

संस्कृतव्याकरणस्य अध्ययनं सोपानक्रमेण भवति। अतः सोपानस्य प्रति पर्व आरोहणं क्रमेणैव कर्तव्यमिति इत्यतः पाणिनीयाम् अष्टाध्यायीं विद्वांसः भिन्नक्रमेणापि व्याख्यातवन्तः। सोऽयं प्रक्रियाक्रमः। तं क्रमम् अवलम्ब्य निर्मिता इयं सामग्री सोपनपर्वक्रमेणैव आयोजिता अस्ति। माध्यमिककक्षायां एकः भागः उच्चमाध्यमिककक्षायां च अवशिष्टः भागः वर्तते। एतेन पाणिनीयतन्त्रे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री पाणिनीयतन्त्रस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति। अस्य अध्ययनेन व्याकरणस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। सूत्राणि सूत्रव्याख्या, उदाहरणानि, उदाहरणेषु सूत्रस्य प्रवृत्तिः, रूपनिष्पत्तिश्च इति लक्ष्यलक्षणात्मकोऽयं व्याकरणप्रपञ्चः अत्र वर्तते।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

(राम-नारायण-मीणा)
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### समासः स्त्रीप्रत्ययाः च

१. केवलसमासः अव्ययीभावसमासः च

२. तत्पुरुषसमासः - द्वितीयादितत्पुरुषसमासः

३. तत्पुरुषसमासः- तद्धितार्थादितत्पुरुषसमासः

४. तत्पुरुषसमासः- कुगतिप्रादिसमासः उपपदसमासश्च

५. बहुव्रीहिसमासः-व्यधिकरणबहुव्रीहिः समान्तप्रत्ययश्च

६. बहुव्रीहिसमासः- समासान्तप्रत्ययः निपातव्यवस्थादिकम्

७. द्वन्द्वसमासः- पूर्वपरनिपातः विशेषकार्याणि एकशेषः च

८. प्रकीर्णं समासप्रकरणम्

### स्त्रीप्रत्ययः

९. स्त्रीप्रत्ययः- चाप् टाप् डाप् प्रत्ययाः

१०. स्त्रीप्रत्ययः- ङीप् प्रत्ययः

११. स्त्रीप्रत्ययः- ङीष्-प्रत्ययः

## पुस्तकम्- २

### तिङन्तप्रकरणम्

१२. भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -१

१३. भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -२

१४. भ्वादिप्रकरणे - भूधातोः लिटि लुटि च रूपसाधनम्

१५. भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम्

१६. भ्वादिप्रकरणे- भूधातोः लिङि लुङि लृङि च रूपसाधनम्

१७. भ्वादिप्रकरणे - लट् लिट् एतयोः सूत्रशेषः

१८. भ्वादिप्रकरणे - लिट्-लकारस्य सूत्रशेष

१९. भ्वादिप्रकरणे - लिङ् लुङ् एतयोः सूत्रशेषः

२०. भ्वादिप्रकरणे आत्मनेपदप्रकरणम्

२१. अदादितः दिवादिपर्यन्तम् - अद् हु दिव् धातवः

२२. स्वादितः रुधादिपर्यन्तम्- सु तुद् रुध् धातवः

२३. तनादितः चुरादिप्रर्यन्तम्- तन् कृ क्री चुर् धातवः

## पुस्तकम्- ३

### णिजन्तादिप्रकरणम्

२४. तिङन्ते णिजन्तप्रकरणम्

२५. तिङन्ते सन्नन्तप्रकरणम्

२६. तिङन्ते परस्मैपदात्मनेपदविधानम्

२७. तिङन्ते भावकर्मप्रकरणम्

### तद्धिताः

२८. तद्धितेषु अपत्याधिकारः

२९. तद्धितेषु मत्वर्थीयप्रत्ययाः

३०. तद्धितेषु रक्ताद्यर्थकप्रत्ययाः

३१. तद्धितेषु ठञधिकारः

# संस्कृतव्याकरणम्

# उच्चतरमाध्यमिककक्षा

## प्रथमं स्वाध्यायसोपानम्

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|
| | **समासः** | |
| १. | केवलसमासः अव्ययीभावसमासः च | १ |
| २. | तत्पुरुषसमासः - द्वितीयादितत्पुरुषसमासः | २९ |
| ३. | तत्पुरुषसमासः- तद्धितार्थादितत्पुरुषसमासः | ५१ |
| ४. | तत्पुरुषसमासः- कुगतिप्रादिसमासः, उपपदसमासः च | ७३ |
| ५. | बहुव्रीहिसमासः- व्यधिकरणबहुव्रीहिः समान्तप्रत्ययः च | ९५ |
| ६. | बहुव्रीहिसमासः- समासान्तप्रत्ययः निपातव्यवस्थादिकम् | ११३ |
| ७. | द्वन्द्वसमासः- पूर्वपरनिपातः विशेषकार्याणि एकशेषः च | १३० |
| ८. | प्रकीर्णं समासप्रकरणम् | १४९ |
| | **स्त्रीप्रत्ययः** | |
| ९. | स्त्रीप्रत्ययः- चाप् टाप् डाप् प्रत्ययाः | १६९ |
| १०. | स्त्रीप्रत्ययः- ङीप् प्रत्ययः | १७८ |
| ११. | स्त्रीप्रत्ययः- ङीष्-प्रत्ययः | १९१ |
| | सूत्रसूची | २०६ |

# संस्कृतव्याकरणम्

## पाणिनिव्याकरणस्य भूमिका

पाणिनीयव्याकरणं जिज्ञासवे भवते स्वागतम् व्याह्रियते। दिष्ट्या व्याकरणाध्ययने प्रवृत्तिः जाता। व्याकरणं भाषायाः संस्कारं करोतीति माध्यमिककक्षायाः पाठ्यक्रमे बहुधा प्रपञ्चितमेव। तथापि पुनः स्मारयितुम् अत्र पुनः ईषदुच्यते। भाषा किं करोति, भाषायाः महिमा इति विषये किञ्चित् प्रस्तूयते।

मानवस्य भावप्रकटनस्य माध्यमं हि भाषा। एकेन जनेन भाषया भावः प्रकटितः चेत् अपरः जनः तदा एव बोद्धुं शक्नोति यदि सः अपि ताम् भाषां जानाति। अतः बहुषु जनेषु साधारणा काचिद् भाषा नूनम् आवश्यकी। अन्यथा वाग्विनिमयस्य विरामः स्यात्। पुरा प्राचीनैः ग्रन्थरूपेण विषयाः प्रकटिताः। अद्य तान् विषयान् वयं तदा एव बोद्धुं शक्नुमः यदि वयं तां भाषां जानीमः। एकप्रदेशे प्रयुक्ता भाषा सुदूरप्रदेशे तदा एव बोद्धुं शक्या यदि तत्रत्याः जनाः तां भाषां जानन्ति। अतः तादृशी भाषा आवश्यकी - १) या पुरा यथा आसीत् तथैव अद्यापि अस्ति। २) या प्रदेशभेदेन परिवर्तिता नास्ति। ३) या शुद्धा अस्ति। ४) या सकलभावप्रकटने समर्था अस्ति। ५) आगामिकाले नूतनशब्दान् स्रष्टुं निर्मातुम् आदातुं च शक्नोति। ६) यस्याः व्याकरणं सुस्पष्टं सुदृढम् च अस्ति। ७) यस्यां शब्दानां विपुलता अस्ति। ८) या सरला सुबोधा अस्ति। ९) यस्यां सकलध्वनिप्रकटने पर्याप्ता वर्णाः सन्ति। १०) या यथा लिख्यते तथैव पठ्यते, यथा उच्चार्यते तथैव लिख्यते।

ईदृशी जगति एका एव भाषा विराजते। सा च संस्कृतभाषा। अस्याः भाषायाः व्याकरणम् अत्र पाठ्यः विषयः। अहो भाग्यम् अस्माकं यद् जगति सर्वश्रेष्ठायाः भाषायाः व्याकरणं वयं पाठामः। कार्यं यावत् श्रेष्ठं तावत् तस्मिन् कष्टम् अपि अधिकम् भवति। हिमालयस्य सर्वोच्चशिखरस्य आरोहणं यदि यः कोऽपि सामान्यः जनः कर्तुं शक्नुयात् तर्हि तत् स्तुत्यं कार्यम् इति कोऽपि न वदेत्। केचिद् विशिष्टाः एव शिखरारोहणं कुर्वन्ति। अतः यः करोति तस्य गौरवगाथा गीयते। अतः श्रेष्ठं कार्यं सदैव दुष्करं भवति एव। संस्कृतस्य व्याकरणं पठामि इति गौरवबोधं कृत्वा बद्धपरिकरः कृतसंकल्पः भवतु छात्रः।

भाषायाः ये पणाः उक्ताः तेषां साधनाय किमपि शास्त्रम् आवश्यकम्। तदेव शास्त्रं व्याकरणं नाम। व्याकरणं शुद्धशब्दानां निर्माणं करोति। वाक्ये प्रयुक्तानां शब्दानां परस्परं कस्य केन कः सम्बन्धः इति निश्चिनोति। एकेन प्रकटितं भावम् अपरः जनः सन्देहं विना अवगच्छेत् इति व्यवस्थां करोति।

**व्याकरणाध्यनकाले अत्र आवधानं देयम् -**

बहुत्र शास्त्रेषु मूलस्य ग्रन्थस्य कण्ठपाठः नापि आवश्यकः स्यात्। परन्तु व्याकरणस्य रूपाणि साधनीयानि चेत् सूत्रोल्लेखपुरःसरं रूपाणि साध्यन्ते। सूत्रं हि लक्षणम् उच्यते। तत् लक्षणं यस्य शब्दस्वरूपस्य संस्कारं करोति तत् शब्दस्वरूपं तस्य लक्ष्यम् उच्यते। अतः व्याकरणस्य छात्रेण लक्षणं तल्लक्ष्यं च सुष्ठु बोध्यम्। लक्षणस्य अर्थं जानाति चेदेव लक्ष्यस्य संस्कारं कर्तुं प्रभवति। अतः लक्षणम् अर्थः लक्ष्यम् एतत् त्रितयम् निष्ठया ज्ञेयमेव। अयमेव व्याकरणाध्ययनस्य पन्थाः। स एव खलु वैद्यः यो रोगं जानाति, औषधं च जानाति, औषधस्य प्रयोगं च जानाति। एषु एकमपि न जानाति चेत् कीदृशः स वैद्यः। एवमेव स एव खलु वैयाकरणः यः लक्षणं जानाति, अर्थं जानाति, लक्ष्यं च जानाति, लक्षणेन लक्ष्यस्य संस्कारं च करोतीति। अतः लक्षणानाम् अर्थात् सूत्राणां कण्ठपाठः अनिवार्यः एव।

पाणिनीयव्याकरणस्य पूर्वार्धः माध्यमिककक्षायाम् पाठ्यत्वेन निर्धारितोऽस्ति। तस्य सम्यक् अध्ययनं कृत्वा एव उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः सुखं पठितुं बोद्धुं च शक्यते। अतः अध्येता इदं मनसि निदध्यात्।

# १

# केवलसमासः अव्ययीभावसमासः च

## प्रस्तावना

"समसनं समासः" इति समासस्य सामान्यलक्षणम्। एकीभवनार्थे विद्यमानात् सम्पूर्वकाद् असुधातोः "भावे" इत्यनेन सूत्रेण घञ्प्रत्यये समासशब्दो निष्पन्नः। समसनं नाम बहूनां पदानां मेलनेन एकपदीभवनम्। पठितुमिच्छति इत्यर्थे पिपठिषतीत्यादौ सन्नन्ते एकपदीभवनं भवति। तर्हि अत्रापि समासः इत्यापत्तिः। तद्वारणाय "पाणिनीयसङ्केतसम्बन्धेन समासपदवत्त्वम्" इति समासस्य लक्षणं करणीयम्। "सह सुपा" इत्यादिभिः सूत्रैः विहिताः समासपदवाच्या भवन्तु इति सङ्केतः पाणिनिना कृतः। एवमत्र तात्पर्यं यत् पाणिनिना सूत्रैः येषां समाससंज्ञा कृता ते एव समासपदबोध्याः।

समासः पदविधिषु अन्यतमः। तत्र च यानि पदानि भवन्ति तानि "समर्थः पदविधिः" इति सूत्रबलात् समर्थानि भवन्ति। सामर्थ्यं च द्विविधम् एकार्थीभावसामर्थ्यं व्यपेक्षासामर्थ्यं चेति भेदात्। समासे एकार्थीभावसामर्थ्यम् इति सिद्धान्तः।

तस्य समासस्य भेदविषये बहूनां विप्रतिपत्तिरस्ति। सामान्यतया पञ्च भेदाः - केवलसमासः, अव्ययीभावः, तत्पुरुषः द्वन्द्वो बहुव्रीहिश्चेति। समासभेदविषये अन्तिमे पाठे विस्तरशः आलोचनं करिष्यते। अस्मिन् पाठे केवलसमासस्य अव्ययीभावसमासस्य विवरणं भवति। अतस्तयोः स्वरूपं वर्ण्यते।

केवलसमासः - अव्ययीभावः तत्पुरुषः बहुव्रीहिः द्वन्द्वः इत्येताः समासस्य विशेषसंज्ञाः सन्ति। एताभिः विशेषसंज्ञाभिः विनिर्मुक्तः यः समासः स एव केवलसमासः सुप्सुपा समासः इति वा अभिधीयते।

अव्ययीभावः - प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः। पूर्वपदस्यार्थः पूर्वपदार्थः। पूर्वपदार्थः प्रधानं यस्य स पूर्वपदार्थप्रधानः। यथा अधिहरि भक्तिः अस्ति इत्यत्र अधिहरि इति अव्ययीभावसमासः अस्ति। तत्र अधि इति पूर्वपदमस्ति। तदर्थः अधिकरणम्। हरि इति उत्तरपदम्। तस्य अर्थः विष्णुः इति। अधिहरि इति समस्तपदस्य च हर्यधिकरणम् इत्यर्थः। वाक्यस्य च हर्यधिकरणिका भक्तिः इत्यर्थः। एवञ्च इदं सुस्पष्टं यत् अधिहरि इति पदे विद्यमानस्य अधि इति पूर्वपदस्यार्थस्य प्राधान्यम् अस्ति।

अस्मिन् पाठे क्रमशः केवलसमासस्य अव्ययीभावसमासस्य च सूत्राणि आलोच्यन्ते।

समासविधायकसूत्रार्थलेखनावसरे बहुत्र समस्यते इति पदस्य प्रयोगः अस्ति। समस्यते इति पदस्यार्थो भवति समाससंज्ञं भवति इति। यथा - "सह सुपा" इति सूत्रस्य "सुबन्तं सुबन्तेन सह



समस्यते" इत्यर्थः। एतस्य तात्पर्यं भवति "सुबन्तं सुबन्तेन सह समाससंज्ञं भवति" इति। एवमेव अन्यत्र अवधेयम्।

## व्याकरणाध्यनकाले कुत्र अवधानं देयम् -

बहुत्र शास्त्रेषु मूलस्य कण्ठपाठः नापि आवश्यकः स्यात्। परन्तु व्याकरणस्य रूपाणि साधनीयानि चेत् सूत्रोल्लेखपुरःसरं रूपाणि साध्यन्ते। सूत्रं हि लक्षणम् उच्यते। तत् लक्षणं यस्य शब्दस्वरूपस्य संस्कारं करोति तत् शब्दस्वरूपं तस्य लक्ष्यम् उच्यते। अतः व्याकरणस्य छात्रेण लक्षणं तल्लक्ष्यं च सुष्ठु बोध्यम्। लक्षणस्य अर्थं जानाति चेदेव लक्ष्यस्य संस्कारं कर्तुं प्रभवति। अतः लक्षणम् अर्थः लक्ष्यम् एतत् त्रितयम् निष्ठया ज्ञेयमेव। अयमेव व्याकरणाध्ययनस्य पन्थाः। स एव खलु वैद्यः यो रोगं जानाति, औषधं च जानाति, औषधस्य प्रयोगं च जानाति। एषु एकमपि न जानाति चेत् कीदृशः स वैद्यः। एवमेव स एव खलु वैयाकरणः यः लक्षणं जानाति, अर्थं जानाति, लक्ष्यं च जानाति, लक्षणेन लक्ष्यस्य संस्कारं च करोतीति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्/भवती -

- समासे किंविधं सामर्थ्यमपेक्षते इति जानीयात्।
- केवलसमासविधानं केन भवति इति जानीयात्।
- अव्ययीभावसमासविधायकानि सूत्राणि कानि इति जानीयात्।
- अव्ययीभावसमासे समासान्ताः प्रत्ययाः के इति जानीयात्।

## [१.१] समर्थः पदविधिः॥ (२.१.१)

**सूत्रार्थः** - पदसम्बन्धि यत् कार्यं तद् एकार्थीभावसामर्थ्यवत्पदाश्रितं भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं परिभाषासूत्रम्। सूत्रेऽस्मिन् पदद्वयं वर्तते। तत्र समर्थः इति प्रथमैकवचनान्तं पदम्। पदविधिः इति प्रथमैकवचनान्तं पदम्। विधीयते इति विधिः कार्यम्। विपूर्वकाद् डुधाञ् धारणपोषणयोः इति धातोः "उपसर्गे घोः किः" इत्यनेन सूत्रेण कर्मणि किप्रत्यये विधिशब्दो निष्पन्नः। पदानां विधिः पदविधिः इति षष्ठीतत्पुरुषसमासः। तेन अस्य पदस्य पदसम्बन्धी विधिः इत्यर्थः। समर्थः इति पदमत्र समर्थाश्रिते लाक्षणिकम्। तेन सूत्रार्थो भवति - पदसम्बन्धी विधिः समार्थाश्रितो भवति। समर्थाश्रितः इत्यस्य अर्थो हि सामर्थ्यवन्ति यानि पदानि, तानि पदानि आश्रित्य प्रवर्तमानः।

**तत्र सामर्थ्यं द्विविधम्** - एकार्थीभावरूपं व्यपेक्षाभावरूपं चेति। समासादिपदविधिषु तु एकार्थीभावसामर्थ्यम् एव स्वीक्रियते इति सिद्धान्तः। तेन इदम् आगतं यत् समासादिपदविधिः एकार्थीभावरूपसामर्थ्यवन्ति यानि पदानि तानि आश्रित्य प्रवर्तते।



एकार्थीभावसामर्थ्यं च प्रक्रियादशायां प्रत्येकम् अर्थवत्त्वेन पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकता। यथा राजपुरुषः इत्यादौ समन्वयः प्रस्तूयते।

राज्ञः पुरुषः इति वाक्यम् अस्ति। अत्र राजपदस्य राजन् इत्यर्थः। तदुत्तरस्य ङस्-प्रत्ययस्य सम्बन्धः इत्यर्थः। पुरुषशब्दस्य पुरुषः इत्यर्थः। तदुत्तरः सु-प्रत्ययः स्वार्थिकः अस्ति। एवं समेषां पदार्थानां मेलनेन राजसम्बन्धी पुरुषः इत्यर्थः भवति। एतेन इदं सुस्पष्टं यद् वाक्ये प्रत्येकं पदानां स्वकीयः अर्थः अस्ति। षष्ठी इति सूत्रेण अत्र समासः क्रियते, समासश्च अलौकिकविग्रहवाक्ये भवति। एवञ्च राजन् ङस् पुरुष सु इति अलौकिकं विग्रहवाक्यं भवति। किन्तु समासः एकार्थीभावरूपे सामर्थ्ये एव भवति। अतः अस्माभिः अलौकिकविग्रहवाक्ये एकार्थीभावरूपं सामर्थ्यं स्वीक्रियते। स्वीकृते च एकार्थीभावरूपे सामर्थ्ये राजन् ङस् पुरुष सु इति समुदायः समुदायशक्त्या एव राजसम्बन्धी पुरुषः इति विशिष्टार्थं बोधयति। पदानां पृथक् पृथक् अर्थस्य उपस्थितिः न भवति। अतः राजन् ङस् पुरुष सु इत्यत्र समुदायशक्त्या विशिष्टार्थप्रतिपादकत्वात् अस्ति एकार्थीभावरूपं सामर्थ्यम्।

परिभाषासूत्रं प्रदीपवद् भवति। यथा प्रदीपः एकदेशस्थः सन् सर्वं गृहम् अभिज्वालयति। एवमेव परिभाषासूत्रम् एकत्र स्थितमपि सम्पूर्णायाम् अष्टाध्याय्यां प्रवर्तते। एवञ्च यत्र यत्र पदसम्बन्धि कार्यं तत्र तत्र तत्कार्यं समर्थपदम् आश्रित्य एव भविष्यति इति सूत्रसारः।

**अत्रेदं बोध्यम्** - समासः तयोः पदयोः मध्ये एव भवति ययोः पदयोः अर्थयोः मध्ये परस्परं सम्बन्धः भवति। यथा राज्ञः पुरुषः इत्यादौ राजपुरुषपदयोः अर्थयोः मध्ये परस्परं सम्बन्धः अस्ति। अतः अत्र समासः भवति। तेन राजपुरुषः इति प्रयोगः सिध्यति। ययोः अर्थयोः मध्ये परस्परं सम्बन्धः न भवति तद्वाचकपदयोः मध्ये समासः न भवति। यथा पुत्रः राज्ञः पुरुषः देवदत्तस्य इत्यत्र राज्ञः पुत्रेण सम्बन्धः अस्ति, पुरुषस्य च देवदत्तेन सह सम्बन्धः अस्ति। राजपुरुषयोः मध्ये तु सम्बन्धः नास्ति। अतः अत्र राजपुरुषयोः समासः न भवति। इत्येव अनेन सूत्रेण बोध्यते।

समासस्य फलत्रयम् ऐकपद्यम् ऐकस्वर्यम् एकार्थीभावश्चेति। समस्तं पदम् एकपदं भवति। अतः तस्य ऐकपद्यम्। समासे एक एव उदात्तः स्वरः भवति। अतः तस्य ऐकस्वर्यं भवति। अत्र उदात्तः एव स्वरः मुख्यः। समासे व्यपेक्षाभावसामर्थ्यं नास्तीति उक्तमेव। समासे एकार्थीभावः अस्ति। इदं फलत्रयं लाघवम् उच्यते। समासशब्दस्य लाघवं संक्षेपः इत्यपि अर्थः अस्ति। यत्र समासे एकाधिकानि पदानि सन्ति तत्र प्रायः समेषां पदानाम् अन्ते एका एव विभक्तिः दृश्यते, अन्याः विभक्तयो लुप्यन्ते। अतः विभक्तीनाम् अल्पीयस्त्वात् लाघवं भवति एव।

**शब्दाबली** - समासप्रकरणे बाहुल्येन प्रयुक्तानां केषाञ्चित् पारिभाषिक-शब्दानां परिचयः अधस्तात् दीयते -

क) **वृत्तिः** - समासः एकाधिकानां पदानां भवति। एतानि पदानि समासस्य अवयवाः सन्ति। तत्र प्रत्येकं पदानां स्वकीयः कश्चिद् अर्थः भवति। अवयवभूतानाम् पदानाम् अर्थेभ्यः परः भिन्नः अर्थः अभिधीयते प्रतिपाद्यते येन तत् परार्थाभिधानम्। अत्र अभिधानम् इति करणे ल्युट्। परार्थः येन प्रतिपाद्यते सा वृत्तिः। परार्थे वर्तते सा परार्थवृत्तिः। राज्ञः पुरुषः इत्युदाहरणे द्वयोः पदयोः पृथक् अर्थः



अस्ति। परन्तु तयोः समासे कृते कश्चित् राजसम्बन्धी पुरुषः इति विशिष्टः अर्थः अभिधीयते, प्रतिपाद्यते। विशिष्टः अर्थः कस्यापि एकस्य पदस्य नास्ति। अतः अयं विशिष्टः अर्थः समासावयवपदानाम् अर्थेभ्यः परः भिन्नः। समासः परार्थाभिधानम्। अतः वृत्तिः।

संस्कृतव्याकरणे पञ्च वृत्तयः सन्ति - कृदन्तवृत्तिः, तद्धितान्तवृत्तिः, समासवृत्तिः, एकशेषवृत्तिः, सनाद्यन्तधातुवृत्तिः इति भेदात्।

ख) **विग्रहः** - वृत्त्यर्थावबोधकं वाक्यं विग्रहः। वृत्तेः अर्थस्य बोधनाय यत् पदसमुदायात्मकं वाक्यम् प्रयुज्यते स विग्रहः कथ्यते। स च विग्रहः लौकिकालौकिकभेदेन द्विविधः।

ग) **लौकिकविग्रहः** - राजपुरुषः इति समासः वृत्तिः। तस्य राज्ञः पुरुषः इति यो विग्रहः लौकितसंस्कृतभाषायां व्यवहर्तुं योग्यः स लौकिकविग्रहः कथ्यते।

घ) **अलौकिकविग्रहः** - व्याकरणप्रक्रियासौकर्याय राजपुरुषः इति वृत्तेः राजन् ङस् पुरुष सु इति प्रकृतेः विभक्तिप्रत्ययसहितं प्रकटनम् अलौकिकविग्रहः कथ्यते। अस्य लोके प्रयोगो न भवति। केवलं प्रक्रियायाम्।

स्वपदविग्रहः अस्वपदविग्रहः इति भेदेनापि विग्रहः द्विविधः।

ङ) **स्वपदविग्रहः** - समासस्य पदात्मकान् अवयवान् आदाय कृतः विग्रहः स्वपदविग्रहः। स्वस्य पदानि प्रयुज्य कृतः विग्रहः इति यावत्। यथा राजपुरुषः इति समासस्य अवयवौ राजन् पुरुष इति द्वौ। तौ प्रयुज्य विग्रहः यथा राज्ञः पुरुषः इति। अतः अयं स्वपदविग्रहः। यत्र समासः विकल्पेन विधीयते तत्र लौकिकः स्वपदविग्रहः सम्भवति। यत्र नित्यसमासः भवति तत्र लौकिकः स्वपदविग्रहः न भवति। अलौकिकः विग्रहः सदा स्वपदविग्रहः एव भवति।jj

च) **अस्वपदविग्रहः** - समासस्य पदात्मकान् अवयवान् अनादाय कृतः विग्रहः अस्वपदविग्रहः। स्वस्य पदानि प्रयुज्य विग्रहः कृतः नास्ति स अस्वपदविग्रहः इति यावत्। यथा उपरामम् इति अव्ययीभावसमासे समासस्य अवयवौ उप राम इति द्वौ। तयोः उप इति पदं त्यक्त्वा तदर्थकम् अपरं समीपम् इति पदं प्रयुज्य विग्रहः यथा रामस्य समीपम् इति। अतः अयम् अस्वपदविग्रहः। नित्यसमासस्य लौकिकः अस्वपदविग्रहः भवति। अलौकिकविग्रहस्तु कदापि न अस्वपदविग्रहः।

## [१.२] प्राक्कडारात् समासः॥ (२.१.३)

**सूत्रार्थः** - "कडाराः कर्मधारये" इत्यस्मात् सूत्रात् प्राक् समासः इत्यधिकारः अस्ति।

**सूत्रव्याख्या** - इदमधिकारसूत्रम्। सूत्रेऽस्मिन् पदत्रयं वर्तते। तत्र प्राक् इति पूर्वार्थवाचकम् अव्ययपदम्। कडारात् इति पञ्चम्येकवचनान्तं पदम्। समासः इति प्रथमैकवचनान्तं पदम्। अत्र प्राक् इति पदं द्विः आवर्तते। सूत्रे कडारपदेन "कडाराः कर्मधारये" (२.२.३८) इति सूत्रस्य ग्रहणम्। तेन "कडाराः कर्मधारये" इत्यस्मात् सूत्रात् पूर्वं समासः इति पदं प्राक् इति पदं च अधिक्रियेते इति सूत्रार्थो भवति। अर्थात् अष्टाध्याय्यां प्राक् कडारात् समासः इत्यतः आरभ्य कडाराः कर्मधारये इत्यस्मात् सूत्रात् पूर्वं विद्यमानसूत्रेषु समासः इति पदं प्राक् इति पदं च गच्छतः।

प्राक् इत्यस्य आवर्तितस्य फलमेकसंज्ञाधिकारेऽपि समाससंज्ञया सह अव्ययीभावादिसंज्ञानां समावेशः।



## पाठगतप्रश्नाः-१

१. समर्थः पदविधिः" इति सूत्रं कीदृशं सूत्रम्।

२. सूत्रे समर्थः इति पदस्य कः अर्थः।

३. पदविधिः नाम किम्।

४. "समर्थः पदविधिः" इति सूत्रस्य कः अर्थः।

५. वृत्तिलक्षणं किम्।

६. वृत्तेः कति भेदाः।

७. विग्रहलक्षणं किम्।

८. विग्रहस्य कति भेदाः।

९. "प्राक्कडारात्समासः" इति सूत्रं कीदृशं सूत्रम्।

१०. प्राक्कडारात् समासः इति सूत्रे कडारपदेन कस्य ग्रहणम्।

## [१.३] सह सुपा॥ (२.१.४)

**सूत्रार्थः** - सुबन्तं सुबन्तेन सह समस्यते।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन समाससंज्ञा विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। तत्र सह इत्यव्ययपदम्। सुपा इति तृतीयैकवचनान्तं पदम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इति पदम् अनुवर्तते। "प्राक्कडारात्समासः" इति सूत्रात् समासः इति पदम् अधिक्रियते। "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणम्" इति परिभाषया सुप् इति प्रत्ययबोधकस्य प्रत्याहारस्य ग्रहणात् तत्र तदन्तविधिः। तेन सुप् इत्यस्य सुबन्तम् इत्यर्थः, सुपा इत्यस्य च सुबन्तेन इत्यर्थः। एवं सूत्रार्थो भवति - "सुबन्तं सुबन्तेन सह समस्यते" इति। एतस्य तात्पर्यं तावत् सुबन्तं सुबन्तेन सह समाससंज्ञं भवति। अत्रेदमपि बोध्यं यत् अनेन सूत्रेण विधीयमाना समाससंज्ञा तयोः सुबन्तयोः भवति ययोः मध्ये एकार्थीभावसामर्थ्यम् अस्ति।

**उदाहरणम्** - भूतपूर्वः इत्यादिकम् अस्य सूत्रस्य उदाहरणम्। पूर्वं भूतः इति लौकिकविग्रहः। पूर्व अम् भूत सु इत्यलौकिकविग्रहः। पूर्व अम् इति सुबन्तं भूत सु इत्यनेन सुबन्तेन सह प्रकृतसूत्रेण समाससंज्ञां लभते। तेन पूर्व अम् भूत सु इति समुदायः समाससंज्ञकः। ततश्च प्रक्रियाकार्ये भूतपूर्वः इति रूपम्।



## [१.४] प्रथमानिर्दिष्टं समास उपसर्जनम्॥ (१.२.४३)

**सूत्रार्थः** - समासविधायकशास्त्रे यत् प्रथमान्तं तद्बोध्यम् उपसर्जनसंज्ञं भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण उपसर्जनसंज्ञा विधीयते।सूत्रेऽस्मिन् पदत्रयम् अस्ति। तत्र प्रथमानिर्दिष्टं समासे उपसर्जनम् इति पदच्छेदः। प्रथमानिर्दिष्टमिति प्रथमैकवचनान्तं पदम्। समासे इति सप्तम्येकवचनान्तं पदम्। उपसर्जनम् इति प्रथमैकवचनान्तं पदम्। अत्र प्रथमानिर्दिष्टं समासे इति संज्ञिदलम् उपसर्जनम् इति च संज्ञापदम्। प्रथमया निर्दिष्टं प्रथमानिर्दिष्टम् इति तृतीयातत्पुरुषसमासः। प्रथमानिर्दिष्टं नाम प्रथमान्तपदबोध्यम्। समासे इत्यस्य च समासविधायकसूत्रे इत्यर्थः। एवं सूत्रार्थः समायाति - "समासविधायकसूत्रे यत् प्रथमान्तं तद्बोध्यम् उपसर्जनसंज्ञं भवति" इति। अर्थात् समासविधायके सूत्रे यत् प्रथमान्तं पदं तद्बोध्यः अर्थः लक्ष्ये उपसर्जनसंज्ञः भवति।

**उदाहरणम्** - कृष्ण अम् श्रित सु इति अलौकिकविग्रहे "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति सूत्रेण समाससंज्ञा विधीयते। अस्मिंश्च सूत्रे द्वितीया इति प्रथमान्तम् पदम्। तस्य अर्थः द्वितीयान्तम् इति। तच्च प्रकृते लक्ष्ये कृष्ण अम् इति अस्ति। अतः तस्य अनेन सूत्रेण उपसर्जनसंज्ञा भवति।

पूर्व अम् भूत सु इत्यत्र च सह सुपा इत्यनेन समाससंज्ञा कृता अस्ति। समासविधायकं सूत्रं सह सुपा इति। अत्र च सुप् इति पदम् अनुवर्तितम् अस्ति, तच्च प्रथमान्तम् अस्ति। तद्बोध्यं च पूर्व अम् इत्यपि अस्ति, भूत सु इत्यपि अस्ति। अतः उभयोरपि उपसर्जनसंज्ञा प्राप्ता।

## [१.५] उपसर्जनं पूर्वम्॥ (२.२.३०)

**सूत्रार्थः** - समासे उपसर्जनसंज्ञकं पूर्वं प्रयोज्यम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। तत्र उपसर्जनम् इति पूर्वम् इति च पदद्वयं प्रथमैकवचनान्तम्। "प्राक्कडारात्समासः" इति सूत्रात् समासः इति पदम् अधिक्रियते। तस्य च प्रथमान्तस्य सप्तम्यन्तत्वेन विपरिणामः भवति। एवं समासे उपसर्जनं पूर्वम् इति पदयोजना। समासे उपसर्जनसंज्ञकं पूर्वं प्रयोज्यम् इति सूत्रस्यार्थः।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं यथा "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति सूत्रम्। कृष्णं श्रितः इति लौकिकविग्रहे कृष्ण अम् श्रित सु इत्यलौकिकविग्रहे द्वितीया इति पदस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य कृष्ण अम् इत्यस्य "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन उपसर्जनसंज्ञा भवति। ततः प्रकृतसूत्रेण समासे उपसर्जनसंज्ञकस्य कृष्ण अम् इत्यस्य पूर्वनिपातः भवति। प्रक्रियाकार्ये च कृष्णश्रितः इति रूपं सिध्यति।

अत्र च पूर्व अम् भूत सु इति स्थिते समासविधायकशास्त्रे "सह सुपा" इत्यत्र उभयस्य सुबन्तत्वेन निर्देशाद् उभयोः उपसर्जनसंज्ञायाम् उभयोः पूर्वनिपातः प्राप्तः। परन्तु भगवतः पाणिनेः सूत्रं विद्यते "भूतपूर्वे चरट्" इति। तत्र भूतशब्दस्य पूर्वं प्रयोगः दृश्यते। अतः तदनुरोधेन भूतशब्दस्यैव पूर्वं

प्रयोगः क्रियते, न तु पूर्व इति शब्दस्य। ततः भूत सु पूर्व अम् इति स्थिते सुब्लुग्विधानाय सूत्रमिदं प्रवृत्तम् -



## पाठगतप्रश्नाः-२

११. "सह सुपा" इत्यनेन सूत्रेण कीदृशः समासो भवति।

१२. "सह सुपा" इत्यस्य सूत्रस्य कः अर्थः।

१३. "सह सुपा" इत्यस्य सूत्रस्य किम् उदाहरणम्।

१४. "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रेण किं भवति।

१५. समासपदेन "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रे कस्य ग्रहणम्।

१६. "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रस्यार्थः कः।

१७. प्रथमानिर्दिष्टमिति पदस्य कः अर्थः।

१८. "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रे संज्ञासंज्ञिनिर्णयं कुरुत।

१९. "उपसर्जनं पूर्वम्" इति सूत्रेण किं भवति।

२०. "उपसर्जनं पूर्वम्" इति सूत्रस्य कः अर्थः।

२१. "उपसर्जनं पूर्वम्" इति सूत्रस्य एकम् उदाहरणं देयम्।

## [१.६] सुपो धातुप्रातिपदिकयोः॥ (२.४.७१)

**सूत्रार्थः** - धातोः प्रातिपदिकस्य च अवयवस्य सुपः लुक् भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण सुपः लुक् विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र सुपः इति षष्ठ्येकवचनान्तं पदं, धातुप्रातिपदिकयोः इति षष्ठीद्विवचनान्तं पदम्। धातुश्च प्रातिपदिकं च धातुप्रातिपदिके, तयोः धातुप्रातिपदिकयोः इति इतरेतरयोगद्वन्द्वसमासः। "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इति सूत्रात् लुक् (१/१) इति पदम् अत्र अनुवर्तते। एवं प्रस्तुतस्य सूत्रस्यार्थः - "धातोः प्रातिपदिकस्य च अवयवस्य सुपः लुक् भवति" इति।

"प्रत्ययस्य लुक्श्लुलुपः" इति सूत्रानुसारेण प्रत्ययस्यादर्शनं लुक्-संज्ञं भवति।

**उदाहरणम्** - अस्य सूत्रस्य धात्ववयवस्य लुकि उदाहरणं भवति पुत्रीयति इति। आत्मनः पुत्रम् इच्छति इति विग्रहे "सुप आत्मनः क्यच्" इत्यनेन सूत्रेण पुत्र अम् इति द्वितीयान्तात् क्यचि पुत्र अम् क्यच् इति जाते, पुत्र अम् क्यच् इति समुदायस्य क्यजन्तत्वेन "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञा भवति। अत्र पुत्र अम् क्यच् इति समुदायः धातुसंज्ञकः। तस्य अवयवः अम् सुप् अस्ति। तस्य अनेन प्रकृतसूत्रेण लुक् भवति। ततः प्रक्रियाकार्ये पुत्रीयति इति रूपं सिध्यति।



प्रातिपदिकावयवस्य लुकि उदाहरणं भूतपूर्वः इति। भूत अम् पूर्व सु इति स्थिते "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकसंज्ञा भवति। ततः प्रकृतसूत्रेण प्रातिपदिकावयवस्य सुपः सोः अमश्च लुक् भवति। ततः प्रक्रियाकार्ये भूतपूर्वः इति रूपं निष्पद्यते।

## (१.६.१) इवेन समासो विभक्त्यलोपश्च॥ (वार्तिकम्)

**वार्तिकार्थः** - इवेति शब्देन सह सुबन्तं समाससंज्ञं भवति। समासावयवविभक्तेः लोपो न भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं केवलसमासविधायकम्। अस्मिन् वार्तिके पदचतुष्टयं विलसति। इवेन समासः विभक्त्यलोपः च इति पदच्छेदः। अत्र इवेनेति तृतीयैकवचनान्तं पदम्। समासः विभक्त्यलोपः इति पदद्वयं प्रथमैकवचनान्तम्। चेत्यव्ययपदम्। न लोपः अलोपः इति नञ्तत्पुरुषसमासः। विभक्तेः अलोपः विभक्त्यलोपः इति षष्ठीतत्पुरुषसमासः। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इति पदम् अनुवर्तते। "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषया सुप् इति प्रत्ययबोधकस्य प्रत्याहारस्य ग्रहणात् तत्र तदन्तविधिः। तेन सुबन्तम् इति लभ्यते। एवम् इवेन सह सुबन्तं समासः विभक्त्यलोपश्च इति पदयोजना। अत्र वार्तिकार्थो भवति - "इवेति शब्देन सह सुबन्तं समाससंज्ञं भवति। समासावयवविभक्तेश्च लोपो न भवति" इति।

**उदाहरणम्** - अस्य वार्तिकस्योदाहरणं वागर्थाविव इति। वाक् च अर्थश्च इति वागर्थौ इति इतरेतरयोगद्वन्द्वसमासः। वागर्थौ इव इति लौकिकविग्रहे वागर्थ औ इव इत्यलौकिकविग्रहे प्रकृतवार्तिकेन इवशब्देन सह वागर्थ औ इति सुबन्तं समाससंज्ञं भवति। समासे सति वागर्थ औ इत्यस्य सुबन्तम् इति प्रथमान्तपदबोध्यत्वात् "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रेण उपसर्जनसंज्ञा भवति। ततश्च "उपसर्जनं पूर्वम्" इति सूत्रेण तस्य पूर्वं प्रयोगः भवति। तेन वागर्थ औ इव इति स्थितिः जायते। ततश्च समासस्य "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकसंज्ञा भवति। प्रातिपदिकसंज्ञायां सत्यां "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्राप्तस्य लुकः निषेधः "विभक्त्यलोपश्च" इति वार्तिकांशात् जायते। एवं वागर्थ औ इवेति स्थिते "वृद्धिरेचि" इत्यनेन सूत्रेण अकारस्य औकारस्य च स्थाने वृद्धौ औकारे, "एचोऽयवायावः" इत्यनेन सूत्रेण औकारस्यावादेशे प्रक्रियाकार्ये सर्वसंयोगे वागर्थाविव इति रूपं निष्पद्यते।



## पाठगतप्रश्नाः-३

२२. "सुपो धातुप्रातिपदिकयोः" इति सूत्रेण किं भवति।

२३. "सुपो धातुप्रातिपदिकयोः" इति सूत्रस्य कः अर्थः।

२४. धातुप्रातिपदिकयोः इत्यत्र का विभक्तिः कश्च समासः।

२५. भूतपूर्व इत्यत्र भूतशब्दस्य कथं पूर्वनिपातः।

२६. "सुपो धातुप्रातिपदिकयोः" इति सूत्रस्य किमुदाहरणम्।



२७. "इवेन समासो विभक्त्यलोपश्च" इत्यस्य वार्तिकस्यार्थः कः।

२८. "इवेन समासो विभक्त्यलोपश्च" इत्यस्य वार्तिकस्य किमुदाहरणम्।

## [१.७] अव्ययीभावः॥ (२.१.५)

**सूत्रार्थः** - "तत्पुरुषः" (२.१.२२) इत्यस्मात् सूत्रात् प्राक् अव्ययीभावः इत्यधिकारः।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदम् अधिकारसूत्रम्। संज्ञाधिकारोऽयम्। अस्मिन् सूत्रे अव्ययीभावः इति प्रथमैकवचनान्तम् पदम्। "तत्पुरुषः" इत्यस्मात् सूत्रात् प्राक् अव्ययीभावः इति पदम् अधिक्रियते। अर्थाद् एतस्मात् सूत्राद् उत्तरं "तत्पुरुषः" इत्यस्मात् सूत्रात् प्राक् विद्यमानेषु सूत्रेषु अव्ययीभावः इति पदम् अनुवर्तते, व्याप्नोति। प्रतिसूत्रम् उपतिष्ठते इति भावः। ततश्च तेन तेन सूत्रेण विहितस्य समासस्य अव्ययीभावसंज्ञा भवति। अतः अयं संज्ञाधिकारः।

## [१.८] अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययाऽसम्प्रति-शब्दप्रादुर्भाव- पश्चाद्-यथाऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्याऽन्तवचनेषु॥ (२.१.६)

**सूत्रार्थः** - विभक्त्यर्थादिषु वर्तमानम् अव्ययं सुबन्तेन सह नित्यं समस्यते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण अव्ययीभावसमासः विधीयते। अस्मिन् सूत्रे पदद्वयं विद्यते। तत्र अव्ययम् इति प्रथमैकवचनान्तं पदम्। विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावाऽत्ययाऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथाऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्याऽन्तवचनेषु इति सप्तमीबहुवचनान्तं पदम्। वचधातोः कर्मणि ल्युटि वचनशब्दो निष्पन्नः। तेन उच्यते असौ वचनः इति तस्यार्थः वाच्यः इति यावत्। विभक्तिश्च समीपञ्च समृद्धिश्च व्यृद्धिश्च अर्थाभावश्च अत्ययश्च असम्प्रति च शब्दप्रादुर्भावश्च पश्चाच्च यथा च आनुपूर्व्यं च यौगपद्यं च सादृश्यं च सम्पत्तिश्च साकल्यञ्च अन्तश्च इति विग्रहे इतरेतरयोगद्वन्द्वसमासे विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावाऽत्ययाऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथाऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्याऽन्ताः इति शब्दो निष्पन्नः। ते च वचनाश्च इति विग्रहे कर्मधारयसमासे कृते विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावाऽत्ययाऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथाऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्याऽन्तवचनाः इति शब्दः निष्पद्यते। अस्यैव सप्तमीबहुवचनान्तं रूपं सूत्रे वर्तते। "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायाद् वचनशब्दस्य विभक्तिप्रभृतिभिः प्रत्येकं सम्बन्धः भवति।

विभक्तिपदेनात्र अधिकरणकारकस्य ग्रहणम्। समीपं नाम नैकट्यम्। समृद्धिः नाम उन्नतिः। विगता ऋद्धिः व्यृद्धिः ऋद्धेरभावः इत्यर्थः। अर्थस्य वस्तुनः अभावः अर्थाभावः। अत्ययो ध्वंसः। सम्प्रति न युज्यते इत्यसम्प्रति। शब्दप्रादुर्भावः नाम शब्दस्य नाम्नः प्रादुर्भावः प्रसिद्धिः। यथाशब्दस्य योग्यता-वीप्सा-पदार्थानतिवृत्ति-सादृश्यानि इति एते चत्वारः अर्थाः। पदस्यार्थः पदार्थः। न अतिवृत्तिः



अनतिवृत्तिः। अनतिक्रम इत्यर्थः। पदार्थस्यानतिवृत्तिः इति पदार्थानतिवृत्तिः। पदार्थस्यानुल्लङ्घनम् इत्यर्थः। यथार्थः सादृश्यं नाम तुल्यता। अनुपूर्वम् अनुक्रमः, तस्य भाव आनुपूर्व्यम्। पूर्वतायाः क्रम इत्यर्थः। यौगपद्यम् एककालता। यथार्थत्वेन सादृश्यार्थस्य ग्रहणात् पुनः सादृश्यं सूत्रे किमर्थम् इति प्रश्नः समुदेति। अत्रोत्तरं तावत् सादृश्यस्य गौणत्वे अपि समासविधानाय सूत्रे पुनः सादृश्यग्रहणम्। ऋद्धेराधिक्यं समृद्धिः, सम्पत्तिः नाम अनुरूप आत्मभावः। अर्थात् योग्यः स्वोचितभावः सम्पत्तिः इत्यनेनोच्यते। साकल्यं नाम सम्पूर्णता। अन्तः नाम समाप्तिः।

अस्मिन् सूत्रे "सुबामन्त्रिते पराङ्गवत्स्वरे" इति सूत्रात् सुप्, "सह सुपा" इति सम्पूर्णं सूत्रम् च अनुवर्तते। समासः अव्ययीभावः च इति पदद्वयमधिकृतम्। सुप् इति पदस्य तदन्तविधिना सुबन्तम् इति लभ्यते। सुपा इत्यस्य तदन्तविधिना च सुबन्तेन इति लभ्येत। समर्थः पदविधिः इति सूत्रात् समर्थः इति पदम् आयाति। तच्च तृतीयान्तत्वेन विपरिणमते। तेन समर्थेन इति भवति। एवं "विभक्त्यादिषु अर्थेषु वर्तमानम् अव्ययं सुबन्तं समर्थेन सुबन्तेन सह समाससंज्ञं भवति। स च समासः अव्ययीभावसंज्ञकः भवति" इति सूत्रस्यार्थः समायाति। अर्थात् १) विभक्त्यर्थवाचकम् अव्ययं सुबन्तं समर्थेन सुबन्तेन सह समाससंज्ञं भवति। स च समासः अव्ययीभावसंज्ञकः भवति। एवं२) समीपार्थकम् अव्ययं सुबन्तं समर्थेन सुबन्तेन सह समाससंज्ञं भवति। स च समासः अव्ययीभावसंज्ञकः भवति। एवं क्रमेण अन्येषाम् अपि भवति - ३) समृद्ध्यर्थकं ४) वृद्ध्यर्थकम् ५) अर्थाभावार्थकम् ६) अत्ययार्थकम् ७) असम्प्रत्यर्थकम् ८) शब्दप्रादुर्भावार्थकं ९) पश्चादर्थकं १०) यथार्थकम् ११) आनपूर्व्यर्थकम् १२) यौगपद्यार्थकं १३) सादृश्यार्थकं १४) सम्पत्त्यर्थकं १५) साकल्यार्थकम् १६) अन्तार्थकम् – अव्ययं सुबन्तं समर्थेन सुबन्तेन सह समाससंज्ञं भवति। स च समासः अव्ययीभावसंज्ञकः भवति। एवञ्च सूत्रपठितार्थानां वाचकानाम् अव्ययानाम् समर्थेन सुबन्तेन सह समासः भवति इति फलितार्थः।

**अवधेयम्** - सामान्यतः सूत्रोक्तस्वारस्येन समासविधायकसूत्रस्य अर्थप्रकटनाय – सुबन्तम् सुबन्तेन समाससंज्ञं भवति इति वाक्यं लेख्यम्। तथापि अस्य तात्पर्यं गृहीत्वा बहुषु स्थलेषु - सुबन्तं सुबन्तेन समस्यते। सुबन्तस्य सुबन्तेन समासः भवति। इत्यादिरूपेणापि प्रकट्यते।

**अत्रेदं बोध्यम्** - अस्मिन् सूत्रे अव्ययम् इति प्रथमान्तं पदमस्ति। अतः अनेन सूत्रेण यत्र समासः क्रियते तत्र अव्ययम् इति प्रथमान्तबोध्यस्य अव्ययस्य उपसर्जनसंज्ञा भवति, तस्य च पूर्वप्रयोगः भवति। अव्ययीभावसमासस्य अव्ययीभावश्च इति सूत्रेण अव्ययसंज्ञा भवति।

अनेन सूत्रेण विधीयमानः समासः नित्यः अस्ति। नित्यसमासस्य प्रायः लौकिकविग्रहः न भवति। अथवा अस्वपदलौकिकविग्रहः भवति। अत एव अविग्रहः अस्वपदविग्रहो वा भवति नित्यसमासः। तत्र नास्ति विग्रहो यस्य सः अविग्रहः। समासस्यार्थबोधकं वाक्यं विग्रहः कथ्यते। एवं यस्य समासस्य विग्रहो नास्ति सः अविग्रहः नित्यसमासः। नास्ति स्वपदैः विग्रहो यस्य सः अस्वपदविग्रहः। अर्थाद् यस्य समासस्य सर्वैः समस्यमानपदैः विग्रहो न क्रियते अपि तु समस्यमानपदसमानार्थकेन अन्येन पदेन क्रियते, सः अपि नित्यसमासः। अनेन सूत्रेण विधीयमानः अव्ययीभावः अस्वपदविग्रहो नित्यसमासः। एवञ्च अस्य सूत्रस्य उदाहरणानाम् अस्वपदविग्रहः एव क्रियते।



**उदाहरणम् -** अस्य सूत्रस्योदाहरणानि अधः प्रदीयन्ते -

अधिहरि - विभक्त्यर्थवाचकम् अव्ययं सुबन्तं समर्थेन सुबन्तेन सह समाससंज्ञं भवति। स च समासः अव्ययीभावसंज्ञकः भवति – इत्यंशस्य उदारहणम् अस्ति अधिहरि इति।

अधिहरि इत्यस्य हरौ इति लौकिकविग्रहः। हरि ङि अधि इत्यलौकिकविग्रहः अस्ति। अत्र अधि इत्यव्ययं सप्तमीविभक्तेः अर्थस्य अधिकरणस्य वाचकम् अस्ति। तस्मात् अधि इत्यव्ययं विभक्त्यर्थवाचकम् अस्ति। एवञ्च हरि ङि अधि इति अलौकिकविग्रहे विभक्त्यर्थवाचकम् अधि इत्यव्ययं सुबन्तं समर्थेन हरि ङि इति सुबन्तेन सह समाससंज्ञं भवति। स च समासः अव्ययीभावसंज्ञः भवति। ततः समासविधायकसूत्रे अव्ययम् इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य अधि इत्यस्य "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन उपसर्जनसंज्ञा भवति। "उपसर्जनं पूर्वम्" इत्यनेन च तस्य पूर्वनिपातः भवति। तेन अधि हरि ङि इति स्थितिः जायते। ततः समासत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवस्य सुपः ङेः लुक् भवति। तेन अधिहरि इति रूपं जायते। ततः "एकदेशविकृतमनन्यवद्" इति परिभाषया अधि हरि ङि इत्यत्र या प्रातिपदिकसंज्ञा सा अधिहरि इत्यत्र अव्याहता। तत् प्रातिपदिकत्वम् आदाय "स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्" इति सूत्रेण क्रमेण स्वादयः विभक्तयः प्राप्नुवन्ति। तत्र प्रथमैकवचने सुप्रत्यये अधिहरि सु इति स्थिते अधिहरि इत्यस्य "अव्ययीभावश्च" इति सूत्रेण अव्ययसंज्ञायां सत्याम् "अव्ययादाप्सुपः" इति सूत्रेण सोः लुकि अधिहरि इति रूपं सिध्यति। एवमेव अधिहरि इत्यस्मात् परं द्वितीयादिविभक्तीनाम् अपि "अव्ययादाप्सुपः" इत्यनेन लुक् भवति। अतः सर्वासु विभक्तिषु अधिहरि इत्येव रूपं भवति।



## पाठगतप्रश्नाः-४

२९. "अव्ययीभावः" इति सूत्रं किंप्रकारकम्।

३०. "अव्ययीभावः" इत्यधिकारः कियत्पर्यन्तम्।

३१. "अव्ययं विभक्ति" इत्यादिसूत्रस्यार्थः कः।

३२. "अव्ययं विभक्ति" इत्यादिसूत्रे विभक्तिपदं किं बोधयति।

३३. "अव्ययं विभक्ति" इत्यादिसूत्रे वचनशब्दस्य प्रत्येकं कथमन्वयः।

३४. समृद्धि-सम्पत्त्योः को भेदः।

३५. पदार्थानतिवृत्तिः नाम किम्।

३६. यथार्थत्वेन एव सिद्धे पुनः सूत्रे सादृश्यग्रहणं किमर्थम्।

अत्र विभक्तौ अन्यदुदाहरणं भवति अधिगोपम् इति। तथाहि गाः पातीति विग्रहे गोपाशब्दो निष्पन्नः। गोपि इति लौकिकविग्रहे गोपा ङि अधि इत्यलौकिकविग्रहे समाससंज्ञायाम्



उपसर्जनस्य पूर्वनिपाते प्रातिपदिकत्वात् सुपः ङेर्लुकि प्रक्रियाकार्ये अधिगोपा इति निष्पन्नः। तदा विशेषकार्यसाधनाय सूत्रम् उक्तम्-

## [१.९] अव्ययीभावश्च॥ (२.४.१८)

**सूत्रार्थः** - अव्ययीभावसमाससंज्ञकः शब्दः नपुंसकं भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधायकम्। अनेन अव्ययीभावसमासस्य नपुंसकत्वं विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र अव्ययीभावः च इति पदच्छेदः। अव्ययीभावः इति प्रथमैकवचनान्तं पदम्। चेत्यव्ययपदम्। चकारेण "स नपुंसकम्" इत्यस्मात् सूत्रात् नपुंसकम् इति पदं गृह्यते। एवम् - "अव्ययीभावसमाससंज्ञकः शब्दः नपुंसकं भवति" इति सूत्रार्थः।

उदाहरणम् - अधिगोपा इति स्थिते अव्ययीभावसमाससंज्ञकस्य अस्य प्रकृतसूत्रेण नपुंसकसंज्ञायां "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यनेन आकारस्य ह्रस्वत्वे अधिगोप इति निष्पद्यते। तस्य प्रातिपदिकत्वात् ततः प्रथमैकवचने सौ अधिगोप सु इति जाते "अव्ययीभावश्च" इत्यनेन अव्ययीभावस्य अव्ययसंज्ञायाम् "अव्ययादाप्सुपः" इत्यनेन सोर्लुकि प्राप्ते -

## [१.१०] नाव्ययीभावादतोऽम्त्वपञ्चम्याः॥ (२.४.८३)

**सूत्रार्थः** - अदन्ताद् अव्ययीभावात् सुपः न लुक्, तस्य पञ्चमीं विना अमादेशश्च भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण अमादेशो विधीयते। न अव्ययीभावाद् अतः अम् तु अपञ्चम्याः इति पदच्छेदः। अत्र नेति निषेधपरकम् अव्ययपदम्। अव्ययीभावादिति पञ्चम्येकवचनान्तं पदम्। अतः इत्यपि पञ्चम्येकवचनान्तं पदम्। अम् इति प्रथमैकवचनान्तं पदम्। तु इत्यव्ययपदम्। अपञ्चम्याः इति षष्ठ्येकवचनान्तं पदम्। न पञ्चमी अपञ्चमी इति नञ्तत्पुरुषसमासः। अत्र अतः इति पदम् अव्ययीभावाद् इत्यस्य विशेषणम्। विशेषणस्य तदन्तविधौ अदन्ताद् अव्ययीभावाद् इति भवति। अस्मिन् सूत्रे "अव्ययादाप्सुपः" इत्यस्मात् सूत्रात् सुपः इति षष्ठ्यन्तं पदं "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इत्यस्मात् सूत्रात् लुक् इति प्रथमैकवचनान्तम् अनुवर्तते। अत्र सूत्रे अतः अव्ययीभावात् सुपो न लुक् इत्येकं वाक्यम् अम् तु अपञ्चम्याः इत्यपरं वाक्यम्। अतः अव्ययीभावात् सुपो न लुक् इति वाक्यस्यार्थो भवति अदन्ताद् अव्ययीभावात् सुपः लुक् न भवतीति। अम् तु अपञ्चम्याः इत्यन्यस्य वाक्यस्यार्थो भवति पञ्चम्याः तु अम् न भवति। एवं च अदन्ताद् अव्ययीभावात् परस्य सुपः लुक् न भवति किन्तु अमादेशो भवति, पञ्चम्यास्तु लुग् भवति अमादेशश्च न भवतीति स्थितिः। एवं सूत्रार्थो भवति - "अदन्ताद् अव्ययीभावात्सुपो न लुक्, तस्य तु पञ्चमीं विना अमादेशश्च भवति" इति।

उदाहरणम् - अधिगोप सु इति जाते "अव्ययीभावश्च" इत्यनेन अव्ययीभावस्य अव्ययसंज्ञायाम् "अव्ययादाप्सुपः" इत्यनेन सोर्लुकि प्राप्ते अदन्तत्वाद् अव्ययीभावसंज्ञकत्वाद् अधिगोपशब्दस्य ततः

परस्य सोः अमादेशे अधिगोप अम् इति जाते "अमि पूर्वः " इत्यनेन अकारद्वयस्य स्थाने पूर्वरूपे एकादेशे अकारे अधिगोपम् इति रूपं सिध्यति।



## पाठगतप्रश्नाः-५

३७. "अव्ययीभावश्च" इति सूत्रेण किं विधीयते।

३८. "अव्ययीभावश्च" इति सूत्रस्यार्थः कः।

३९. "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इति सूत्रं किंप्रकारकम्।

४०. "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इति सूत्रेण किं विधीयते।

४१. "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इति सूत्रस्यार्थः कः।

---

## [१.११] तृतीयासप्तम्योर्बहुलम्॥ (२.४.८४)

**सूत्रार्थः** - अदन्ताद् अव्ययीभावात् तृतीयासप्तम्योः बहुलम् अमादेशः भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। तृतीयासप्तम्योः बहुलम् अमादेशविधानाय इदं सूत्रं प्रवृत्तम्। पदद्वयात्मके अस्मिन् सूत्रे तृतीयासप्तम्योः इति षष्ठीद्विवचनान्तं पदम्। तृतीया च सप्तमी च तृतीयासप्तम्योः इति इतरेतरयोगद्वन्द्वः। बहुलम् इति प्रथमैकवचनान्तं पदम्। पूर्वस्मात् सूत्रात् अतः अव्ययीभावाद् अम् इति पदत्रयमनुवर्तते। एवञ्च "अदन्ताद् अव्ययीभावात् तृतीयासप्तम्योः बहुलम् अमादेशः भवति" इति सूत्रार्थः फलति।

पूर्वसूत्रेण प्राप्तस्य नित्यस्य अमादेशस्य अनेन सूत्रेण बाहुल्येन विधीयते। अत्र बहुलग्रहणात् तृतीयायां सप्तम्यां च क्वचिद् अमादेशो भवति क्वचिच्च न भवति।

**उदाहरणम्** - समीपार्थे अव्ययीभावसमासस्य उदाहरणम् उपकृष्णम् इति। कृष्णस्य समीपम् इति लौकिकविग्रहे कृष्ण ङस् उप इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादिना सूत्रेण समीपार्थे विद्यमानम् उपेत्यव्ययं कृष्ण ङस् इति समर्थेन सुबन्तेन सह अव्ययीभावसमाससंज्ञं भवति। ततः अव्ययमित्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य उपेत्यस्य उपसर्जनसंज्ञायां तस्य पूर्वनिपाते, उप कृष्ण ङस् इति भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् सुपः ङसो लुकि उपकृष्ण इति सिध्यति। एकदेशविकृतन्यायेन तस्य प्रातिपदिकत्वात् ततः प्रथमैकवचने सौ उपकृष्ण सु इति जाते, "अव्ययीभावश्च" इत्यनेन समासस्य अव्ययसंज्ञायाम्, "अव्ययादाप्सुपः" इत्यनेन सुब्लुकि प्राप्ते तं प्रबाध्य "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यनेन सूत्रेण सोरमादेशे "अमि पूर्वः" इत्यनेन अकारद्वयस्य स्थाने पूर्वरूपे एकादेशे उपकृष्णम् इति प्रयोगः सिध्यति।

तत्र उपकृष्णशब्दात् तृतीयैकवचनविवक्षायां टाप्रत्यये उपकृष्ण टा इति स्थिते सुब्लुकं प्राप्तं प्रबाध्य "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यनेन सूत्रेण टाप्रत्ययस्य नित्यः अमादेशः प्राप्नोति। तं



प्रबाध्य "तृतीयासप्तम्योर्बहुलम्" इत्यनेन प्रस्तुतसूत्रेण बाहुलकाद् अमादेशो भवति। अम्पक्षे पूर्ववत् प्रक्रियाकार्ये उपकृष्णम् इति रूपम्। अमभावपक्षे च टाप्रत्ययस्य "टाङसिङसामिनात्स्याः" इत्यनेन सूत्रेण इनादेशे उपकृष्ण इन इति जाते आद् गुणः इति सूत्रेण अकारस्य इकारस्य च स्थाने गुणे एकारे उपकृष्णेन इति रूपम्। एवमेव सप्तम्याम् उपकृष्णम् उपकृष्णे इति रूपद्वयम्।

समृद्ध्यर्थे अव्ययीभावसमासस्योदाहरणं भवति सुमद्रम् इति। मद्राणां समृद्धिः इति लौकिकविग्रहे मद्र आम् सु इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादि- सूत्रेण समृद्ध्यर्थे विद्यमानं सु इत्यव्ययं मद्र आम् इत्यनेन समर्थेन सुबन्तेन सह अव्ययीभावसमाससंज्ञं भवति। ततः उपसर्जनसंज्ञकस्य सु इत्यस्याव्ययस्य पूर्वनिपाते सु मद्र आम् इति भवति। ततः समासस्य प्रातिपदिकत्वात् तदवयवस्य सुपः आमः लुकि निष्पन्नात् प्रातिपदिकात् सुमद्र इत्यस्मात् प्रथमैकवचने सौ सुमद्र सु इति जाते, "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यनेन सोरमि अकारद्वयस्य स्थाने पूर्वरूपे सुमद्रम् इति निष्पन्नम्। बहुलग्रहणसामर्थ्यात् अत्र सप्तम्यां नित्यः अमादेशो भवति। तेन सुमद्रम् इत्येव रूपम्। न तु सुमद्रे इति।

व्यृद्ध्यर्थे अव्ययीभावसमासस्योदाहरणं भवति दुर्यवनम् इति। यवनानां व्यृद्धिः इति लौकिकविग्रहः यवन आम् दुर् इत्यलौकिकविग्रहश्च।

अर्थाभावार्थे अव्ययीभावसमासस्योदाहरणं भवति निर्मक्षिकम् इति। मक्षिकाणाम् अभावः इति लौकिकविग्रहः मक्षिका आम् निर् इत्यलौकिकविग्रहश्च।

अत्ययार्थे अव्ययीभावसमासस्योदाहरणं भवति अतिहिमम् इति। हिमस्यात्ययः इति लौकिकविग्रहः हिम ङस् अति इत्यलौकिकविग्रहश्च।

असम्प्रत्यर्थे अव्ययीभावसमासस्योदाहरणं भवति अतिनिद्रम् इति। निद्रा सम्प्रति न युज्यते इति लौकिकविग्रहः निद्रा ङस् अति इत्यलौकिकविग्रहः।

शब्दप्रादुर्भावार्थे अव्ययीभावसमासस्योदाहरणं भवति इतिहरि इति। हरिशब्दस्य प्रकाशः इति लौकिकविग्रहः हरि ङस् इति इत्यलौकिकविग्रहश्च।

पश्चादर्थे अव्ययीभावसमासस्योदाहरणं भवति अनुविष्णु इति। विष्णोः पश्चाद् इति लौकिकविग्रहः विष्णु ङस् अनु इत्यलौकिकविग्रहश्च।

योग्यतारूपे यथार्थे अव्ययीभावसमासस्योदाहरणं भवति अनुरूपम् इति। रूपस्य योग्यम् इति लौकिकविग्रहः रूप ङस् अनु इत्यलौकिकविग्रहश्च।

वीप्सारूपे यथार्थे अव्ययीभावसमासस्योदाहरणं भवति प्रत्यर्थम् इति। अर्थम् अर्थम् प्रति इति लौकिकविग्रहः अर्थ अम् प्रति इत्यलौकिकविग्रहश्च।

पदार्थानतिवृत्तिरूपे यथार्थे अव्ययीभावसमासस्योदाहरणं भवति यथाशक्ति इति। शक्तिम् अनतिक्रम्य इति लौकिकविग्रहः शक्ति अम् यथा इत्यलौकिकविग्रहश्च।

सादृश्यरूपे यथार्थे अव्ययीभावसमासस्योदाहरणं भवति सहरि इति। हरेः सादृश्यम् इति लौकिकविग्रहे हरि ङस् सह इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादिसूत्रेण सादृश्यार्थे विद्यमानं सह



इत्यव्ययं हरि ङस् इत्यनेन समर्थेन सुबन्तेन सह अव्ययीभावसमाससंज्ञं भवति। ततः उपसर्जनसंज्ञकस्य सह इत्यस्य पूर्वनिपाते सह हरि ङस् इति जाते, समासस्य प्रातिपदिकत्वात् तदवयवस्य सुपः ङसः लुकि सहहरि इति निष्पद्यते। ततः सहेत्यस्य सादेशविधायकं सूत्रम्- (अग्रिमसूत्रं द्रष्टव्यम्।)



## पाठगतप्रश्नाः-६

४२. "तृतीयासप्तम्योर्बहुलम्" इति सूत्रं किंप्रकारकम्।

४३. "तृतीयासप्तम्योर्बहुलम्" इति सूत्रेण किं विधीयते।

४४. तृतीयासप्तम्योर्बहुलम् इति सूत्रस्यार्थः कः।

४५. समीपार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

४६. समृद्ध्यर्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

४७. व्यृद्ध्यर्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

४८. अर्थाभावार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

४९. अत्ययार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

५०. असम्प्रत्यर्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

५१. शब्दप्रादुर्भावार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

५२. पश्चादर्थे अव्ययीभावसमासस्य किम् उदाहरणम्।

५३. यथार्थे अव्ययीभावसमासस्योदाहरणं लिखत।

५४. वीप्सार्थे अव्ययीभावसमासस्योदाहरणं लिखत।

५५. पदार्थानतिवृत्तौ अव्ययीभावसमासस्योदाहरणं लिखत।

---

## [१.१२] अव्ययीभावे चाकाले॥ (६.३.८०)

सूत्रार्थः - सहशब्दस्य सादेशः भवति अव्ययीभावे, कालविशेषवाचके उत्तरपदे परे न भवति।

सूत्रव्याख्या - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण सहशब्दस्य सादेशो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे अव्ययीभावे इति सप्तम्येकवचनान्तं पदम्। चेत्यव्ययपदम्। अकाले इति सप्तम्येकवचनान्तं पदम्। "सहस्य सः संज्ञायाम्" इत्यस्मात् सूत्रात् सहस्येति षष्ठ्यन्तं पदं सः इति प्रथमान्तं पदं च अनुवर्तते। "अलुगुत्तरपदे" इत्यस्मात् सूत्राद् उत्तरपदे इति पदमनुवर्तते।न काले अकाले इति नञ्तत्पुरुषसमासः। कालशब्देनात्र कालविशेषवाचकानां पूर्वाह्णप्रभृतीनां ग्रहणम्। एवं "सहशब्दस्य सादेशः भवति अव्ययीभावे, कालविशेषवाचके उत्तरपदे परे न भवती"ति सूत्रार्थः।



उदाहरणम् - सहहरि इति स्थिते प्रकृतसूत्रेण सहशब्दस्य स्थाने सादेशे निष्पन्नात् सहरि इत्यस्मात् प्रातिपदिकात्सौ अव्ययत्वात्समासस्य "अव्ययादाप्सुपः" इत्यनेन सुब्लुकि सहरि इति पदं निष्पन्नम्। सचक्रम्, ससखि, साग्नि इत्यादिकमेतस्य सूत्रस्योदाहरणम्।

आनुपूर्व्यार्थे अव्ययीभावसमासस्योदाहरणं भवति अनुज्येष्ठम् इति। ज्येष्ठस्य आनुपूर्व्येण इति लौकिकविग्रहः ज्येष्ठ ङस् अनु इत्यलौकिकविग्रहः।

यौगपद्यार्थे अव्ययीभावसमासस्योदाहरणं भवति सचक्रम् इति। चक्रेण युगपद् इति लौकिकविग्रहः चक्र टा सह इत्यलौकिकविग्रहः। सहचक्र इति स्थिते "अव्ययीभावे चाकाले" इत्यनेन प्रस्तुतसूत्रेण सहशब्दस्य सादेशे निष्पन्नात् प्रातिपदिकात् सचक्र इत्यस्मात् प्रथमैकवचने प्रक्रियाकार्ये सचक्रम् इति रूपम्।

सादृश्यार्थे अव्ययीभावसमासस्योदाहरणं भवति ससखि इति। सख्या सदृशः इति लौकिकविग्रहः सखि टा सह इत्यलौकिकविग्रहश्च। अत्रापि प्रस्तुतसूत्रेण सहशब्दस्य सादेशः।

सम्पत्त्यर्थे अव्ययीभावसमासस्योदाहरणं भवति सक्षत्रम् इति। क्षत्राणां सम्पत्तिः इति लौकिकविग्रहः क्षत्र आम् सह इत्यलौकिकविग्रहश्च। अत्रापि प्रस्तुतसूत्रेण सहशब्दस्य सादेशः।

साकल्यार्थे अव्ययीभावसमासस्योदाहरणं भवति सतृणम् इति। तृणमपि अपरित्यज्य इति लौकिकविग्रहः तृण टा सह इत्यलौकिकविग्रहः। अत्रापि प्रस्तुतसूत्रेण सहशब्दस्य सादेशः।

अन्तार्थे अव्ययीभावसमासस्योदाहरणं भवति साग्नि इति। अग्निग्रन्थपर्यन्तम् इति लौकिकविग्रहः अग्नि टा सह इत्यलौकिकविग्रहश्च। अत्रापि प्रस्तुतसूत्रेण सहशब्दस्य सादेशः।



## पाठगतप्रश्नाः-७

५६. "अव्ययीभावे चाकाले" इति सूत्रेण किं विधीयते।
५७. "अव्ययीभावे चाकाले" इति सूत्रस्यार्थः कः।
५८. "अव्ययीभावे चाकाले" इति सूत्रस्य किम् उदाहरणम्।
५९. आनुपूर्व्यार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।
६०. यौगपद्यार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।
६१. सादृश्यार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।
६२. सम्पत्त्यर्थे अव्ययीभावसमासस्य किम् उदाहरणम्।
६३. अन्तार्थे अव्ययीभावसमासस्य किम् उदाहरणम्।



## [१.१३] यावदवधारणे॥ (२.१.८)

**सूत्रार्थः** - अवधारणे अर्थे यावदित्यव्ययं सुबन्तेन समर्थेन सह समाससंज्ञं भवति, स च समासः अव्ययीभावसंज्ञः भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण अव्ययीभावसमासो विधीयते। पदद्वयात्मके अस्मिन् सूत्रे यावदित्यव्ययपदम् अवधारणे इति च सप्तम्येकवचनान्तं पदम्। अवधारणं नाम इयत्तापरिच्छेदः। अस्मिन् सूत्रे "समर्थः पदविधिः" इत्यस्मात् समर्थः इत्यधिक्रियते। "सह सुपा" इति सूत्रमनुवर्तते। समर्थस्य विशेषणत्वात् तदन्तविधौ सुबन्तेनेति भवति। समासः इति अव्ययीभावः इति चाधिकृतम्। एवम् "अवधारणे अर्थे यावदित्यव्ययं सुबन्तेन समर्थेन सह समाससंज्ञं भवति, स च समासः अव्ययीभावसंज्ञः भवती"ति सूत्रार्थः। अस्मिन् सूत्रे विग्रहवाक्ये यावदिति तद्धितान्तस्योपयोगो भवति समासे तु यावत् इत्यव्ययस्येति विशेषः।

उदाहरणम् - अस्य सूत्रस्योदाहरणं भवति यावच्छ्लोकम् इति। यावन्तः श्लोकाः इति लौकिकविग्रहे यावत् श्लोक जस् इत्यलौकिकविग्रहे प्रकृतसूत्रेण अवधारणार्थे विद्यमानस्य यावत् इत्यव्ययं श्लोक जस् इत्यनेन समर्थेन सुबन्तेन सह अव्ययीभावसमाससंज्ञं भवति। ततः "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन समासविधायकसूत्रे प्रथमानिर्दिष्टस्य यावदित्यस्य उपसर्जनसंज्ञायां तस्य पूर्वनिपाते यावत् श्लोक जस् इति जाते, समासस्य प्रातिपदिकत्वात् तदवयवस्य सुपः जस्प्रत्ययस्य लुकि यावत् श्लोक इति जाते चुत्वे छत्वे च निष्पन्नात् प्रातिपदिकात् यावच्छ्लोक इत्यस्मात् प्रथमैकवचने सौ सोरमि प्रक्रियाकार्ये यावच्छ्लोकम् इति रूपं निष्पन्नम्।

## [१.१४] सुप्प्रतिना मात्रार्थे॥ (२.१.९)

**सूत्रार्थः** - मात्रार्थे विद्यमानेन प्रतिना सह समर्थं सुबन्तम् अव्ययीभावसमाससंज्ञं भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण अव्ययीभावसमासो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे सुप् इति प्रथमान्तं प्रतिना इति तृतीयान्तं मात्रार्थे इति च सप्तम्यन्तं पदम्। मात्रार्थो नाम लेशः। अस्मिन् सूत्रे "समर्थः पदविधिः" इत्यस्मात् समर्थः इत्यधिक्रियते। "सह सुपा" इति सूत्रमनुवर्तते। समासः इति अव्ययीभावः इति च पदद्वयमधिकृतम्। एवं "मात्रार्थे विद्यमानेन प्रतिना सह समर्थं सुबन्तम् अव्ययीभावसमाससंज्ञं भवति" इति सूत्रार्थः।

उदाहरणम् - अस्य सूत्रस्योदाहरणं भवति शाकप्रति इति। शाकस्य लेशः इति लौकिकविग्रहे शाक ङस् प्रति इत्यलौकिकविग्रहे प्रकृतसूत्रेण मात्रार्थे विद्यमानस्य प्रति इत्यव्ययेन सह शाक ङस् इत्यनेन समर्थं सुबन्तम् अव्ययीभावसमाससंज्ञं भवति। ततः "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन समासविधायकसूत्रे सुबित्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य शाक ङस् इत्यस्य उपसर्जनसंज्ञायां तस्य पूर्वनिपाते शाक ङस् प्रति इति जाते, समासस्य प्रातिपदिकत्वात् तदवयवस्य सुपः ङस्प्रत्ययस्य लुकि निष्पन्नात् प्रातिपदिकात् शाकप्रति इत्यस्मात् प्रथमैकवचने सौ, अव्ययत्वात् सोर्लुकि शाकप्रति इति रूपं निष्पन्नम्।



## [१.१५] संख्या वंश्येन॥ (२.१.१९)

**सूत्रार्थः** - वंश्यवाचकेन सुबन्तेन सह संख्यावाचकं सुबन्तं विकल्पेन समाससंज्ञं भवति, स च अव्ययीभावसंज्ञकः भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण अव्ययीभावसमासो विधीयते। पदद्वयात्मके अस्मिन् सूत्रे संख्या इति प्रथमान्तं वंश्येन इति तृतीयान्तं पदम्। समासः अव्ययीभावः च इति पदद्वयमधिकृतम्। "सह सुपा" इत्यस्मात् सह सुपा इति पदद्वयमनुवर्तते। "विभाषा" इति सूत्रमधिक्रियते। विभाषा नाम विकल्पः। एवं "वंश्यवाचकेन सुबन्तेन सह संख्यावाचकं सुबन्तं विकल्पेन समाससंज्ञं भवति, स च अव्ययीभावसंज्ञकः भवति" इति सूत्रार्थः। वंश्यो नाम वंशे भवः। वंशो द्विविधः- विद्यया जन्मना च। जन्मना वंशः पुत्रादिपरम्परा इति प्रसिद्धः। विद्यया तु वंशः गुरुपरम्परा "स हि विद्यातस्तं जनयति। तच्छ्रेष्ठं जन्म। शरीरमेव मातापितरौ जनयतः" इत्यापस्तम्बवचनात्।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं भवति त्रिमुनि इति। त्रयः मुनयः इति लौकिकविग्रहे त्रि जस् मुनि जस् इत्यलौकिकविग्रहे प्रकृतसूत्रेण संख्यावाचकं त्रि जस् इति सुबन्तं मुनि जस् इत्यनेन सुबन्तेन सह अव्ययीभावसमाससज्ञं भवति। ततः "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन समासविधायकसूत्रे संख्येत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य त्रि जस् इत्यस्य उपसर्जनसंज्ञायां तस्य पूर्वनिपाते त्रि जस् मुनि जस् इति भवति। ततः समासस्य प्रातिपदिकत्वात् तदवयवस्य सुपः जस्प्रत्ययद्वयस्य लुकि त्रिमुनि इति भवति। ततः प्रातिपदिकात् प्रथमैकवचने सौ, अव्ययत्वात् सोर्लुकि त्रिमुनि इति रूपं निष्पन्नम्। एतदुदाहरणं विद्यया वंश्येन सहाव्ययीभावसमासस्य भवति। एवमेव जन्मना वंश्येन सह अव्ययीभावसमासस्य उदाहरणम् एकविंशतिभारद्वाजम् इति।



## पाठगतप्रश्नाः-८

६४. "यावदवधारणे" इति सूत्रस्यार्थः कः।

६५. "यावदवधारणे" इति सूत्रस्य किम् उदाहरणम्।

६६. "सुप्प्रतिना मात्रार्थे" इति सूत्रस्यार्थः कः।

६७. "सुप्प्रतिना मात्रार्थे" इति सूत्रस्य किम् उदाहरणम्।

६८. "संख्या वंश्येन" इति सूत्रस्यार्थः कः।

६९. "संख्या वंश्येन" इति सूत्रस्य किम् उदाहरणम्।

७०. वंशः कतिविधः।



## [१.१६] नदीभिश्च॥ (२.१.२०)

**सूत्रार्थः** - नदीविशेषवाचकेन सुबन्तेन सह संख्यावाचकं सुबन्तं विकल्पेन अव्ययीभावसमाससंज्ञं भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण अव्ययीभावसमासो विधीयते। पदद्वयात्मके अस्मिन् सूत्रे नदीभिः इति तृतीयाबहुवचनान्तं पदम्। च इत्यव्ययपदम्। चकारेण पूर्वस्मात् सूत्रात् संख्या अनुकृष्यते। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इति पदमनुवर्तते। "सह सुपा" इति सम्पूर्णं सूत्रमनुवर्तते। "प्राक्कडारात्समासः", "अव्ययीभावः", "विभाषा" इति सूत्रत्रयमधिकृतम्। नदीभिः इति बहुवचनग्रहणात् नदीसंज्ञकस्य गौर्यादेः शब्दस्य नदीशब्दस्य चात्र न ग्रहणम् अपि तु नदीविशेषस्य गङ्गादेर्ग्रहणम्। एवं "नदीविशेषवाचकेन सुबन्तेन सह संख्यावाचकं सुबन्तं विकल्पेन अव्ययीभावसमाससंज्ञं भवति" इति सूत्रार्थः।

"समाहारे चायमिष्यते" इति सूत्रस्थं वार्तिकम्। चकारः अत्रावधारणे। "समाहारार्थे एवानेन सूत्रेणाव्ययीभावसमासो भवति" इति वार्तिकार्थः।

उदाहरणम् - अस्य सूत्रस्योदाहरणं भवति पञ्चगङ्गम् इति। पञ्चानां गङ्गानां समाहारः इति लौकिकविग्रहे पञ्चन् आम् गङ्गा आम् इत्यलौकिकविग्रहे प्रकृतसूत्रेण संख्यार्थे विद्यमानं पञ्चन् आम् इति सुबन्तं नदीवाचकेन गङ्गा आम् इत्यनेन सुबन्तेन सह अव्ययीभावसमाससंज्ञं भवति। ततः समासविधायकसूत्रे अनुकृष्टस्य संख्या इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य पञ्चन् आम् इत्यस्य उपसर्जनसंज्ञायां तस्य पूर्वनिपाते पञ्चन् आम् गङ्गा आम् इति भवति। समासस्य प्रातिपदिकत्वात् तदवयवस्य सुपः आम्प्रत्ययद्वयस्य "सुपो धातुप्रातिपदिकयोः" इत्यनेन सूत्रेण लुकि पञ्चन् गङ्गा इति भवति। ततः लुप्तस्य सुपः "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनेन सूत्रेण प्रत्ययलक्षणेन "न लोपः प्रातिपदिकान्तस्य" इत्यनेन पञ्चन् इत्यस्य पदान्तस्य नकारस्य लोपे पञ्चगङ्गा इति शब्दः निष्पद्यते। ततः नपुंसकत्वात् आकारस्य "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यनेन ह्रस्वत्वे निष्पन्नात् पञ्चगङ्ग इत्यस्मात् प्रातिपदिकात् प्रथमैकवचने सौ, सोरमि प्रक्रियाकार्ये पञ्चगङ्गमिति रूपम्। एवमेव द्वयोः यमुनयोः समाहारः इति विग्रहे द्वियमुनम् इति रूपं निष्पद्यते।

## [१.१७] तद्धिताः॥ (४.१.७६)

**सूत्रार्थः** - पञ्चमाध्यायपरिसमाप्तिपर्यन्तं तद्धिताधिकारः।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदम् अधिकारसूत्रम्। अनेन तद्धिताधिकारः विधीयते। पञ्चमाध्यायपरिसमाप्तिपर्यन्तम् एतस्य सूत्रस्याधिकारः। तेन एतस्मात् सूत्रात् परं पञ्चमाध्यायपरिसमाप्तिं यावद् विद्यमानैः सूत्रैः विहितानां प्रत्ययानां तद्धितसंज्ञा भवति।



## [१.१८] समासान्ताः॥ (५.४.६८)

**सूत्रार्थः** - पञ्चमाध्यायस्य चतुर्थपादस्य परिसमाप्तिपर्यन्तं समासान्ताधिकारः।

**सूत्रव्याख्या** - इदम् अधिकारसूत्रम्। अनेन समासान्ताधिकारः विधीयते।पञ्चमाध्यायस्य चतुर्थपादस्य परिसमाप्तिपर्यन्तम् एतस्य सूत्रस्याधिकारः। तेन एतस्मात् सूत्रात् परं पञ्चमाध्यायपरिसमाप्तिं यावद् विद्यमानैः सूत्रैः विहितानां कार्याणां समासान्तसंज्ञा भवति।

## [१.१९] अव्ययीभावे शरत्प्रभृतिभ्यः॥ (५.४.१०७)

**सूत्रार्थः** - अव्ययीभावसमासे शरदादिभ्यः प्रातिपदिकेभ्यः परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। समासान्तस्य टच्प्रत्ययस्य विधानाय इदं सूत्रं प्रवृत्तम्। अस्मिन् सूत्रे पदद्वयं विद्यते। तत्र अव्ययीभावे इति सप्तम्येकवचनान्तं शरत्प्रभृतिभ्यः इति पञ्चमीबहुवचनान्तं पदम्। "तद्धिताः", "समासान्ताः", "प्रत्ययः", "परश्च", "ङ्याप्प्रातिपदिकात्" इति सूत्रपञ्चकस्य अत्र अधिकारः। शरत् प्रभृतिः येषां ते शरत्प्रभृतयः, तेभ्यः शरत्प्रभृतिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। "राजाहःसखिभ्यष्टच्" इत्यस्मात् सूत्रात् टच् इति प्रथमान्तम् अनुवर्तते। एवम् "अव्ययीभावसमासे शरदादिभ्यः प्रातिपदिकेभ्यः परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययः भवति" इति सूत्रार्थः।

उदाहरणम् - अस्य सूत्रस्योदाहरणं भवति उपशरदम् इति। शरदः समीपमिति लौकिकविग्रहे शरद् ङस् उप इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादिना सूत्रेण अव्ययीभावसमासे उपशरद् इति शब्दः निष्पद्यते। तदा शरदादिगणे शरद्-शब्दः पठितः। अतः उपशरद् इति अव्ययीभावसंज्ञकात् प्रस्तुतसूत्रेण समासान्तः टच्प्रत्ययः भवति। टचः टकारस्य "चुटू" इत्यनेन चकारस्य च "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे उपशरद् अ इति भवति। ततः सर्वसंयोगे निष्पन्नाद् उपशरद इत्यस्मात् प्रातिपदिकात् सौ सोरमि प्रक्रियाकार्ये उपशरदम् इति रूपम्। एवमेव प्रतिविपाशम् उपजरसम् इत्यादीनि रूपाणि सिध्यन्ति।



## पाठगतप्रश्नाः-९

७१. "नदीभिश्च" इति सूत्रस्यार्थः कः।

७२. "नदीभिश्च" इति सूत्रस्य किम् उदाहरणम्।

७३. समाहारार्थे एव "नदीभिश्च" इत्येनन सूत्रेण समासः कथम्।

७४. "तद्धिताः" इति सूत्रस्याधिकारः कियत्पर्यन्तम्।

७५. "समासान्ताः" इति सूत्रस्याधिकारः कियत्पर्यन्तम्।



७६. "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यस्य सूत्रस्य कः अर्थः।

७७. "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यत्र शरत्प्रभृतिभ्यः इत्यत्र कः समासः।

७८. "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यस्य सूत्रस्य किम् उदाहरणम्।

## [१.२०] अनश्च॥ (५.४.१०८)

**सूत्रार्थः** - अन्नन्ताद् अव्ययीभावात् समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। समासान्तटच्प्रत्ययस्य विधानाय इदं प्रवृत्तम्। अस्मिन् सूत्रे पदद्वयं विद्यते। तत्र अनः इति पञ्चम्येकवचनान्तं च इत्ययपदं च। अव्ययीभावे शरत्प्रभृतिभ्यः इत्यतः स्वीकृतस्य अव्ययीभावे इत्यस्य विभक्तिविपरिणामेन अव्ययीभावाद् इति भवति। अव्ययीभावाद् इत्यस्य विशेषणत्वाद् अनः तदन्तविधौ अन्नन्ताद् इति भवति। "तद्धिताः", "समासान्ताः", "प्रत्ययः", "परश्च", "ङ्याप्प्रातिपदिकात्" इति सूत्रपञ्चकस्य अत्र अधिकारः। "राजाहःसखिभ्यष्टच्" इत्यस्मात् सूत्रात् टच् इति प्रथमान्तम् अनुवर्तते। एवम् "अन्नन्ताद् अव्ययीभावात् परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययः भवति" इति सूत्रार्थः।

उदाहरणम् - अस्य सूत्रस्योदाहरणं भवति उपराजम् इति। राज्ञः समीपमिति लौकिकविग्रहे राजन् ङस् उप इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादिना सूत्रेण अव्ययीभावसमासे उपराजन् इति शब्दः निष्पद्यते। तदा उपराजन् इत्यस्मात् अन्नन्ताद् अव्ययीभावात् प्रस्तुतसूत्रेण समासान्तः टच्प्रत्ययः भवति। टचः टकारस्य "चुटू" इत्यनेन चकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे उपराजन् अ इति स्थिते उपराजन् इत्यस्य टेः लोपाय सूत्रं प्रवर्तते -

## [१.२१] नस्तद्धिते॥ (६.४.१४४)

**सूत्रार्थः** - नान्तस्य भसंज्ञकस्य टेः लोपः भवति तद्धिते परे।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। उपराजन् अ इति स्थिते नान्तस्य उपराजन् इत्यस्य टिलोपविधानाय इदं सूत्रं प्रवृत्तम्। अस्मिन् सूत्रे पदद्वयं विद्यते। तत्र नः इति षष्ठ्येकवचनान्तं तद्धिते इति च सप्तमेकवचनान्तं पदम्। "भस्य" इति सूत्रम् अधिकृतम्। "टेः" इति सूत्रात् टेः इति षष्ठ्यन्तं पदमनुवर्तते। "अल्लोपोऽनः" इत्यस्मात् सूत्रात् लोपः इति प्रथमान्तं पदमनुवर्तते। नः इति पदं भस्य विशेषणम्। अतस्तदन्तविधौ नकारान्तस्येति भवति। "नकारान्तस्य भसंज्ञकस्य टेः लोपः भवति तद्धिते परे" इति सूत्रार्थः।

उदाहरणम् - अव्ययीभावसमासे उपराजन् अ इति स्थिते तद्धिते टचि प्रत्यये परे "यचि भम्" इत्यनेन भसंज्ञा भवति। ततः प्रस्तुतसूत्रेण भसंज्ञकस्य उपराजन् इति शब्दस्य टेः अनः लोपे उपराज् अ इति जाते सर्वसंयोगे निष्पन्नाद् उपराजशब्दात् सौ, सोरमि प्रक्रियाकार्ये उपराजम् इति रूपं निष्पन्नम्।



## [१.२२] नपुंसकादन्यतरस्याम्॥ (५.४.१०९)

**सूत्रार्थः** - नपुंसकाद् अन्नन्ताद् अव्ययीभावात् परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययः विकल्पेन भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। विकल्पेन समासान्तटज्विधानाय प्रवृत्तमिदम्। अस्मिन् सूत्रे पदद्वयं विद्यते। तत्र नपुंसकाद् इति पञ्चम्येकवचनान्तम् अन्यतरस्याम् इति च विकल्पार्थकम् अव्ययपदम्। "अनश्च" इति सूत्रात् अनः इति "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यतः च अव्ययीभावे इति पदमनुवर्तते। अव्ययीभावे इत्यस्य विभक्तिविपरिणामेन अव्ययीभावाद् इति भवति। अव्ययीभावाद् इत्यस्य विशेषणत्वाद् अनः तदन्तविधौ अन्नन्ताद् इति भवति। "राजाहःसखिभ्यष्टच्" इत्यस्मात् सूत्रात् टच् इति प्रथमान्तम् अनुवर्तते। "तद्धिताः", "समासान्ताः", "प्रत्ययः", "परश्च", "ङ्याप्प्रातिपदिकात्" इति सूत्रपञ्चकस्य अत्र अधिकारः। एवम् "नपुंसकाद् अन्नन्ताद् अव्ययीभावात् परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययः विकल्पेन भवति" इति सूत्रार्थः।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं भवति उपचर्मम् इति। चर्मणः समीपमिति लौकिकविग्रहे चर्मन् ङस् उप इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादिना सूत्रेण अव्ययीभावसमासे उपचर्मन् इति शब्दः निष्पद्यते। उपचर्मन् इति अव्ययीभावसमासस्य अन्नन्तत्वात् नपुंसके विद्यमानत्वाच्च अनेन सूत्रेण विकल्पेन समासान्तः टच्प्रत्ययः भवति। टच्पक्षे उपचर्मन् अ इति स्थिते "नस्तद्धिते" इति सूत्रेण तद्धिते टचि प्रत्यये परे "यचि भम्" इत्यनेन भसंज्ञकस्य उपचर्मन् इति शब्दस्य टेः अनः लोपे सर्वसंयोगे उपचर्मशब्दो निष्पद्यते। ततः उपचर्मशब्दात् सौ सोरमि प्रक्रियाकार्ये उपचर्मम् इति रूपं निष्पन्नम्। टजभावपक्षे उपचर्मन् इति प्रातिपदिकात् सौ सोर्लुकि "न लोपः प्रातिपदिकान्तस्य" इत्यनेन नलोपे उपचर्म इति रूपं निष्पद्यते।

## [१.२३] झयः॥ (५.४.१११)

**सूत्रार्थः** - झयन्ताद् अव्ययीभावात् परः समासान्तः तद्धितः टच् विकल्पेन भवति।।

**सूत्रव्याख्या** - पाणिनिप्रणीतेषु षड्विधेषु सूत्रेषु इदं विधिसूत्रम्। विकल्पेन समासान्तटच्प्रत्ययविधायकमिदम्। अस्मिन् सूत्रे झयः इति पञ्चम्येकवचनान्तं पदम्। "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यतः च अव्ययीभावे इति पदमनुवर्तते। अव्ययीभावे इत्यस्य विभक्तिविपरिणामेन अव्ययीभावाद् इति भवति। अव्ययीभावाद् इत्यस्य विशेषणत्वाद् झयः तदन्तविधौ झयन्ताद् इति भवति। "नपुंसकादन्यतरस्याम्" इति सूत्राद् अन्यतरस्याम् इति पदमनुवर्तते। "राजाहःसखिभ्यष्टच्" इत्यस्मात् सूत्रात् टच् इति प्रथमान्तम् अनुवर्तते। "तद्धिताः", "समासान्ताः", "प्रत्ययः", "परश्च" इति सूत्रचतुष्कस्य अत्र अधिकारः। एवं "झयन्ताद् अव्ययीभावात् परः समासान्तः तद्धितः टच्प्रत्ययः विकल्पेन भवति" इति सूत्रार्थः।

उदाहरणम् - अस्य सूत्रस्योदाहरणं भवति उपसमिधम् इति। समिधः समीपमिति लौकिकविग्रहे समिध् ङस् उप इत्यलौकिकविग्रहे "अव्ययं विभक्ती"त्यादिना सूत्रेण अव्ययीभावसमासे उपसमिध् इति



शब्दः निष्पद्यते। उपसमिध् इति अव्ययीभावसमासस्य धकारस्य झय्त्वात् झयन्ताद् प्रस्तुतसूत्रेण विकल्पेन तस्मात् समासान्तः टच्प्रत्ययः भवति। टच्पक्षे उपसमिध् अ इति स्थिते सौ प्रक्रियाकार्ये उपसमिधम् इति रूपम्। टजभावपक्षे उपसमिध् इति प्रातिपदिकात् सौ उपसमित् इति रूपम्।



## पाठगतप्रश्नाः-१०

७९. "अनश्च" इत्यस्य सूत्रस्य कः अर्थः।

८०. "अनश्च" इत्यस्य सूत्रस्य किम् उदाहरणम्।

८१. "नस्तद्धिते" इत्यस्य सूत्रस्य कः अर्थः।

८२. "नस्तद्धिते" इत्यस्य सूत्रस्य किम् उदाहरणम्।

८३. "नपुंसकादन्यतरस्याम्" इत्यस्य सूत्रस्य कः अर्थः।

८४. "नपुंसकादन्यतरस्याम्" इत्यस्य सूत्रस्य किम् उदाहरणम्।

८५. झयः इति सूत्रस्य कः अर्थः।

८६. "झयः" इत्यस्य सूत्रस्य किम् उदाहरणम्।



## पाठसारः

पदविधिषु अन्यतमः भवति समासः। तस्य समासस्य लक्षणं तावत् "पाणिनीयसङ्केतसम्बन्धेन समासपदवत्त्वम्" इति। समासे च यानि समस्यमानानि पदानि तानि "समर्थः पदविधिः" इति सूत्रबलात् समर्थानि भवन्ति। सामर्थ्यं च हि समासे एकार्थीभावरूपम् इति सिद्धान्तः।

तस्य समासस्य भेदविषये बहूनां विप्रतिपत्तिरस्ति। सामान्यतया पञ्च भेदाः- केवलसमासः, अव्ययीभावः, तत्पुरुषः द्वन्द्वो बहुव्रीहिश्चेति। तेषु अस्मिन् पाठे केवलसमासस्य अव्ययीभावसमासस्य च विवरणं कृतम्।

अव्ययीभावः तत्पुरुषः बहुव्रीहिः द्वन्द्वः इत्यादिविशेषसंज्ञाविनिर्मुक्तः समासो भवति केवलसमासः। अव्ययीभावश्च प्रायेण पूर्वपदार्थप्रधानो भवति। अत्र "समर्थः पदविधिः" इति सूत्रवर्णनावसरे वृत्तिविग्रहादिपारिभाषिकानां शब्दानां विवेचनं कृतम्। ततः समासाधिकारः कियत्पर्यन्तम् इति बोधकं "प्राक्कडारात्समासः" इति सूत्रं प्रस्तुतम्। तत्सूत्रसामर्थ्यात् "कडाराः कर्मधारये" इत्यतः प्राक् पर्यन्तं समासाधिकारः। परं "सह सुपा" इति सूत्रस्य "इवेन सह समासो विभक्त्यलोपश्च" इति वार्तिकस्य केवलसमासविधायकस्य प्रतिपादनं जातम्। तत्र प्रसङ्गतः उपसर्जनसंज्ञाविधायकं "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रं पूर्वनिपातविधायकं च "उपसर्जनं पूर्वम्" इति सूत्रं प्रस्तुतम्।



ततः समासस्य प्रातिपदिकसंज्ञकस्य अवयवभूतस्य सुपो लोपविधायकं "सुपो धातुप्रातिपदिकयोः" इति सूत्रं व्याख्यातम्।

अव्ययीभावसमासस्य अधिकारं बोधयति "अव्ययीभावः" इति सूत्रम्। ततः "अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावाऽत्ययाऽसम्प्रति-शब्दप्रादुर्भाव- पश्चाद्-यथाऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्याऽन्तवचनेषु" इति सूत्रस्य अव्ययीभावसमाससंज्ञकस्य व्याख्यानावसरे बहूनि अव्ययीभावकार्यविधायकानि सूत्राणि व्याख्यातानि। तत्र "अव्ययीभावश्च" इत्यव्ययीभावस्य नपुंसकत्वविधायकम्। गोपि इति विग्रहे अधिगोप इति स्थिते अदन्ताद् अव्ययीभावात्परस्य सोरमादेशविधायकं "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" "तृतीयासप्तम्योर्बहुलम्" इति सूत्रद्वयं व्याख्यातम्।

ततः हरेः सादृश्यम् इति लौकिकविग्रहे सहहरि इति स्थिते सहस्य सादेशविधायकम् "अव्ययीभावे चाकाले" इति सूत्रं प्रस्तुतम्। ततः अव्ययीभावसमासविधायकानि "यावदवधारणे", "सुप्प्रतिना मात्रार्थे", "संख्या वंश्येन", "नदीभिश्च" इत्येतानि चत्वारि सूत्राणि अस्मिन् पाठे प्रस्तुतानि। ततः "तद्धिताः" "समासान्ताः" इत्यधिकारद्वयस्य वर्णनं विहितम्। "अव्ययीभावे शरत्प्रभृतिभ्यः", "अनश्च" इति अव्ययीभावसमासान्तस्य टच्प्रत्ययस्य विधायकं सूत्रद्वयं व्याख्यातम्। ततः उपराजम् इत्यादौ टिलोपाय "नस्तद्धिते" इति सूत्रं व्याख्यातम्। तस्मात्परं टचो विकल्पेन विधायकं "नपुंसकादन्यतरस्याम्" "झयः" इति सूत्रद्वयं प्रस्तुतम्। एवम् अस्मिन् पाठे केवलसमासस्य अव्ययीभावसमासस्य विधायकानि तत्सम्बन्धिकार्यविधायकानि च सूत्राणि प्रतिपादितानि।



## पाठान्तप्रश्नाः

१. "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रं व्याख्यात।

२. "अव्ययं विभक्ति" इत्यादिसूत्रं व्याख्यात।

३. उपकृष्णम् इति रूपं साधयत।

४. अधिहरि इति रूपं साधयत।

५. यथाशक्ति इति रूपं साधयत।

६. "संख्या वंश्येन" इति सूत्रं व्याख्यात।

७. "अव्ययीभावे चाकाले" इति सूत्रं व्याख्यात।

८. "अव्ययीभावे शरत्प्रभृतिभ्यः" इति सूत्रं व्याख्यात।

९. उपशरदम् इति रूपं साधयत।

१०. उपसमिधम् इति रूपं साधयत।





## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. परिभाषासूत्रम्।

२. समर्थाश्रितः।

३. पदसम्बन्धी विधिः।

४. पदसम्बन्धी यो विधिः सः समर्थाश्रितो भवति।

५. परार्थाभिधानं वृत्तिः।

६. पञ्च।

७. वृत्त्यर्थावबोधकं वाक्यं विग्रहः।

८. विग्रहस्य द्वौ भेदौ।

९. अधिकारसूत्रम्।

१०. "कडाराः कर्मधारये" (२.२.३८) इति सूत्रस्य ग्रहणम्।

### उत्तराणि-२

११. द्वयोः सुबन्तयोः समासः भवति।

१२. सुबन्तं सुबन्तेन सह समस्यते इति।

१३. भूतपूर्वः।

१४. उपसर्जनसंज्ञा ।

१५. समासविधायकसूत्रस्य ग्रहणम्।

१६. "समासविधायकसूत्रे यत् प्रथमान्तं तद्बोध्यम् उपसर्जनसंज्ञं भवति" इति।

१७. प्रथमानिर्दिष्टं नाम प्रथमान्तपदबोध्यम्।

१८. प्रथमानिर्दिष्टं समासे इति संज्ञिदलम्, उपसर्जनम् इति च संज्ञापदम्।

१९. उपसर्जनसंज्ञकस्य पूर्वनिपातः भवति।

२०. समासे उपसर्जनसंज्ञकं पूर्वं प्रयोज्यम् इति सूत्रस्यार्थः।

२१. कृष्णश्रितः इति।

### उत्तराणि-३

२२. लुक् भवति।

२३. धातोः प्रातिपदिकस्य च अवयवस्य सुपः लुक् भवति।

२४. धातुप्रातिपदिकयोः इति षष्ठीविभक्तिः अस्ति। इतरेतरयोगद्वन्द्वः अस्ति।



२५. भूतपूर्वे चरडिति निर्देशात्।

२६. भूतपूर्वः।

२७. इवेति शब्देन सह सुबन्तं समाससंज्ञं भवति। समासावयवविभक्तेः लोपो न भवति।

२८. वागर्थाविव।

## उत्तराणि-४

२९. अधिकारसूत्रम्।

३०. तत्पुरुषः इत्यस्मात् सूत्रात् प्राक् अव्ययीभावः इत्यधिकारः।

३१. विभक्त्यर्थादिषु वर्तमानम् अव्ययं सुबन्तेन सह नित्यं समस्यते।

३२. विभक्तिपदम् अधिकरणकारकं बोधयति।

३३. "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायाद् वचनशब्दस्य विभक्तिप्रभृतिभिः प्रत्येकं सम्बन्धः भवति।

३४. ऋद्धेराधिक्यं समृद्धिः, सम्पत्तिः नाम अनुरूप आत्मभावः।

३५. पदार्थस्यानुल्लङ्घनम्।

३६. सादृश्यस्य गौणत्वे अपि समासविधानाय सूत्रे पुनः सादृश्यग्रहणम्।

## उत्तराणि-५

३७. नपुंसकत्वं विधीयते।

३८. अव्ययीभावसमाससंज्ञकः शब्दः नपुंसकं भवति।

३९. विधिसूत्रम्।

४०. अमादेशः।

४१. अदन्ताद् अव्ययीभावात् सुपः न लुक्, तस्य पञ्चमीं विना अमादेशश्च भवति।

## उत्तराणि-६

४२. विधिसूत्रम्।

४३. अमादेशः।

४४. अदन्ताद् अव्ययीभावात् तृतीयासप्तम्योः बहुलम् अमादेशः भवति।

४५. उपकृष्णम्।

४६. सुमद्रम्।

४७. दुर्यवनम्।

४८. निर्मक्षिकम्।

४९. अतिहिमम्।



५०. अतिनिद्रम्।

५१. इतिहरि।

५२. अनुविष्णु।

५३. अनुरूपम्।

५४. प्रत्यर्थम्।

५५. यथाशक्ति।

## उत्तराणि-७

५६. सहशब्दस्य सादेशो विधीयते।

५७. सहशब्दस्य सादेशः भवति अव्ययीभावे, कालविशेषवाचके उत्तरपदे परे न भवति।

५८. सहरि।

५९. अनुज्येष्ठम्।

६०. सचक्रम्।

६१. ससखि।

६२. सक्षत्रम्।

६३. साग्नि।

## उत्तराणि-८

६४. अवधारणे अर्थे यावदित्यव्ययं सुबन्तेन समर्थेन सह समाससंज्ञं भवति, स च समासः अव्ययीभावसंज्ञः भवति।

६५. यावच्छलोकम्।

६६. मात्रार्थे विद्यमानेन प्रतिना सह समर्थं सुबन्तम् अव्ययीभावसमाससंज्ञं भवति।

६७. शाकप्रति।

६८. वंश्यवाचकेन सुबन्तेन सह संख्यावाचकं सुबन्तं विकल्पेन समाससंज्ञं भवति, स च अव्ययीभावसंज्ञकः भवति।

६९. त्रिमुनि।

७०. द्विविधः।

## उत्तराणि-९

७१. नदीविशेषवाचकेन सुबन्तेन सह संख्यावाचकं सुबन्तं विकल्पेन अव्ययीभावसमाससंज्ञं भवति।

७२. पञ्चगङ्गम्।

७३. "समाहारे चायमिष्यते" इति सूत्रस्थवार्तिकबलेन।

७४. पञ्चमाध्यायसमाप्तिपर्यन्तम्।



७५. पञ्चमाध्यायस्य चतुर्थपादस्य परिसमाप्तिपर्यन्तम् एतस्य सूत्रस्याधिकारः।

७६. अव्ययीभावसमासे शरदादिभ्यः प्रातिपदिकेभ्यः परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

७७. तद्गुणसंविज्ञानबहुव्रीहिः।

७८. उपशरदम्।

## उत्तराणि-१०

७९. अन्नन्ताद् अव्ययीभावात् समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

८०. उपराजम्।

८१. नान्तस्य भसंज्ञकस्य टेः लोपः भवति तद्धिते परे।

८२. उपराजन्।

८३. नपुंसकाद् अन्नन्ताद् अव्ययीभावात् परः समासान्तः तद्धितसंज्ञकः टच्प्रत्ययः विकल्पेन भवति।

८४. उपचर्मम्।

८५. झयन्ताद् अव्ययीभावात् परः समासान्तः तद्धितः टच् विकल्पेन भवति।

८६. उपसमिधम्।

## ।। इति प्रथमः पाठः ।।



# २

# तत्पुरुषसमासः - द्वितीयादितत्पुरुषसमासः

## प्रस्तावना

अव्ययीभावसमासात्परं तत्पुरुषः उपस्थाप्यते। "तत्पुरुषः" इत्यधिकृत्य अयं समासः प्रवर्तते। प्रायेण उत्तरपदार्थप्रधानः अयं समासः। उत्तरपदस्यार्थः उत्तरपदार्थः। उत्तरपदार्थः प्रधानः यस्मिन् स उत्तरपदार्थप्रधानः। यथा राज्ञः पुरुषः इति विग्रहे राजपुरुषः इति। अत्र समस्यमानयोः पदयोः उत्तरपदस्य पुरुषपदस्यार्थ एव प्रधानः। यथा राजपुरुषमानय इत्युच्यते चेत् पुरुषरूपार्थस्य आनयनम् इष्टं न तु राजन्पदार्थस्य राज्ञः। एवं सामान्यतया उत्तरपदार्थप्राधान्यं तत्पुरुषसमासे दृश्यते।

अयं च तत्पुरुषसमासः समानाधिकरणः व्यधिकरणः चेति द्विधा विभक्त इति वक्तुं शक्यते। समानम् अधिकरणं ययोस्ते समानाधिकरणे। समानविभक्तिके पदे इति। समानाधिकरणे अस्य स्तः इति समानाधिकरणः इति अर्शआदित्वादच्प्रत्ययः। एवमेव व्यधिकरणे नाम असमानविभक्तिके पदे। व्यधिकरणे अस्य स्तः इति व्यधिकरणः इति अर्शआदित्वादच्प्रत्ययः। अर्थाद् यस्मिन् तत्पुरुषे समस्यमानानि पदानि समानविभक्तिकानि न सन्ति। अस्मिन् पाठे आदौ तत्पुरुषाधिकारस्य वर्णनमस्ति। ततः विशेषप्रयोजनसाधनाय द्विगुसमासस्य तत्पुरुषसंज्ञा वर्णिता। ततः व्यधिकरणतत्पुरुषसमासविधायकानां द्वितीया श्रितातीतेत्यादीनां सूत्राणामालोचनम् अत्र भवति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्/भवती -

- तत्पुरुषाधिकारपरिधिं जानीयात्।
- द्विगोः तत्पुरुषसंज्ञा भवति इति जानीयात्।
- व्यधिकरणतत्पुरुषविधायकानि सूत्राणि जानीयात्।
- षष्ठीसमासनिषेधकानि सूत्राणि जानीयात्।



## [२.१] तत्पुरुषः॥ (२.१.२२)

**सूत्रार्थः** - "शेषो बहुव्रीहिः" इत्यस्मात् सूत्रात् पूर्वपर्यन्तं तत्पुरुषाधिकारः।

**सूत्रव्याख्या** - इदम् अधिकारसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासाधिकारः विधीयते। सूत्रेऽस्मिन् तत्पुरुषः इति पदं प्रथमैकवचनान्तम्। "प्राक्कडारात्समासः" इत्यधिक्रियते अत्र। तत्पुरुषसमासस्याधिकारः अनेन सूत्रेण विधीयते। अयमधिकारः "शेषो बहुव्रीहिः" (२.२.२३) इत्यस्मात् सूत्रात्प्राक्पर्यन्तम्। एवं "तत्पुरुषः" इत्यस्मात् सूत्रात् "शेषो बहुव्रीहिः" (२.२.२३) इत्यतः प्राग् सूत्रैः यः समासः विधीयते स तत्पुरुषसंज्ञको भवति।

## [२.२] द्विगुश्च॥ (२.१.२३)

**सूत्रार्थः** - द्विगुरपि तत्पुरुषसंज्ञकः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण द्विगुसमासस्य तत्पुरुषसंज्ञा विधीयते। सूत्रेऽस्मिन् द्विगुः इति पदं प्रथमैकवचनान्तं, चेत्यव्ययपदम्। "तत्पुरुषः" इति पूर्वसूत्राद् अधिकृतम्। तत्पुरुषः इति संज्ञापदं द्विगुरिति संज्ञिपदम्। एवं सूत्रार्थः भवति - "द्विगुरपि तत्पुरुषसंज्ञः भवति" इति।

इतः अग्रे "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन सूत्रेण तत्पुरुषाधिकारे समासत्रयस्य विधानम् अभवत्। त्रिषु च समासेषु यस्मिन् समासे पूर्वपदं संख्यावाचकं भवति तस्य समासस्य "संख्यापूर्वो द्विगुः" इत्यनेन सूत्रेण द्विगुसंज्ञा विधीयते। "आकडारादेका संज्ञा" इति एकसंज्ञाधिकाराद् अन्यथा तत्पुरुषस्य बाधको भवति द्विगुः। परन्तु द्विगोः तत्पुरुषसंज्ञा अभीष्टा, अतः विशेषेण सूत्रेण तत्पुरुषसंज्ञाया विधानं कृतम्। तेन पञ्चानां राजानां समाहारः इति विग्रहे पञ्चराजन् इत्यत्र तत्पुरुषसमासान्तस्य "राजाहःसखिभ्यष्टच्" इति टचः प्रवृत्तिर्भवति। ततः प्रक्रियाकार्ये पञ्चराजम् इति निष्पद्यते।

## [२.३] द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥ (२.१.२४)

**सूत्रार्थः** - द्वितीयान्तं सुबन्तं श्रितादिप्रकृतिकैः सुबन्तैः सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण द्वितीयातत्पुरुषसमासो भवति। सूत्रेऽस्मिन् द्वितीया इति प्रथमैकवचनान्तं श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः इति तृतीयाबहुवचनान्तं पदम्। श्रितश्च अतीतश्च पतितश्च गतश्च अत्यस्तश्च प्राप्तश्च आपन्नश्च श्रितातीतपतितगतात्यस्तप्राप्तापन्नाः, तैः इति इतरेतरयोगद्वन्द्वसमासः। "सह सुपा" इत्यस्मात् सूत्रात् सुपा इत्यस्यानुवृत्तिः भवति। तस्य च श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः इत्यस्य विशेषणत्वाद् वचनविपरिणामेन तदन्तविधौ सुबन्तैः इति लभ्यते। अत्र शङ्का समुदेति यत् श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः इत्यस्य सुबन्तैः इत्यस्य च कथं सामानाधिकरण्यमिति। यतो हि श्रितादीनां सुबन्तत्वं नास्ति। येषां च सुबन्तत्वं तेषां श्रितादित्वं नास्ति। अतःश्रितादीनां शब्दानां तत्प्रकृतिके लक्षणा। अर्थात् श्रितादयः प्रकृतयः येषां ते श्रितादिप्रकृतिकाः अत्र श्रितादिपदेन गृह्यन्ते। श्रितादिभिः सुबन्तैः इत्यस्य श्रितादिप्रकृतिकैः सुबन्तैः इत्यर्थः।



"प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" "विभाषा" इति सूत्रचतुष्टयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे " इत्यस्मात् सुप् इति पदमनुवर्तते। ततः तदन्तविधौ सुबन्तम् इति। सुबन्तम् इत्यस्य विशेषणत्वाद् द्वितीया इत्यस्य तदन्तविधौ द्वितीयान्तं सुबन्तम् इति भवति। एवं सूत्रार्थः समायाति - "द्वितीयान्तं सुबन्तं श्रितादिप्रकृतिकैः सुबन्तैः सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति।

अत्र द्वितीयान्तं समर्थेन सुबन्तेन समस्यते। स च तत्पुरुषसमासः। अतः अयं समासः द्वितीयातत्पुरुषः इत्यभिधीयते।

**उदाहरणम् -** एतस्य सूत्रस्योदाहरणं भवति कृष्णश्रितः इति। कृष्णं श्रितः इति लौकिकविग्रहे कृष्ण अम् श्रित सु इत्यलौकिकविग्रहे प्रस्तुतसूत्रेण द्वितीयान्तं कृष्ण अम् इति सुबन्तं श्रित सु इति श्रितप्रकृतिकेन सुबन्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकसूत्रे द्वितीया इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य कृष्ण अम् इत्यस्य "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेनोपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इत्यनेन पूर्वनिपाते कृष्ण अम् श्रित सु इति भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सूत्रेण प्रातिपदिकावयवस्य सुपः अमः सोश्च लुकि कृष्णश्रित इति भवति। "एकदेशविकृतमनन्यवत्" इति न्यायेन कृष्णश्रितशब्दस्य प्रातिपदिकत्वस्याक्षयात् ततः प्रथमैकवचनविवक्षायां सौ कृष्णश्रित सु इति भवति। सोः उकारस्य "उपदेशेजनुनासिक इत्" इत्यनेन सूत्रेण इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे कृष्णश्रित स् इति भवति। ततः "सुप्तिङन्तं पदम्" इत्यनेन समुदायस्य पदसंज्ञायां "ससजुषो रुः" इत्यनेन सस्य रुत्वे, "खरवसानयोर्विसर्जनीयः" इत्यनेन सूत्रेण पदान्तस्य रेफस्य विसर्गादेशे कृष्णश्रितः इति रूपं सिध्यति।

एवमेव दुःखम् अतीतः दुःखातीतः, नरकं पतितः नरकपतितः, ग्रामं गतः ग्रामगतः, ग्राममत्यस्तः ग्रामात्यस्तः, ग्रामं प्राप्तः ग्रामप्राप्तः, संशयम् आपन्नः संशयापन्नः इत्यादिकम् एतस्य सूत्रस्योदाहरणम्।



## पाठगतप्रश्नाः-१

१. "तत्पुरुषः" इत्यधिकारः कियत्पर्यन्तम्।
२. द्विगुश्च" इति सूत्रस्यार्थः कः।
३. द्विगुसमासस्य तत्पुरुषसंज्ञाविधाने किं प्रयोजनम्।
४. "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति सूत्रेण किं विधीयते।
५. "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति सूत्रस्यार्थः कः।
६. श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः इत्यत्र कः समासः, कश्च विग्रहः।
७. श्रितादिशब्दानां कस्मिन् लक्षणा।
८. "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।



## [२.४] तृतीया तत्कृतार्थेन गुणवचनेन॥ (२.१.३०)

**सूत्रार्थः** - तृतीयान्तं सुबन्तं तृतीयान्तार्थकृतगुणवचनेन अर्थशब्देन च सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

सूत्रावतरणम् - इदं विधिसूत्रम्। अनेन सूत्रेण तृतीयातत्पुरुषसमासो भवति।

**सूत्रव्याख्या** - सूत्रेऽस्मिन् तृतीया तत्कृत अर्थेन गुणवचनेन इति पदच्छेदः। तृतीया इति प्रथमैकवचनान्तं पदम्। तत्कृत इति लुप्ततृतीयान्तं पदम्। अर्थेन गुणवचनेनेति पदद्वयं तृतीयैकवचनान्तम्। "प्राक्कडारात्समासः", "तत्पुरुषः", "विभाषा" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे " इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सुबन्तमिति भवति। सुबन्तस्य विशेषणत्वात् तृतीया इत्यस्य तदन्तविधौ तृतीयान्तमिति लभ्यते।

"छन्दोवत्सूत्राणि भवन्ति" इति भाष्यवचनात् "सुपां सुलुक्" इत्यादिना सूत्रेण तृतीयैकवचनस्य लुकि तत्कृत इति रूपम्। तत्कृतेनेत्यर्थः। तेन कृतं तत्कृतम्, तेनेति तृतीयातत्पुरुषः। तत्कृतपदस्य तृतीयान्तार्थाकृत इत्यर्थः। गुणमुक्तवान् इति विग्रहे "कृत्यल्युटो बहुलम्" इत्यत्र बहुलग्रहणात् कर्त्रर्थे भूतकाले ल्युटि गुणवचनशब्दो निष्पद्यते। ये शब्दाः पूर्वं गुणवाचकाः आसन् इदानीं द्रव्यवाचकास्ते एव गुणवचनशब्देन गृह्यन्ते। यथा श्वेतशब्दस्य गुणवाचकस्य गुणगुणिनोरभेदोपचारात् श्वेतगुणविशिष्टपदार्थः इत्यर्थः स्वीक्रियते। अथवा तस्मान्मतुपि "गुणवचनेभ्यो मतुपो लुगिष्टः" इति वार्तिकेन मतुपः लुकि श्वेतशब्दस्य श्वेतगुणविशिष्टपदार्थवाचकत्वम् अस्ति। एवं च श्वेतशब्दः गुणवचनः। तत्कृत इत्यस्य गुणवचनेन इत्यत्रान्वयः। एवमत्रार्थः तृतीयान्तार्थकृतेन गुणवचनेन इति। अर्थेनेत्यस्य अर्थप्रकृतिकेन सुबन्तेनेत्यर्थः। अस्य सूत्रस्यार्थः- "तृतीयान्तं सुबन्तं तृतीयान्तार्थकृत-गुणवचनेन अर्थशब्देन च सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति।

अत्र तृतीयान्तं समर्थेन सुबन्तेन समस्यते। स च तत्पुरुषसमासः। अतः अयं समासः तृतीयातत्पुरुषः इत्यभिधीयते।

**उदाहरणम्** - तृतीयान्तस्य तृतीयान्तार्थगुणवचनेन सह समासे एतस्य सूत्रस्योदाहरणं भवति शङ्कुलाखण्डः इति। अत्र खण्डशब्दः खण्डनगुणबोधको भूत्वा ततः खण्डनगुणविशिष्टस्यांशस्य बोधकः। शङ्कुलया खण्डः इति लौकिकविग्रहे शङ्कुला टा खण्ड सु इत्यलौकिकविग्रहे प्रस्तुतसूत्रेण तृतीयान्तं शङ्कुला टा इति सुबन्तं खण्ड सु इति तृतीयान्तार्थगुणवचनेन सुबन्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकसूत्रे तृतीया इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य शङ्कुला टा इत्यस्योपसर्जनत्वात् पूर्वनिपाते शङ्कुला टा खण्ड सु इति भवति। ततः समासस्य प्रातिपदिकत्वात् प्रातिपदिकावयवस्य सुपः टाप्रत्ययस्य सोश्च लुकि शङ्कुलाखण्ड इति शब्दो निष्पद्यते। तस्य प्रातिपदिकत्वात् प्रथमैकवचनविवक्षायां सौ शङ्कुलाखण्डः इति रूपम्।

अर्थप्रकृतिकेन सुबन्तेन सह तृतीयान्तस्य समासे उदाहरणं भवति धान्येनार्थो धान्यार्थः इति।



## [२.५] कर्तृकरणे कृता बहुलम्॥ (२.१.३२)

**सूत्रार्थः** - कर्तरि करणे च विद्यमानं तृतीयान्तं सुबन्तं कृदन्तेन सह बहुलं तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तृतीयातत्पुरुषसमासो भवति। पदत्रयात्मके सूत्रेऽस्मिन् कर्तृकरणे इति सप्तम्येकवचनान्तम्, कृता इति तृतीयैकवचनान्तम् बहुलम् इति प्रथमैकवचनान्तं पदम्। तृतीया तत्कृतार्थेन गुणवचनेन इत्यस्मात् सूत्रात् तृतीया इति प्रथमान्तम् अनुवर्तते। "प्राक्कडारात्समासः", "तत्पुरुषः", "विभाषा" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सुबन्तम् इति भवति। कर्ता च करणं च कर्तृकरणम्, तस्मिन् कर्तृकरणे इति समाहारद्वन्द्वः। तृतीयेत्यस्य सुबन्तम् इत्यस्य विशेषणत्वात् तदन्तविधौ तृतीयान्तं सुबन्तमिति लभ्यते। कर्तृकरणे इत्यस्य तृतीयान्तं सुबन्तमित्यनेनान्वयः। तेन कर्तरि करणे च विद्यमानं तृतीयान्तं सुबन्तमित्यर्थः। सुपा इत्यत्र तदन्तविधौ सुबन्तेनेति। सुबन्तेनेत्यस्य विशेषणत्वात् कृता इत्यस्य तदन्तविधौ कृदन्तेन सुबन्तेनेति लभ्यते। कृदन्तस्य सुबन्तत्वाभावात् कृदन्तशब्देन कृदन्तप्रकृतिकस्य ग्रहणम्। एवं कृदन्तप्रकृतिकेन सुबन्तेनेति तात्पर्यम्। "कर्तरि करणे च विद्यमानं तृतीयान्तं सुबन्तं कृदन्तेन सह बहुलं तत्पुरुषसमाससंज्ञं भवति" इति सूत्रार्थः।

सूत्रे बहुलग्रहणं कृतम्। बहुलशब्दस्य अर्थः-

"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।

विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति।।" इति।

अतः कर्तरि करणे च या तृतीया तदन्तमपि क्वचिन्न समस्यते। क्वचित्तु विभक्त्यन्तरमपि समस्यते।

"कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणम्" इति परिभाषायाः अस्मिन् सूत्रे उपयोगः अस्ति। "कृदन्तस्य ग्रहणे गतिपूर्वस्य कारकपूर्वस्यापि कृदन्तस्य ग्रहणं भवति" इति परिभाषार्थः। सूत्रे कृता इत्यनेन कृदन्तग्रहणादत्र प्रसङ्गतः गतिपूर्वस्यापि कृदन्तस्यापि ग्रहणं भवति।

**उदाहरणम्** - कर्तरि तृतीयान्तस्य कृदन्तेन समासस्योदाहरणं हरित्रातः। त्रातशब्दः कृदन्तः, हरिश्चात्र तृतीयान्तः कर्ता। हरिणा त्रातः इति लौकिकविग्रहे हरि टा त्रात सु इत्यलौकिकविग्रहे प्रकृतसूत्रेण कर्तरि विद्यमानं हरि टा इति सुबन्तं त्रात सु इति सुबन्तेन सह तत्पुरुषसंज्ञं भवति। ततः प्रक्रियाकार्ये निष्पन्नात् हरित्रातशब्दात् प्रथमैकवचने सौ हरित्रातः इति रूपम्। करणे समासस्योदाहरणं भवति नखैर्भिन्नः नखभिन्नः इति। भेदनक्रियायां नखाः करणानि, भिन्नशब्दश्च कृदन्तः।

बहुलग्रहणात् समासाभावस्योदाहरणं यथा दात्रेण लूनवान् इत्यादि। विभक्त्यन्तरमपि समस्यते इत्यस्योदाहरणं यथा पादहारकः इत्यादि। ह्रियते इति हारकः, बाहुलकात् कर्मणि ण्वुल्। पादाभ्यामिति अपादानपञ्चम्यन्तस्य समासः।



गतिपूर्वकस्य ग्रहणे नखनिर्भिन्नः इत्युदाहरणम्। अत्र निर्भिन्नः इत्यत्र निर् इति गतिसंज्ञकः। एवं निर्भिन्नः इति गतिपूर्वकेन कृदन्तेन सह नखैः इति करणे तृतीयान्तं वार्तिकसाहाय्येन प्रस्तुतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। तेन नखनिर्भिन्नः इति रूपम्।



## पाठगतप्रश्नाः-२

९. "तृतीया तत्कृतार्थेन गुणवचनेन" इति सूत्रस्यार्थः कः।

१०. तत्कृत इत्यस्यार्थः कः।

११. गुणवचनपदेन कस्य ग्रहणम्।

१२. "तृतीया तत्कृतार्थेन गुणवचनेन" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।

१३. "कर्तृकरणे कृता बहुलम्" इति सूत्रस्यार्थः कः।

१४. बहुलग्रहणस्य किं फलम्।

१५. "कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणम्" इति परिभाषाया अर्थः कः।।

१६. "कर्तृकरणे कृता बहुलम्" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।

---

## [२.६] चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः॥ (२.१.३६)

**सूत्रार्थः** - चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थबलिहितसुखरक्षितैः सह चतुर्थ्यन्तं सुबन्तं विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण चतुर्थीतत्पुरुषसमासो भवति। सूत्रमिदं पदद्वयात्मकम्। तत्र चतुर्थी इति प्रथमैकवचनान्तं तथा तदर्थार्थबलिहितसुखरक्षितैः इति तृतीयाबहुवचनान्तं पदम्। समासः, सुप्, सह सुपा, विभाषा, तत्पुरुषश्चेत्येतानि पदानि पूर्वतोऽधिकृतानि। तदर्थञ्च अर्थश्च बलिश्च हितञ्च सुखञ्च रक्षितञ्च तदर्थार्थबलिहितसुखरक्षितानि तैः तदर्थार्थबलिहितसुखरक्षितैः इति इतरेतरद्वन्दः। "प्राक्कडारात्समासः", "तत्पुरुषः", "विभाषा" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सुबन्तम् इति भवति। "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया चतुर्थीत्यत्र तदन्तविधौ चतुर्थ्यन्तं सुबन्तम् इति भवति।

सूत्रे तदंशेन चतुर्थ्यन्तं परामृश्यते। तेन तदर्थ इत्युक्ते चतुर्थ्यन्तार्थ इति गम्यते। किञ्च, चतुर्थ्यन्तस्य शब्दस्वरूपतया तेन कस्यचिद्वस्तुनः परामर्शाभावात् लक्षणया चतुर्थ्यन्तेन तद्वाच्यं तदेव गृह्यते। तस्मात् "चतुर्थ्यन्तवाच्यं यत् तद्वाचिना अर्थादिसुबन्तैश्च चतुर्थ्यन्तं सुबन्तं विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इत्यर्थो लभ्यते।



अत्र चतुर्थ्यन्तं समर्थेन सुबन्तेन समस्यते। स च तत्पुरुषसमासः। अतः अयं समासः चतुर्थीतत्पुरुषः इत्यभिधीयते।

एतस्य सूत्रस्य व्याख्यानावसरे "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति वार्त्तिकं प्रवर्तते। "अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमासः समासे च विशेष्यलिङ्गता च भवति" इति वार्तिकस्यास्यार्थः। अनेन वार्तिकेन अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमासो विधीयते, अन्यथा विभाषाधिकारात् अर्थेन समासे विकल्पापत्तिः स्यात्। तत्रेदमप्यवधेयं यदर्थेन समस्यमानस्य शब्दस्वरूपस्य विशेषणात्मकत्वात् प्रधानीभूतस्य विशेष्यस्य स्वलिङ्गतेष्टा। अन्यथा अर्थशब्दस्य नित्यपुंस्त्वात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन सर्वत्रैव पुंस्त्वमेव स्यात्।

**उदाहरणम्** - तदर्थस्योदाहरणं यथा यूपदारु इति। यूपाय दारु इति लौकिकविग्रहे यूप ङे दारु सु इत्यलौकिकविग्रहे प्रस्तुतसूत्रेण चतुर्थ्यन्तं यूप ङे इति सुबन्तं दारु सु इति तदर्थेन सुबन्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकसूत्रे चतुर्थी इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य यूप ङे इत्यस्योपसर्जनत्वात् पूर्वनिपाते यूप ङे दारु सु इति भवति। ततः समासस्य प्रातिपदिकत्वात् प्रातिपदिकावयवस्य सुपः ङेप्रत्ययस्य सोश्च लुकि यूपदारु इति शब्दो निष्पद्यते। तस्य प्रातिपदिकत्वात् प्रथमैकवचनविवक्षायां सौ यूपदारु इति रूपम्।

ननु रन्धनाय स्थाली इत्यत्रापि तदर्थसत्त्वात् तेन चतुर्थ्यन्तस्य सुबन्तस्य समासोऽस्तु इति शङ्का। अत्र समाधानमुच्यते यत् सूत्रे तदर्थशब्देन यत्र प्रकृतिविकृतिभावस्तत्रैव समासस्यास्य प्रसक्तिर्नान्यत्र।

अर्थशब्देन सह समासे तावद् द्विजायायं द्विजार्थः सूपः, द्विजार्था यवागूः, द्विजार्थं पयश्चेति तदुदाहरणानि। एवमेव भूतबलिः गोहितं गोसुखं गोरक्षितमित्यादीन्यपि सूत्रस्यास्योदाहरणानि भवन्ति।

## [२.७] पञ्चमी भयेन॥ (२.१.३७)

**सूत्रार्थः** - पञ्चम्यन्तं सुबन्तं भयप्रकृतिकेन सुबन्तेन सह विकल्पेन तत्पुरुषसमास-संज्ञं भवति।

**सूत्रव्याख्या** - इदं सूत्रं विधायकम्। अनेन सूत्रेण पञ्चमीतत्पुरुषसमासो विधीयते।

सूत्रमिदं पदद्वयात्मकम्। तत्र पञ्चमी इति प्रथमैकवचनान्तं तथा भयेन इति तृतीयैकवचनान्तं पदम्। "प्राक्कडारात्समासः", "तत्पुरुषः", "विभाषा" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सुबन्तम् इति भवति। "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया तदन्तविधौ पञ्चमी इत्यनेन पञ्चम्यन्तं सुबन्तं ग्राह्यम्। भयशब्दस्य सुबन्तत्वाभावाद् भयप्रकृतिके लक्षणा। एवं "पञ्चम्यन्तं सुबन्तं भयप्रकृतिकेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति सूत्रार्थः।

अत्र पञ्चम्यन्तं समर्थेन सुबन्तेन समस्यते। स च तत्पुरुषसमासः। अतः अयं समासः पञ्चमीतत्पुरुषः इत्यभिधीयते।



**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा चोरभयम् इति। चोराद् भयम् इति लौकिकविग्रहे चोर ङसि भय सु इत्यलौकिकविग्रहे प्रकृतसूत्रेण भयप्रकृतिकेन सुबन्तेन भय सु इत्यनेन सह चोर ङसि इति पञ्चम्यन्तं सुबन्तं तत्पुरुषसमाससंज्ञं भवति। ततः पञ्चम्यन्तस्य पूर्वनिपाते चोर ङसि भय सु इति स्थिते, प्रातिपदिकत्वात् सुब्लुकि निष्पन्नात् चोरभयशब्दात् सौ प्रक्रियाकार्ये चोरभयम् इति रूपं निष्पन्नम्।



## पाठगतप्रश्नाः-३

१७. "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति सूत्रस्यार्थः कः।

१८. तदर्थशब्देन कस्य ग्रहणम्।

१९. "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।

२०. "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति वार्तिकस्यार्थः कः।

२१. "पञ्चमी भयेन" इति सूत्रस्यार्थः कः।

२२. "पञ्चमी भयेन" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।

## [२.८] स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन॥ (२.१.३९)

**सूत्रार्थः** - स्तोकान्तिकदूरार्थवाचकानि कृच्छ्रशब्दप्रकृतिकं च पञ्चम्यन्तं सुबन्तं क्तान्तप्रकृतिकेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण पञ्चमीतत्पुरुषसमासो विधीयते। सूत्रमिदं पदद्वयात्मकम्। तत्र स्तोकान्तिकदूरार्थकृच्छ्राणि इति प्रथमाबहुवचनान्तं तथा क्तेन इति तृतीयैकवचनान्तं पदम्। "प्राक्कडारात्समासः", "तत्पुरुषः", "विभाषा" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सुबन्तम् इति भवति। "पञ्चमी भयेन" इत्यस्मात् सूत्रादनुवृत्तस्य पञ्चमीत्यस्य “प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया तदन्तविधौ पञ्चम्यन्तं सुबन्तम् इत्यर्थः भवति। स्तोकान्तिकदूराणि अर्था येषां ते स्तोकान्तिकदूरार्थाः इति बहुव्रीहिः। स्तोकान्तिकदूरार्थाः च कृच्छ्रञ्च स्तोकान्तिकदूरार्थकृच्छ्राणि इति इतरेतरयोगद्वन्द्वः। क्तेन इत्यस्य तदन्तविधौ तत्प्रकृतिके लक्षणया क्तान्तप्रकृतिकेन इत्यर्थः। एवं सूत्रार्थः समायाति "स्तोकान्तिकदूरार्थवाचकानि कृच्छ्रशब्दप्रकृतिकं च पञ्चम्यन्तं सुबन्तं क्तान्तप्रकृतिकेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा स्तोकान्मुक्तः इति। एवमेव अल्पान्मुक्तः अन्तिकादागतः दूरादागतः कृच्छ्रादागतः इत्यादीन्यस्य सूत्रस्योदाहरणानि। स्तोकान्मुक्तः इत्यत्र स्तोकान्मुक्तः इति लौकिकविग्रहे स्तोक ङसि मुक्त सु इत्यलौकिकविग्रहे स्तोक ङसि इति पञ्चम्यन्तं सुबन्तं मुक्त सु इति क्तान्तप्रकृतिकेन सुबन्तेन सह प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः पञ्चम्यन्तस्य



प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य स्तोक ङसि इत्यस्य "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन उपसर्जनत्वात् पूर्वनिपातो भवति। ततः स्तोक ङसि मुक्त सु इति समासस्य प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः ङसेः सोश्च लुकि प्राप्ते पञ्चम्याः अलुग्विधायकं सूत्रं प्रवृत्तम् -

## [२.९] पञ्चम्याः स्तोकादिभ्यः॥ (६.३.२)

**सूत्रार्थः** - स्तोकान्तिकदूरार्थवाचकेभ्यः कृच्छ्रशब्दाच्च विहितायाः पञ्चम्याः उत्तरपदे परे लुक् न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण अलुक् विधीयते। अलुक् नाम लुक् न भवति इति। सूत्रमिदं पदद्वयात्मकम्। तत्र पञ्चम्याः इति षष्ठ्येकवचनान्तं स्तोकादिभ्यः इति पञ्चमीबहुवचनान्तं पदम्। "अलुगुत्तरपदे" इत्यस्मात् सूत्राद् अलुग् उत्तरपदे इति पदद्वयमनुवर्तते। स्तोकादिशब्देन पूर्वसूत्रोक्तानां स्तोकान्तिकदूरार्थकृच्छ्राणां ग्रहणम्। एवं सूत्रार्थः समायाति "स्तोकान्तिकदूरार्थवाचकेभ्यः कृच्छ्रशब्दाच्च विहिता या पञ्चमी तस्याः उत्तरपदे परे लुक् न भवति" इति।

**उदाहरणम्** - स्तोकान्मुक्तः इत्यत्रोदाहरणम्। स्तोक ङसि मुक्त सु इति समासस्य प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः ङसेः सोश्च लुक् प्राप्नोति। तदा प्रस्तुतसूत्रेण पञ्चम्याः ङसेः अलुग् विधीयते। सोश्च "सुपो धातुप्रातिपदिकयोः" इत्यनेन लुकि सर्वसंयोगे स्तोकान्मुक्त इति शब्दो निष्पद्यते। ततः सौ प्रक्रियाकार्ये स्तोकान्मुक्तः इति रूपम्।

## [२.१०] षष्ठी॥ (२.२.८)

**सूत्रार्थः** - षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह विकल्पेन समस्यते स च तत्पुरुषसमाससंज्ञः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासो विधीयते। सूत्रमिदम् एकपदात्मकम्। तत्र षष्ठी इति प्रथमैकवचनान्तं पदम्। "समर्थः पदविधिः", "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः", "विभाषा" इत्येतानि पूर्वतोऽधिकृतानि। "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया षष्ठी इत्यनेन षष्ठ्यन्तं सुबन्तमिति लभ्यते। एवं "षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति सूत्रार्थः समायाति।

अत्र षष्ठ्यन्तं समर्थेन सुबन्तेन समस्यते। स च तत्पुरुषसमासः। अतः अयं समासः षष्ठीतत्पुरुषः इत्यभिधीयते।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा राजपुरुषः इति। राज्ञः पुरुष इति लौकिकविग्रहे राजन् ङस् पुरुष सु इत्यलौकिकविग्रहे राजन् ङस् इति षष्ठ्यन्तं सुबन्तं पुरुष सु इति समर्थेन सुबन्तेन सह प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः षष्ठ्यन्तस्य राजन् ङस् इत्यस्य उपसर्जनत्वात् पूर्वनिपाते राजन् ङस् पुरुष सु इति भवति। समुदायस्य प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः ङसः सोश्च लुकि राजन् पुरुष इति भवति। तदा "न लोपः प्रातिपदिकान्तस्य" इत्यनेन सूत्रेण



राजन्-शब्दस्य नकारस्य लोपे प्रक्रियाकार्ये निष्पन्नात् राजपुरुषशब्दात् सौ प्रक्रियाकार्ये राजपुरुषः इति रूपम्।



## पाठगतप्रश्नाः-४

२३. "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति सूत्रस्यार्थः कः।

२४. "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।

२५. स्तोकान्मुक्तः इत्यादौ पञ्चमीविभक्तेः अलुक् कथम्।

२६. "पञ्चम्याः स्तोकादिभ्यः" इति सूत्रस्यार्थः कः।

२७. "षष्ठी" इति सूत्रस्यार्थः कः।

२८. "षष्ठी" इति सूत्रस्य सविग्रहम् एकमुदाहरणं देयम्।

---

प्रसङ्गतः षष्ठीतत्पुरुषनिषेधकानि सूत्राणि वर्ण्यन्ते -

## [२.११] न निर्धारणे॥ (२.२.१०)

**सूत्रार्थः** - निर्धारणे षष्ठ्यन्तं सुबन्तं न समस्यते।

**सूत्रव्याख्या** - पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासनिषेधो विधीयते। सूत्रमिदं पदद्वयात्मकम्। अस्मिन् सूत्रे निर्धारणे इति सप्तम्यन्तं पदं, नेति निषेधबोधकम् अव्ययपदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इति सूत्रात् षष्ठी इति पदमनुवर्तते। निर्धारणे विधीयमाना या षष्ठी तादृशषष्ठ्यन्तस्य सुबन्तस्य सुबन्तेन सह "षष्ठी" इत्यनेन षष्ठीतत्पुरुषसमासः प्राप्नोति। स समासः अनेन निषिध्यते। अतः सूत्रस्यास्य अर्थो भवति - "निर्धारणे या षष्ठी तदन्तं सुबन्तं न समस्यते" इति।

निर्धारणं नाम जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणम् इति। यथा नृणां द्विजः श्रेष्ठः इत्यत्र "यतश्च निर्धारणम्" इत्यनेन नृणामित्यत्र निर्धारणे षष्ठी विहिता। अत्र नृसमुदायात् श्रेष्ठत्वधर्मेण द्विजस्य पृथक्करणं जातम्। यस्मात् पृथक्करणं तत्र षष्ठी।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा नृणां द्विजः श्रेष्ठः इति। "यतश्च निर्धारणम्" इत्यनेन नृणामित्यत्र निर्धारणे षष्ठी विहिता। ततः षष्ठी इत्यनेन सूत्रेण नृणामिति षष्ठ्यन्तस्य सुबन्तस्य द्विजः इति सुबन्तेन समासे प्राप्ते प्रकृतसूत्रेण निर्धारणषष्ठ्यन्तत्वात् नृणाम् इति पदस्य तेन सह समासनिषेधो भवति।

## (२.११.१) प्रतिपदविधाना षष्ठी न समस्यते (वार्तिकम् )

**वार्तिकार्थः** - प्रतिपदविधाना या षष्ठी तदन्तं सुबन्तं न समस्यते।



**वार्तिकव्याख्या** - इदं वार्तिकं षष्ठीसमासनिषेधप्रसङ्गे विराजते। अनेन वार्तिकेन षष्ठीतत्पुरुषसमासनिषेधो विधीयते। वार्तिकमिदं पदचतुष्टयात्मकम्। अत्र प्रतिपदविधाना षष्ठी इति पदद्वयं प्रथमैकवचनान्तम्। नेति निषेधबोधकमव्ययम्। समस्यते इति क्रियापदम्। पदं पदं प्रति इति प्रतिपदम् इति वीप्सायामव्ययीभावः। "षष्ठी शेषे" इति शेषलक्षणां षष्ठीं वर्जयित्वा सर्वापि षष्ठी प्रतिपदविधाना इति महाभाष्याद्याकरग्रन्थाद् ज्ञायते। एवं प्रतिपदविधानषष्ठ्यन्तस्य षष्ठी इत्यनेन समासे प्राप्ते प्रोक्तवार्तिकेन तन्निषिध्यते।

**उदाहरणम्** - वार्तिकस्यास्योदाहरणं सर्पिषो ज्ञानम् इति। सर्पिषः इत्यत्र "ज्ञोऽविदर्थस्य करणे" इत्यनेन षष्ठी विहिता। सा च षष्ठी प्रतिपदविधाना षष्ठी भवति। अतः सर्पिषः इति षष्ठ्यन्तस्य सुबन्तस्य ज्ञानम् इत्यनेन सुबन्तेन सह "षष्ठी" इत्यनेन सूत्रेण समासे प्राप्ते सर्पिषः इत्यस्य प्रतिपदविधानषष्ठ्यन्तत्वात् प्रोक्तवार्तिकेन समासनिषेधो भवति।



## पाठगतप्रश्नाः-५

२९. "न निर्धारणे" इति सूत्रस्यार्थः कः।

३०. नृणां द्विजः श्रेष्ठः इत्यत्र कथं न षष्ठीसमासः।

३१. निर्धारणं नाम किम्।

३२. "प्रतिपदविधाना षष्ठी न समस्यते" इति वार्तिकस्यार्थः कः।

३३. प्रतिपदविधाना षष्ठी का।

३४. सर्पिषो ज्ञानम् इत्यत्र कथं न समासः।

---

## [२.१२] पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन॥ (२.२.११)

**सूत्रार्थः** - पूरणाद्यर्थैः सदादिभिश्च षष्ठ्यन्तं सुबन्तं समाससंज्ञं न भवति। (समासो न भवति।)

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुष-समासनिषेधो विधीयते। सूत्रमिदं एकपदात्मकम्। अत्र पूरणगुणसुहितार्थसदव्ययतव्य-समानाधिकरणेन इति तृतीयैकवचनान्तं पदम्। पूरणश्च, गुणश्च, सुहितं च पूरणगुणसुहितानि इति इतरेतरयोगद्वन्द्वसमासः। तानि अर्था येषां ते पूरणगुणसुहितार्थाः इति बहुव्रीहिसमासः। पूरणगुणसुहितार्थाश्च सच्च अव्ययं च तव्यश्च समानाधिकरणञ्च इति पूरणगुणसुहितार्थसदव्ययसमानाधिकरणम्, पूरणगुणसुहितार्थसदव्ययसमानाधिकरणेन इति समाहारद्वन्द्वः।



पूरणार्थशब्देन पुरणार्थकप्रत्ययान्तानां शब्दानां ग्रहणम्। गुणार्थशब्देन प्रधानत्वेन उपसर्जनत्वेन च गुणवाची यः शब्दः तस्य ग्रहणम्। सुहितार्थो नाम तृप्त्यर्थकः। सत् इति पदेन तौ सत् इति सूत्रेण सत्संज्ञकौ यौ शतृशानच्प्रत्ययौ तदन्तानां बोधः। अव्ययपदेनात्र सत्तव्येति पूर्वोत्तरयोः साहचर्यात् कृदन्तानां क्त्वातोसुन्कसुन्नन्तानां ग्रहणम्, तेषां क्त्वातोसुन्कसुनः इत्यनेनाव्ययसंज्ञाविधानात्। तेन तस्य उपरि तदुपरि इत्यादौ समासः दुर्वारः। तव्यस्य प्रत्ययत्वात् तदन्तानां बोधो भवति। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इत्यस्मात् षष्ठी इति पदं "न निर्धारणे" इत्यस्मात् नेति पदमनुवर्तते। सूत्रस्यास्यार्थो भवति - "षष्ठ्यन्तं सुबन्तं पूरणाद्यर्थैः सदादिभिश्च न समस्यते" इति। अर्थात् "पूरणाद्यर्थैः सदादिभिश्च षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति" इति।

**उदाहरणम् -** सूत्रस्यास्योदाहरणानि क्रमशः प्रस्तूयन्ते।

पूरणार्थेन निषेधे सतां षष्ठः इत्याद्युदाहरणम्। षण्णां पूरणः इत्यर्थे "तस्य पूरणे डट्" इत्यनेन डटि "षट्कतिकतिपयचतुरां थुक्" इत्यनेन थुकि च षष्ठः इति रूपम्। अत्र सताम् इति षष्ठ्यन्तस्य पूरणार्थकषष्ठशब्देन "षष्ठी" इत्यनेन षष्ठीसमासे प्राप्ते तन्निषेधः प्रकृतसूत्रेण विधीयते।

गुणेन निषेधे काकस्य कार्ष्ण्यम् इत्याद्युदाहरणम्। कृष्णशब्दात् भावे ष्यञि कार्ष्ण्यशब्दो निष्पन्नः। अतः कार्ष्ण्यम् इत्यस्य गुणवाचकत्वात् तेन सह काकस्य इति षष्ठ्यन्तस्य "षष्ठी" इत्यनेन षष्ठीसमासे प्रकृतसूत्रेण स निषिध्यते। गुणेन यो निषेधो विहितः सोऽनित्यः "तदशिष्यं संज्ञाप्रमाणत्वात्" इति सूत्रे संज्ञायाः गुणभूतप्रमाणत्वशब्देन सह समासदर्शनात्। निषेधस्य अनित्यत्वात् अर्थस्य गौरवम् अर्थगौरवम्, बुद्धेः मान्द्यं बुद्धिमान्द्यम् इत्यादिषु नायं निषेधः।

सुहितार्थेन निषेधे फलानां सुहितः इत्यादिकमुदाहरणम्। अत्र षष्ठ्यन्तस्य फलशब्दस्य सुहितशब्देन सह प्राप्तस्य षष्ठीसमासस्य प्रकृतसूत्रेण निषेधो विधीयते।

सदन्तेन निषेधे द्विजस्य कुर्वन् कुर्वाणो वा इत्याद्युदाहरणम्। कृधातोः शतरि शानचि च यथाक्रमं कुर्वन् कुर्वाणः चेति रूपद्वयम्। अत्र षष्ठ्यन्तस्य द्विजशब्दस्य कुर्वन् इत्यनेन कुर्वाणः इत्यनेन वा योगे प्राप्तः षष्ठीसमासः अनेन निषिध्यते।

अव्ययेन निषेधे ब्राह्मणस्य कृत्वा इत्यादिकमत्रोदाहरणम् । कृत्वा इत्यस्य अव्ययसंज्ञकत्वात् ब्राह्मणस्येति षष्ठ्यन्तेन प्राप्तः षष्ठीसमासः अनेन निषिध्यते।

तव्यप्रत्ययान्तेन निषेधे ब्राह्मणस्य कर्तव्यम् इत्याद्यत्रोदाहरणम्। कृधातोः तव्यत्तव्यानीयरः इत्यनेन तव्यप्रत्यये कर्तव्यम् इति रूपम्। षष्ठ्यन्तस्य ब्राह्मणस्येति सुबन्तस्य तव्यप्रत्ययान्तेन कर्तव्यम् इत्यनेन प्राप्तः षष्ठीसमासः अनेन निषिध्यते। तव्यत्प्रत्ययान्तेन योगे तु समासो भवत्येव। स्वस्य कर्तव्यम् इति विग्रहे स्वकर्तव्यम् इति षष्ठीसमासः। तव्यति कृते कृदुत्तरपदप्रकृतिस्वरेण प्रकृतिस्वरः, तव्ये तु नेति फलभेदः।



समानाधिकरणेन निषेधे तक्षकस्य सर्पस्य इत्याद्युदाहरणम्। अत्र तक्षकस्येति षष्ठ्यन्तस्य सुबन्तस्य षष्ठ्यन्तेन सर्पस्येति सुबन्तेन प्राप्तः षष्ठीसमासः समानाधिकरणत्वात् प्रकृतसूत्रेण निषिध्यते। अत्र "विशेषणं विशेष्येण बहुलम्" इत्यनेन प्राप्तः कर्मधारयसमासः बहुलग्रहणसामर्थ्यात् न भवति।



## पाठगतप्रश्नाः-६

३५. "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इति सूत्रस्यार्थः कः।

३६. गुणशब्देन षष्ठीसमासनिषेधः अनित्यः कथम्।

३७. पूरणार्थेन षष्ठीसमासनिषेधे किमुदाहरणम्।

३८. सदन्तेन षष्ठीसमासनिषेधे किमुदाहरणम्।

३९. अव्ययेन षष्ठीसमासनिषेधे किमुदाहरणम्।

४०. स्वकर्तव्यम् इत्यत्र कथं समासः।

---

## [२.१३] क्तेन च पूजायाम्॥ (२.२.१२)

**सूत्रार्थः** - "मतिबुद्धिपूजार्थेभ्यश्च" इत्यनेन विहितः यः क्तप्रत्ययः, तदन्तेन षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासनिषेधो विधीयते। सूत्रमिदं पदत्रयात्मकम्। अस्मिन् सूत्रे क्तेन इति तृतीयैकवचनान्तं पदम्। चेत्यव्ययपदम्। पूजायामिति सप्तम्येकवचनान्तं पदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इत्यस्मात् षष्ठी इति पदं "न निर्धारणे" इत्यस्मात् नेति पदमनुवर्तते। अत्र पूजायां क्तेन न षष्ठीसमासः इत्यन्वयः। पूजाग्रहणं मतिबुद्धिपूजार्थेभ्यश्च इति सूत्रोपलक्षणम्। एवं सूत्रार्थो भवति - "मतिबुद्धिपूजार्थेभ्यश्च इत्यनेन विहितः यः क्तप्रत्ययः, तदन्तेन षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा राज्ञां मतः इति। मतः इत्यत्र "मतिबुद्धिपूजार्थेभ्यश्च" इत्यनेन वर्तमाने क्तः विहितः। अतः वर्तमानार्थकस्य क्तस्य योगे "क्तस्य च वर्तमाने" इत्यनेन राजन्शब्दात् षष्ठीविभक्तौ राज्ञाम् इति रूपम्। अत्र षष्ठ्यन्तस्य राज्ञाम् इत्यस्य सुबन्तस्य मतः इति सुबन्तेन सह प्राप्तः षष्ठीसमासः प्रकृतसूत्रेण निषिध्यते। राज्ञाम् इष्यमाणः इत्यर्थः। एवमेव राज्ञां बुद्धः राज्ञां पूजितः इत्यादौ न समासः।

ननु राजमतः, राजबुद्धः, राजपूजितः इत्यादिषु कथं समासः इति चेदुच्यते अत्र राजभिः पूजितः इति विग्रहे भूते क्तान्तेन सह तृतीयान्तस्य समासः। तृतीयासमासत्वात् नेदं सूत्रं समासं बाधते।



## [२.१४] अधिकरणवाचिना च॥ (२.२.१३)

**सूत्रार्थः** - अधिरकरणवाची यः क्तप्रत्ययः, तदन्तेन षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासनिषेधो विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र अधिकरणवाचिना इति तृतीयैकवचनान्तं पदम्। चेति अव्ययपदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इत्यस्मात् षष्ठी इति पदं "न निर्धारणे" इत्यस्मात् नेति "क्तेन च पूजायाम्" इत्यस्माच्च क्तेन इति पदं चानुवर्तते। एवं सूत्रार्थो भवति - "अधिकरणवाची यः क्तप्रत्ययः, तदन्तेन षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं तावत् इदमेषामासितम् इत्यादिकम्। आसितम् इत्यत्र "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इति अधिकरणे क्तः। अत्र "अधिकरणवाचिनश्च" इत्यनेन अधिकरणवाचिक्तान्तेन योगे एषाम् इत्यत्र षष्ठीविभक्तिः। अत्र एषाम् इत्यस्य षष्ठ्यन्तस्य आसितम् इति क्तप्रत्ययान्तेन योगे प्राप्तः षष्ठीसमासः प्रस्तुतसूत्रेण निषिध्यते।

## [२.१५] कर्मणि च॥ (२.२.१४)

**सूत्रार्थः** - "उभयप्राप्तौ कर्मणि" इत्यनेन विहिता या षष्ठी तदन्तस्य सुबन्तस्य सुबन्तेन समासो न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासनिषेधो विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र कर्मणि इति सप्तम्येकवचनान्तं पदम्। चेति अव्ययपदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इत्यस्मात् षष्ठी इति पदं "न निर्धारणे" इत्यस्माच्च नेति पदमनुवर्तते। चेति इतिपर्यायः। अतः कर्मणि इति सप्तम्येकवचनमुच्चार्य या षष्ठी तदन्तस्य सुबन्तेन सह समासो न इति सूत्रार्थः प्रतीयते। एवं सूत्रार्थो भवति - "उभयप्राप्तौ कर्मणि" इत्यनेन विहिता या षष्ठी तदन्तस्य सुबन्तस्य सुबन्तेन समासो न भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं तावत् आश्चर्यो गवां दोहोऽगोपेन इत्यादिकम्। गवाम् इत्यत्र कर्तरि कर्मणि च षष्ठ्यां प्राप्तायाम् "उभयप्राप्तौ कर्मणि" इत्यनेन कर्मणि एव षष्ठी। अतः गवाम् इति षष्ठ्यन्तस्य दोहः इति सुबन्तेन सह प्राप्तः षष्ठीसमासः प्रस्तूतसूत्रेण निषिध्यते।



### पाठगतप्रश्नाः-७

४१. "क्तेन च पूजायाम्" इति सूत्रस्यार्थः कः।

४२. सूत्रे पूजाग्रहणं किमर्थम्।

४३. क्तेन च पूजायाम्" इति सूत्रस्य उदाहरणम् एकं देयम्।

४४. "अधिकरणवाचिना च" इति सूत्रस्यार्थः कः।



४५. "अधिकरणवाचिना च" इति सूत्रस्य उदाहरणम् एकं देयम्।

४६. "कर्मणि च" इति सूत्रस्यार्थः कः।

४७. "कर्मणि च" इति सूत्रस्य उदाहरणम् एकं देयम्।

## [२.१६] तृजकाभ्यां कर्तरि॥ (२.२.१५)

**सूत्रार्थः** - कर्त्रर्थकौ यौ तृजकौ प्रत्ययौ तदन्तेन सुबन्तेन सह षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासनिषेधो विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र तृजकाभ्यामिति तृतीयाद्विवचनान्तं कर्तरि इति सप्तम्येकवचनान्तं पदम्। अत्र कर्तरि इति तृजकयोरेव विशेषणं, न तु अनुवृत्तषष्ठ्याः। तृच्प्रत्ययान्ताः ण्वुल्प्रत्ययान्ताश्च तृजकेत्यंशेन स्वीक्रियन्ते। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इत्यस्मात् षष्ठी इति पदं "न निर्धारणे" इत्यस्माच्च नेति पदमनुवर्तते। एवं सूत्रार्थो भवति - "कर्त्रर्थकौ यौ तृजकौ प्रत्ययौ तदन्तेन सुबन्तेन सह षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति" इति।

**उदाहरणम्** - सूत्रस्यास्य तृजन्तेन निषेधे तावत् अपां स्रष्टा इत्यादिकम् उदाहरणम्। सृज्धातोः "ण्वुल्तृचौ" इत्यनेन तृचि स्रष्टा इति रूपम्। स्रष्टा इत्यनेन योगे षष्ठ्यन्तस्य अपाम् इत्यस्य प्राप्तः षष्ठीसमासः प्रस्तुतसूत्रेण निषिध्यते।

एवं ण्वुल्प्रत्ययान्तस्य निषेधे ओदनस्य पाचकः इत्यादिकमुदाहरणम्। अत्र पच्धातोः "ण्वुल्तृचौ" इत्यनेन कर्तरि ण्वुलि अकादेशे पाचकः इति रूपम्। पाचकः इत्यनेन योगे ओदनस्य इति षष्ठ्यन्तस्य प्राप्तः षष्ठीसमासः प्रस्तुतसूत्रेण निषिध्यते।

## [२.१७] कर्तरि च॥ (२.२.१६)

**सूत्रार्थः** - कर्तरि या षष्ठी तदन्तस्य ण्वुल्प्रत्ययान्तेन सह समासो न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण षष्ठीतत्पुरुषसमासनिषेधो विधीयते।सूत्रमिदं पदद्वयात्मकम्। अत्र कर्तरि इति सप्तम्येकवचनान्तं पदम्। चेति अव्ययपदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अधिक्रियन्ते। "षष्ठी" इत्यस्मात् षष्ठी इति पदं "न निर्धारणे" इत्यस्माच्च नेति पदमनुवर्तते। "तृजकाभ्यां कर्तरि" इत्यतः अकेनेत्यंशः अनुवर्तते। तस्य ण्वुल्प्रत्ययान्तेन इत्यर्थः। अत्र कर्तरि इति पदं षष्ठी इति अनुवृत्तपदेन सह अन्वेति। एवं सूत्रार्थो भवति - "कर्तरि या षष्ठी तदन्तस्य सुबन्तस्य ण्वुल्प्रत्ययान्तेन सह समासो न भवति" इति।

**उदाहरणम्** - भवतः शायिका इत्यादिकम् अस्य सूत्रस्योदाहरणम्। शीधातोः ण्वुल्, अकादेशे टापि प्रक्रियाकार्ये शायिका इति रूपम्। तेन योगे "कर्तृकर्मणोः कृति" इति सूत्रेण भवतः इत्यत्र कर्तरि षष्ठी। अत्र अकस्य कर्त्रर्थकत्वाभावात् "तृजकाभ्यां कर्तरि" इति सूत्रं न प्रवर्तते। ततः भवतः इत्यनेन



षष्ठ्यन्तेन शायिका इत्यस्य ण्वुल्प्रत्ययान्तस्य षष्ठीतत्पुरुषसमासे प्राप्ते प्रस्तुतसूत्रेण भवतः इत्यत्र षष्ठ्याः कर्तरि विधानात् षष्ठीसमासनिषेधो भवति।

## [२.१८] पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे॥ (२.२.१)

**सूत्रार्थः** - यदा अवयवी एकत्वविशिष्टः तदा अवयविना सह पूर्वादीनां सुबन्तानां विकल्पेन तत्पुरुषसमासो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। "षष्ठी" इत्यनेन प्राप्तस्य समासस्यापवादभूतम् इदं सूत्रम्। सूत्रमिदं पदत्रयात्मकम्। अत्र पूर्वापराधरोत्तरम् इति प्रथमैकवचनान्तम्, एकदेशिना इति तृतीयैकवचनान्तम् एकाधिकरणे इति च सप्तम्येकवचनान्तं पदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः", "विभाषा" इत्येतानि अधिक्रियन्ते। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इत्यनुवर्तते। पूर्वापराधरोत्तरमित्यस्य विशेषणत्वात् सुप् इत्यस्य तदन्तविधौ पूर्वापराधरोत्तरं सुबन्तम् इति भवति। पूर्वञ्च परञ्च अधरञ्च उत्तरञ्च इति विग्रहे समाहारद्वन्द्वे पुर्वापराधरोत्तरम् इति। एकदेशः अवयवः यस्यास्ति सः एकदेशी इति एकदेशशब्दाद् इनिप्रत्ययः। एकदेशी नाम अवयवी। एकदेशिना नाम अवयविना इति। एकं च तदधिकरणं च एकाधिकरणम्, तस्मिन् एकाधिकरणे इति कर्मधारयसमासः। एकं नाम एकत्वसंख्याविशिष्टम् इति। अधिकरणशब्दश्चात्र द्रव्यपरकः। एकाधिकरणे इत्यस्य सम्बन्धः एकदेशिना इति पदेन सह वर्तते। एवं च सूत्रार्थः - "यदा अवयवी एकत्वविशिष्टः तदा अवयविना सह पूर्वादीनां सुबन्तानां विकल्पेन तत्पुरुषसमासो भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा पूर्वकायः इति। पूर्वं कायस्येति लौकिकविग्रहे पूर्व सु काय ङस् इत्यलौकिकविग्रहे "षष्ठी" इत्यनेन षष्ठीतत्पुरुषसमासे प्राप्ते तं प्रबाध्य प्रकृतसूत्रेण काय ङस् इति एकत्वसंख्याविशिष्टेन अवयविवाचकेन सुबन्तेन पूर्व सु इति सुबन्तं प्रोक्तसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः सूत्रे प्रथमानिर्दिष्टत्वात् पूर्व सु इति सुबन्तस्य उपसर्जनसंज्ञायां पूर्वनिपाते पूर्व सु काय ङस् इति भवति। ततः सुब्लुकि निष्पन्नात् पूर्वकायशब्दात् सौ प्रक्रियाकार्ये पूर्वकायः इति रूपम्। अपरकायः अधरकायः इत्यादीन्येतस्य सूत्रस्योदाहरणानि।



### पाठगतप्रश्नाः-८

४८. "तृजकाभ्यां कर्तरि" इति सूत्रस्यार्थः कः।

४९. "तृजकाभ्यां कर्तरि" इति सूत्रस्य तृचा निषेधे किम् उदाहरणम्।

५०. "तृजकाभ्यां कर्तरि" इति सूत्रस्य अका निषेधे किम् उदाहरणम्।

५१. "कर्तरि च" इति सूत्रस्यार्थः कः।

५२. "कर्तरि च" इति सूत्रस्य उदाहरणम् एकं देयम्।

५३. "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति सूत्रस्यार्थः कः।



५४. "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति सूत्रस्य उदाहरणम् एकं देयम्।

---

## [२.१९] अर्धं नपुंसकम्॥ (२.२.२)

**सूत्रार्थः** - समांशवाची नित्यं नपुंसकलिङ्गे विद्यमानः अर्धशब्दः अवयविना सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति, एकत्वसंख्याविशिष्टः चेद् अवयवी।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। "षष्ठी" इत्यनेन प्राप्तस्य समासस्यापवादभूतम् इदं सूत्रम्। सूत्रमिदं पदद्वयात्मकम्। अत्र अर्धम् नपुंसकम् इति पदद्वयं प्रथमैकवचनान्तम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः", "विभाषा" इत्येतानि अधिक्रियन्ते। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इति "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इत्यस्माच्च एकदेशिना एकाधिकरणे इति पदद्वयमनुवर्तते। समांशवाचिनः नित्यनपुंसकलिङ्गे विद्यमानस्यैव अर्धशब्दस्यात्र ग्रहणम्। एवं च सूत्रार्थः भवति - "समांशवाची नित्यं नपुंसकलिङ्गे विद्यमानः अर्धशब्दः एकत्वसंख्या-विशिष्टेन द्रव्यवाचकेन अवयविना सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा अर्धपिप्पली इति। अर्धं पिप्पल्याः इति लौकिकविग्रहे अर्ध सु पिप्पली ङस् इत्यलौकिकविग्रहे "षष्ठी" इत्यनेन षष्ठीतत्पुरुषसमासे प्राप्ते तं प्रबाध्य प्रकृतसूत्रेण पिप्पली ङस् इति एकत्वसंख्याविशिष्टेन अवयविवाचकेन सुबन्तेन सह अर्ध सु इति समांशवाची नित्यं नपुंसकलिङ्गे विद्यमानः तत्पुरुषसमाससंज्ञो भवति। ततः अर्ध सु इत्यस्य प्रथमानिर्दिष्टत्वाद् उपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि निष्पन्नात् अर्धपिप्पली इत्यस्मात् सौ प्रक्रियाकार्ये अर्धपिप्पली इति रूपम्।

## [२.२०] सप्तमी शौण्डैः॥ (२.१.४०)

**सूत्रार्थः** - सप्तम्यन्तं सुबन्तं शौण्डादिप्रकृतिकैः सुबन्तैः सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण सप्तमी-तत्पुरुषसमासो विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र सप्तमी इति प्रथमैकवचनान्तं शौण्डैः इति च तृतीयाबहुवचनान्तं पदम्। अत्र "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः", "विभाषा" इत्येतानि अधिक्रियन्ते। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इत्यनुवर्तते। "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया सप्तमीत्यत्र तदन्तविधौ सप्तम्यन्तं सुबन्तम् इति लभ्यते। शौण्डशब्दे बहुवचननिर्देशाद् गणपाठाच्च शौण्डशब्दः शौण्डादिगणे विद्यमानानां शौण्डादीनां बोधकः। शौण्डादीनां तत्प्रकृतिके लक्षणा। एवं च सूत्रार्थः- "सप्तम्यन्तं सुबन्तं शौण्डादिप्रकृतिकैः सुबन्तैः सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति" इति।



अत्र सप्तम्यन्तं समर्थेन सुबन्तेन समस्यते। स च तत्पुरुषसमासः। अतः अयं समासः सप्तमीतत्पुरुषः इत्यभिधीयते।

**उदाहरणम् -** सूत्रस्यास्योदाहरणं यथा अक्षशौण्डः इति। अक्षेषु शौण्डः इति लौकिकविग्रहे अक्ष सुप् शौण्ड सु इत्यलौकिकविग्रहे अक्ष सुप् इति सप्तम्यन्तं सुबन्तं शौण्ड सु इत्यनेन शौण्डप्रकृतिकेन सुबन्तेन सह प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकशास्त्रे सप्तमी इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य अक्ष सुप् इत्यस्य उपसर्जनसंज्ञायां पूर्वनिपाते अक्ष सुप् शौण्ड सु इति भवति। ततः समासस्य प्रातिपदिकसंज्ञायां सुपः सोश्च लुकि सर्वसंयोगे अक्षशौण्ड इति निष्पद्यते। तस्मात्प्रथमैकवचने सौ प्रक्रियाकार्ये अक्षशौण्डः इति रूपम्।



## पाठगतप्रश्नाः-९

५५. "अर्धं नपुंसकम्" इति सूत्रस्यार्थः कः।

५६. "अर्धं नपुंसकम्" इति सूत्रस्य उदाहरणम् एकं देयम्।

५७. "सप्तमी शौण्डैः" इति सूत्रस्यार्थः कः।

५८. "सप्तमी शौण्डैः" इति सूत्रस्य उदाहरणम् एकं देयम्।



## पाठसारः

समासभेदेषु तृतीयः तत्पुरुषसमासः अस्मिन् पाठे प्रतिपादितः। "तत्पुरुषः" इत्यधिकृत्य अयं समासः प्रवर्तते। प्रायेण उत्तरपदार्थप्रधानः अयं समासः। अयं च तत्पुरुषसमासः समानाधिकरणः व्यधिकरणः चेति द्विधा विभक्त इति वक्तुं शक्यते। तत्र व्यधिकरणतत्पुरुषविधायकानां सूत्राणाम् अस्मिन् पाठे सन्निवेशः। व्यधिकरणे पदे इत्यस्य अर्थो हि असमानविभक्तिके पदे इति। व्यधिकरणे अस्य स्तः इति व्यधिकरणः इति अर्शआदित्वादच्प्रत्ययः। एवं यस्मिन् तत्पुरुषे समस्यमानानि पदानि समानविभक्तिकानि न सन्ति स व्यधिकरणः तत्पुरुषः। विशेषप्रयोजनसाधनाय द्विगुसमासस्य "द्विगुश्च" इत्यनेनन तत्पुरुषसंज्ञा अत्र वर्णिता। व्यधिकरणतत्पुरुषः पुनः द्वितीयातत्पुरुषः, तृतीयातत्पुरुषः, चतुर्थीतत्पुरुषः, पञ्चमीतत्पुरुषः षष्ठीतत्पुरुषः सप्तमीतत्पुरुषश्चेति षड्विधः। "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति द्वितीयातत्पुरुषस्य, "तृतीया तत्कृतार्थेन गुणवचनेन" इति "कर्तृकरणे कृता बहुलम्" इति च तृतीयातत्पुरुषस्य, "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति चतुर्थीतत्पुरुषस्य, "पञ्चमी भयेन" इति "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति च पञ्चमीतत्पुरुषस्य, "षष्ठी" इति षष्ठीतत्पुरुषस्य "सप्तमी शौण्डैः" इति सप्तमीतत्पुरुषस्य च विधायकानि सूत्राणि व्याख्यातानि। पञ्चमीसमासावसरे "पञ्चम्याः स्तोकादिभ्यः" इति पञ्चम्या अलुग्विधायकं सूत्रं व्याख्यातम्।



"पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे", "अर्धं नपुंसकम्" इति षष्ठीसमासापवादभूतं समासविधायकं सूत्रद्वयं व्याख्यातम्। तत्र च "अर्धेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति वार्त्तिकं व्याख्यातम्। षष्ठीसमासनिषेधकानि "न निर्धारणे", "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन", "क्तेन च पूजायाम्", "अधिकरणवाचिना च", "कर्मणि च", "तृजकाभ्यां कर्तरि", "कर्तरि च" इत्येतानि सप्त सूत्राणि "प्रतिपदविधाना षष्ठी न समस्यते" इति वार्तिकं च व्याख्यातम्। एवं व्यधिकरणतत्पुरुषसमासः अस्मिन् पाठे प्रतिपादितः।



## पाठान्तप्रश्नाः

१. "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति सूत्रं व्याख्यात।
२. "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति सूत्रं व्याख्यात।
३. "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इति सूत्रं व्याख्यात।
४. "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति सूत्रं व्याख्यात।
५. "सप्तमी शौण्डैः" इति सूत्रं व्याख्यात।
६. कृष्णश्रितः इति रूपं साधयत।
७. यूपदारु इति रूपं साधयत।
८. अर्धपिप्पली इति रूपं साधयत।
९. अक्षशौण्डः इति रूपं साधयत।
१०. षष्ठीसमासनिषेधकानि सूत्राणि कानि, अर्थोदाहरणैः सह तानि व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. "शेषो बहुव्रीहिः" (२.२.२३) इत्यस्मात् सूत्रात्प्राक्पर्यन्तम्।
२. द्विगुरपि तत्पुरुषसंज्ञकः भवति।
३. समासान्तप्रत्ययविधानम्।
४. द्वितीयातत्पुरुषसमासः।
५. द्वितीयान्तं सुबन्तं श्रितादिप्रकृतिकैः सुबन्तैः सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।
६. इतरेतरयोगद्वन्द्वसमासः। श्रितश्च अतीतश्च पतितश्च गतश्च अत्यस्तश्च प्राप्तश्च आपन्नश्च श्रितातीतपतितगतात्यस्तप्राप्तापन्नाः, तैः श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः इति विग्रहः।
७. श्रितादीनां शब्दानां तत्प्रकृतिके लक्षणा।



८. कृष्णं श्रितः इति विग्रहे कृष्णश्रितः इति उदाहरणम्।

## उत्तराणि-२

९. तृतीयान्तं सुबन्तं तृतीयान्तार्थकृतगुणवचनेन अर्थशब्देन च सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

१०. तृतीयान्तार्थाकृत इत्यर्थः।

११. ये शब्दाः पूर्वं गुणवाचकाः आसन् इदानीं द्रव्यवाचकास्ते एव गुणवचनशब्देन गृह्यन्ते।

१२. शङ्कुलया खण्डः इति विग्रहे शङ्कुलाखण्डः।

१३. कर्तरि करणे च विद्यमानं तृतीयान्तं सुबन्तं कृदन्तेन सह बहुलं तत्पुरुषसमाससंज्ञं भवति।

१४. दात्रेण लूनवान् इत्यादौ समासः न।

१५. कृदन्तस्य ग्रहणे गतिपूर्वस्य कारकपूर्वस्यापि कृदन्तस्य ग्रहणं भवति इति परिभाषार्थः।

१६. हरिणा त्रातः हरित्रातः इति।

## उत्तराणि-३

१७. चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थबलिहितसुखरक्षितैः सह चतुर्थ्यन्तं सुबन्तं विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

१८. प्रकृतिविकृतिभावस्य ग्रहणम्।

१९. यूपाय दारु इति विग्रहे यूपदारु इति उदाहरणम्।

२०. अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमासः समासे च विशेष्यलिङ्गता भवति" इति वार्तिकस्यास्यार्थः।

२१. पञ्चम्यन्तं सुबन्तं भयप्रकृतिकेन सुबन्तेन सह विकल्पेन तत्पुरुषसमास-संज्ञं भवति इति सूत्रार्थः।

## उत्तराणि-४

२२. चोराद् भयम् इति विग्रहे चोरभयम् इति एकम् उदाहरणम्।

२३. स्तोकान्तिकदूरार्थवाचकानि कृच्छ्रशब्दप्रकृतिकं च पञ्चम्यन्तं सुबन्तं क्तान्तप्रकृतिकेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

२४. स्तोकात् मुक्तः इति विग्रहे समासे स्तोकान्मुक्तः इति एकम् उदाहरणम्।

२५. पञ्चम्याः स्तोकादिभ्यः इति सूत्रेण।

२६. स्तोकान्तिकदूरार्थवाचकेभ्यः कृच्छ्रशब्दाच्च विहितायाः पञ्चम्याः उत्तरपदे परे लुक् न भवति इति सूत्रार्थः।

२७. षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह विकल्पेन समस्यते स च तत्पुरुषससंज्ञः भवति।

२८. राज्ञः पुरुषः इति विग्रहे राजपुरुषः।



## उत्तराणि-५

२९. निर्धारणे षष्ठ्यन्तं सुबन्तं न समस्यते।

३०. न निर्धारणे इति सूत्रेण निषेधात् नात्र षष्ठीसमासः।

३१. जातिगुणक्रियासंज्ञाभिः समुदायाद् एकदेशस्य पृथक्करणं निर्धारणम्।

३२. प्रतिपदविधाना या षष्ठी तदन्तं सुबन्तं न समस्यते।

३३. "षष्ठी शेषे" इति शेषलक्षणां षष्ठीं वर्जयित्वा सर्वापि षष्ठी प्रतिपदविधाना इति महाभाष्याद्याकरग्रन्थाद् ज्ञायते।

३४. प्रतिपदविधाना षष्ठी न समस्यते इति षष्ठीसमासनिषेधात् नात्र षष्ठीसमासः।

## उत्तराणि-६

३५. पूरणाद्यर्थैः सदादिभिश्च षष्ठ्यन्तं सुबन्तं समाससंज्ञं न भवति। (समासो न भवति।)

३६. "तदशिष्यं संज्ञाप्रमाणत्वात्" इति सूत्रे संज्ञायाः गुणभूतप्रमाणत्वशब्देन सह समासदर्शनात्।

३७. षण्णां पूरणः इति।

३८. द्विजस्य कुर्वन् कुर्वाणो वा।

३९. ब्राह्मणस्य कृत्वा।

४०. तव्यत्-प्रत्ययेन योगात् समासः।

## उत्तराणि-७

४१. "मतिबुद्धिपूजार्थेभ्यश्च" इत्यनेन विहितः यः क्तप्रत्ययः, तदन्तेन षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति।

४२. पूजाग्रहणं मतिबुद्धिपूजार्थेभ्यश्च इति सूत्रोपलक्षणम्।

४३. राज्ञां मतः इति।

४४. अधिरकरणवाची यः क्तप्रत्ययः, तदन्तेन षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति

४५. इदमेषाम् आसीतम् इति।

४६. "उभयप्राप्तौ कर्मणि" इत्यनेन विहिता या षष्ठी तदन्तस्य सुबन्तस्य सुबन्तेन समासो न भवति।

४७. आश्चर्यो गवां दोहो अगोपेन इति।

## उत्तराणि-८

४८. कर्त्रर्थकौ यौ तृजकौ प्रत्ययौ तदन्तेन सुबन्तेन सह षष्ठ्यन्तस्य सुबन्तस्य समासो न भवति।

४९. अपां स्रष्टा इति।

५०. ओदनस्य पाचकः इति।

५१. कर्तरि या षष्ठी तदन्तस्य ण्वुल्प्रत्ययान्तेन सह समासो न भवति।

५२. भवतः शायिका इति।



५३. यदा अवयवी एकत्वविशिष्टः तदा अवयविना सह पूर्वादीनां सुबन्तानां विकल्पेन तत्पुरुषसमासो भवति।

५४. पूर्वकायः।

## उत्तराणि-९

५५. समांशवाची नित्यं नपुंसकलिङ्गे विद्यमानः अर्धशब्दः अवयविना सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति, एकत्वसंख्याविशिष्टः चेद् अवयवी।

५६. अर्धपिप्पली इति।

५७. सप्तम्यन्तं सुबन्तं शौण्डादिप्रकृतिकैः सुबन्तैः सह विकल्पेन तत्पुरषसमाससंज्ञं भवति इति सूत्रार्थः।

५८. अक्षशौण्डः।

॥इति द्वितीयः पाठः॥



# ३

# तत्पुरुषसमासः - तद्धितार्थादितत्पुरुषसमासः

## प्रस्तावना

व्यधिकरणतत्पुरुषस्यालोचनात् परम् अस्मिन् पाठे आदौ द्विगुसमासस्य वर्णनं क्रियते। द्विगुसमासेन आनुषङ्गिकतया "दिक्संख्ये संज्ञायाम्" "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रद्वयं प्रस्तूयते। ततः समानाधिकरणस्य तत्पुरुषस्य वर्णनमत्र विधीयते। यस्मिन् तत्पुरुषे समस्यमानपदानि समानविभक्तिकानि भवन्ति स समानाधिकरणः तत्पुरुषः। समानाधिकरणतत्पुरुषस्य "तत्पुरुषः समानाधिकरणः कर्मधारयः" इत्यनेन कर्मधारयसंज्ञा भवति। ततः नञ्समासस्य वर्णनम् अस्मिन् पाठे अस्ति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- दिक्पूर्वपदं संख्यापूर्वपदसमासं च जानीयात्।
- समानाधिकरणतत्पुरुषविधायकानि सूत्राणि जानीयात्।
- उपमितसमासं पठिष्यति।
- नञ्समासं जानीयात्।
- ससूत्रं समासान् ज्ञात्वा स्वयं समासं कर्तुं प्रभवेत्।
- साहित्याद्यध्ययनकाले पाठे स्थितानां समस्तपदानां समासं बोद्धुं निर्णेतुं च प्रभवेत्।

## [३.१] दिक्संख्ये संज्ञायाम्॥ (२.१.५०)

**सूत्रार्थः** - दिशावाचकं संख्यावाचकं च सुबन्तं समानाधिकरणेन सुबन्तेन सह संज्ञायां गम्यमानायामेव तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - इदं नियमसूत्रम्। अनेन सूत्रेण संज्ञायामेव दिशासंख्यावाचकयोः सुबन्तेन सह समानाधिकरणतत्पुरुषसमासः इति नियम्यते। सूत्रमिदं पदद्वयात्मकम्। अत्र दिक्संख्ये इति



प्रथमाद्विवचनान्तं संज्ञायामिति च सप्तम्येकवचनान्तं पदम्। दिक् च संख्या च दिक्संख्ये इति इतरेतरयोगद्वन्द्वः। "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इत्यस्मात् पूर्वस्मात् सूत्रात् समानाधिकरणेन इत्यनुवर्तते। समानाधिकरणेनेत्यस्य पदस्य द्वितीयाध्यायस्य प्रथमपादसमाप्तिं यावदधिकारः। समानम् एकम् अधिकरणं वाच्यं यस्य तत् समानाधिकरणम्, तेनेति बहुव्रीहिसमासः। एकार्थवृत्तित्वमिति फलितम्। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे " इत्यस्मात् सुप् इति पदमनुवर्तते। समानाधिकरणेन इत्यस्य विशेषणत्वात् सुपा इत्यत्र तदन्तविधिना सुबन्तेन समानाधिकरणेन इति भवति। एवं च सूत्रार्थः भवति - "दिशावाचकं संख्यावाचकं च सुबन्तं समानाधिकरणेन सुबन्तेन सह संज्ञायां गम्यमानायामेव तत्पुरुषसमाससंज्ञं भवति" इति।

"विशेषणं विशेष्येण बहुलम्" इत्यनेन सूत्रेणैव समासे सिद्धे एतत्सूत्रारम्भः किमर्थम् इति चेदुच्यते एतत्सूत्रं संज्ञायामेव समास इति नियमाय। अत एवोक्तं दीक्षितेन – "संज्ञायामेवेति नियमार्थं सूत्रम्" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा पूर्वेषुकामशमी इति। पूर्वा चासौ इषुकामशमी च इति लौकिकविग्रहे पूर्वा सु इषुकामी सु इत्यलौकिकविग्रहे पूर्वा सु इति दिग्वाचकं सुबन्तं इषुकामशमी सु इति सुबन्तेन सह प्रस्तुतसूत्रेण देशविशेषसंज्ञायां गम्यमानायां तत्पुरुषसमाससंज्ञं भवति। ततः "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन समासविधायकसूत्रे दिक् इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य पूर्वा सु इत्यस्य दिग्वाचकस्य उपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इत्यनेन तस्य पूर्वनिपातो भवति। ततः "कृत्तद्धितसमासाश्च" इति सूत्रेण पूर्वा सु इषुकामशमी सु इति समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सूत्रेण सुपः सुद्वयस्य लुकि पूर्वा इषुकामशमी इति भवति। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति वार्तिकेन पूर्वा इति सर्वनाम्नः पुंवद्भावे पूर्व इति भवति। ततः पूर्व इषुकामशमी इति भवति। ततः "आद् गुणः" इति सूत्रेण पूर्वशब्दस्य वकारोत्तरस्य अकारस्य इषुकामशमीत्यस्य इकारस्य च स्थाने गुणे एकादेशे एकारे सर्वसंयोगे पूर्वेषुकामशमी इति निष्पद्यते। पूर्वेषुकामशमी इत्यस्य प्रातिपदिकत्वाक्षत्या ततः सौ प्रक्रियाकार्ये पूर्वेषुकामशमी इति रूपम्।

एवमेव सप्त ऋषयः इति स्थिते समासो भवति संज्ञायाम्। सप्तर्षयः इति मरीच्यत्रिप्रभृतीनां सप्तानामृषीणां संज्ञा।



## पाठगतप्रश्नाः १

१. "दिक्संख्ये संज्ञायाम्" इति सूत्रस्य उदाहरणम् एकं देयम्। इति सूत्रं किम्प्रकारकम्।
२. "दिक्संख्ये संज्ञायाम्" इति सूत्रस्यार्थः कः।
३. "दिक्संख्ये संज्ञायाम्" इति सूत्रस्य दिग्वाचकेन समासे किमुदाहरणम्।
४. "दिक्संख्ये संज्ञायाम्" इति सूत्रस्य संख्यावाचकेन समासे किमुदाहरणम्।



## [३.२] तद्धितार्थोत्तरपदसमाहारे च॥ (२.१.५१)

**सूत्रार्थः** - तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिशावाचकं संख्यावाचकं च सुबन्तं समानाधिकरणेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण विकल्पेन तत्पुरुषसमासो विधीयते।सूत्रमिदं पदद्वयात्मकम्। तद्धितार्थोत्तरपदसमाहारे इति सप्तम्येकवचनान्तं पदम्। चेत्यव्ययपदम्।तद्धितार्थश्च उत्तरपदञ्च समाहारश्च इति तद्धितार्थोत्तरपदसमाहारं, तस्मिन् इति समाहारद्वन्द्वः। तद्धितार्थे उत्तरपदे समाहारे च इत्यर्थः। एकापि सप्तमी अत्र विषयभेदात् भिद्यते। तद्धितार्थे इत्यत्र वैषयिकाधिकरणे सप्तमी। अतः तद्धितार्थे विषये इति अर्थः पर्यवस्यति। तद्धितार्थे भविष्यत्तद्धितजन्यज्ञानविषये सतीति यावत्। उत्तरपदे इत्यत्र परसप्तमी, तेन उत्तरपदे परतः इत्यर्थो गम्यते। समाहारे इत्यत्र च वाच्याधिकरणे सप्तमी। तेन समाहारे वाच्ये इत्यर्थः प्राप्यते।

"प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः", "विभाषा" इति सूत्रचतुष्टयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे " इत्यस्मात् सुप् इति पदमनुवर्तते। "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इत्यस्मात् सूत्रात् समानाधिकरणेन इति "दिक्संख्ये संज्ञायाम्" इति सूत्राच्च दिक्संख्ये इत्यनुवर्तते। एवं च सूत्रार्थः भवति - "तद्धितप्रत्ययार्थे विषये, उत्तरपदे च परे, समाहारे च वाच्ये दिशावाचि तथा संख्यावाचि सुबन्तं समानाधिकरणेन सुबन्तेन सह वा समस्यते, स तत्पुरुषसंज्ञको भवति" इति।

एवं समासविधायकसूत्रस्यास्य पञ्चधा समासविधायकत्वं सम्भवति -

क) तद्धितार्थे विषये दिशावाचिसुबन्तं समानाधिकरणेन सुबन्तेन,

ख) तद्धितार्थे विषये संख्यावाचि सुबन्तं समानाधिकरणेन सुबन्तेन,

ग) उत्तरपदे च परतः दिशावाचि सुबन्तं समानाधिकरणेन सुबन्तेन,

घ) उत्तरपदे च परतः संख्यावाचि सुबन्तं समानाधिकरणेन सुबन्तेन,

ङ) समाहारे च वाच्ये संख्यावाचि सुबन्तं समानाधिकरणेन सुबन्तेन सह वा समस्यते, स तत्पुरुषः समास इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणान्यधः प्रस्तूयन्ते। तत्रे तद्धितार्थे विषये दिक्समासस्योदाहरणं यथा पौर्वशाल इति। तथाहि पूर्वस्यां शालायां भव इति लौकिकविग्रहे पूर्वा ङि शाला ङि इत्यलौकिकविग्रहे प्रकृतसूत्रेण पूर्वा ङि इति दिग्वाचकं सुबन्तं प्रस्तुतेन सूत्रेण "दिक्पूर्वपदादसंज्ञायां ञः" इति भवार्थे तद्धितार्थे विषये शाला ङि इति समानाधिकरणेन सुबन्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकसूत्रे अनुवृत्ते दिक्संख्ये इत्यत्र दिक्पदस्य प्रथमानिर्दिष्टत्वात् दिग्बोध्यस्य पूर्वा ङि इति पदस्य उपसर्जनसंज्ञा भवति। ततः तस्य पूर्वनिपाते पूर्वा ङि शाला ङि इति स्थिते समुदायस्य समासत्वेन प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपोः ङ्योः लुकि पूर्वा शाला इति



भवति। तदा पूर्वाशब्दस्य "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इत्यनेन वार्तिकेन पुंवद्भावे निष्पन्नात् पूर्वशालाशब्दात् "दिक्पूर्वपदादसंज्ञायां ञः" इति सूत्रेण ञप्रत्यये अनुबन्धलोपे पूर्वशाला अ इति भवति। ततः "तद्धितेष्वाचामादेः" इत्यनेन पूर्वशालाशब्दस्य आद्यचः ऊकारस्य वृद्धौ औकारे पौर्वशाला इत्यस्य भसंज्ञायां "यस्येति च" इति सूत्रेण भसंज्ञकस्य आकारस्य लोपे पौर्वशाल् अ इति जाते सर्वसंयोगे निष्पन्नस्य पौर्वशालशब्दस्य प्रातिपदिकत्वात् सौ विभक्तिकार्ये पौर्वशालः इति रूपं सिद्धम्।

तद्धितार्थे विषये संख्यातत्पुरुषसमासस्योदाहरणं यथा षाण्मातुर इति। उत्तरपदे परतः दिक्समासस्योदाहरणं पञ्चगवधनः इति। उत्तरपदे परतो दिशावाचकेन सह समासस्योदाहरणं भवति पूर्वशालप्रियः इति। समाहारे वाच्ये संख्यातत्पुरुषस्योदाहरणं यथा पञ्चगवमिति।



## पाठगतप्रश्नाः-२

५. "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रं किम्प्रकारकम्।
६. "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रस्यार्थः कः।
७. "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रस्य तद्धितार्थे विषये किमुदाहरणम्।
८. "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रस्य उत्तरपदे परे किमुदाहरणम्।
९. "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रस्य समाहारे वाच्ये किमुदाहरणम्।

---

## [३.३] दिक्पूर्वपदादसंज्ञायां ञः॥ (४.२.१०७)

**सूत्रार्थः** - दिशावाचकं पूर्वपदं यस्य तस्मात् प्रातिपदिकाद् शैषिके भवाद्यर्थे असंज्ञायां गम्यमानायां तद्धितः ञप्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण असंज्ञायां गम्यमानायां तद्धितः ञप्रत्ययो विधीयते। अत्र पूर्वशाला इति स्थिते भवार्थे ञप्रत्ययविधानाय इदं सूत्रं प्रवृत्तम्। सूत्रमिदं पदत्रयात्मकम्। अत्र दिक्पूर्वपदाद् असंज्ञायां ञः इति पदच्छेदः। दिक्पूर्वपदाद् इति पञ्चम्येकवचनान्तम् असंज्ञायाम् इति सप्तम्येकवचनान्तं ञः इति प्रथमैकवचनान्तं पदम्। दिक् दिग्वाचकं पूर्वपदं यस्य तद् दिक्पूर्वपदं तस्मादिति बहुव्रीहिः समासः। "प्रत्ययः", "परश्च", "ङ्याप्प्रातिपदिकात्", "तद्धिताः" इति सूत्रचतुष्टयमधिकृतम्। "शेषे" इत्यस्मात् सूत्रात् शेषे इति पदमनुवर्तते। एवं च सूत्रार्थः भवति - "दिशावाचकं पूर्वपदं यस्य तस्मात् प्रातिपदिकाद् शैषिके भवाद्यर्थे असंज्ञायां गम्यमानायां तद्धितः ञप्रत्ययो भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा पौर्वशालः इति। पूर्वस्यां शालायां भवः इति विग्रहे प्रक्रियाकार्ये पूर्वशाला इति स्थिते पूर्वशब्दस्य दिग्वाचकत्वात् पूर्वशाला इत्यस्य दिक्पूर्वपदत्वात् ततः



भवार्थे प्रकृतसूत्रेण ञप्रत्ययो भवति। ञप्रत्ययस्य ञकारस्य "चुटू" इत्यनेनेत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे पूर्वशाला अ इति भवति। तदा तद्धिते परे आदिवृद्धये सूत्रं प्रवृत्तम् -

## [३.४] तद्धितेष्वचामादेः॥ (७.२.११७)

**सूत्रार्थः** - ञिति णिति च तद्धिते परे अचाम् आदेः अचो वृद्धिः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण असंज्ञायां गम्यमानायां तद्धितः ञप्रत्ययो विधीयते। सूत्रमिदं पदत्रयात्मकम्। अत्र तद्धितेषु अचाम् आदेः इति पदच्छेदः। "अचो ञ्णिति" इत्यस्मात् सूत्राद् अचः ञ्णिति इति पदद्वयमनुवर्तते। "मृजेर्वृद्धिः" इत्यस्मात् सूत्राद् वृद्धिः इति पदम् अनुवर्तते। "अङ्गस्य" इति सूत्रम् अधिकृतम्। ञ् च ण् च ञ्णौ, ञ्णौ इतौ यस्य स ञ्णित्, तस्मिन् इति इतरेतरद्वन्द्वगर्भबहुब्रीहिसमासः। ञ्णिति इत्यनेन तद्धितेषु इत्यस्य अन्वयात् तस्य एकवचनान्तत्वं भवति। अचाम् इति निर्धारणे षष्ठी। एवं च सूत्रार्थः भवति - "ञिति णिति च तद्धिते परे अचाम् आदेः अचो वृद्धिः भवति।" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं यथा पौर्वशालः इति। पूर्वस्यां शालायां भवः इति विग्रहे प्रक्रियाकार्ये निष्पन्नात् दिक्पूर्वपदात् पूर्वशाला इत्यस्मात् प्रातिपदिकात् "दिक्पूर्वपदादसंज्ञायां ञः" इत्यनेन ञप्रत्यये अनुबन्धलोपे पूर्वशाला अ इति भवति। तदा प्रकृतसूत्रेण तद्धिते ञिति ञप्रत्यये परे पूर्वशालाशब्दस्य आद्यचः ऊकारस्य वृद्धौ औकारे पौर्वशाला अ इति भवति। ततः पौर्वशाला इत्यस्य "यचि भम्" इत्यनेन भसंज्ञायां "यस्येति च" इति सूत्रेण भसंज्ञकस्य आकारस्य लोपे पौर्वशाल् अ इति जाते सर्वसंयोगे निष्पन्नस्य पौर्वशालशब्दस्य प्रातिपदिकत्वात् ततः सौ विभक्तिकार्ये पौर्वशालः इति रूपं सिद्धम्।

पञ्च गावः धनं यस्य इति लौकिकविग्रहे पञ्चन् जस् गो जस् धन सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इत्यनेन बहुव्रीहिसमासे समुदायस्य समासत्वात् प्रातिपदिकसंज्ञायां सुपां लुकि पञ्चन् गो धन इति भवति। अत्रे धनशब्दे उत्तरपदे परतः "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रेण बहुव्रीहिगर्भे संख्यावाचिपञ्चन्शब्दस्य समानाधिकरणेन गोपदेन साकं विकल्पेन अवान्तरतत्पुरुषसमासे प्राप्ते "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" इत्यनेन नित्ये समासे पञ्चन् इत्यस्य उपसर्जनत्वात्पूर्वनिपाते नकारस्य "न लोपः प्रातिपदिकान्तस्य" इत्यनेन लोपे पञ्च गो धन इति स्थिते समासान्तविधायकं सूत्रं प्रवर्तते -

## [३.५] गोरतद्धितलुकि॥ (५.४.९२)

**सूत्रार्थः** - गोशब्दान्तात् तत्पुरुषात् समासान्तः टच्प्रत्ययो भवति न तद्धितलुकि।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः टच्प्रत्ययो विधीयते।सूत्रमिदं पदद्वयात्मकम्। अत्र गोः इति पञ्चम्येकवचनान्तम् अतद्धितलुकि इति सप्तम्येकवचनान्तं च पदम्। न तद्धितलुकि अतद्धितलुकि इति नञ्समासः। "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इत्यस्मात् सूत्रात् तत्पुरुषस्येति पदम् अनुवर्तते। तच्च पदं पञ्चम्यां विपरिणतं गोः इत्यनेन विशिष्यते। ततः तदन्तविधिना



गोऽन्ताद् इति समायाति। "राजाहःसखिभ्यष्टच्" इत्यस्मात् सूत्रात् टच् इत्यनुवर्तते। "समासान्तः" इत्यधिक्रियते। एवमर्थः समायाति - "गोशब्दान्तात् तत्पुरुषात् समासान्तः टच्प्रत्ययो भवति न तु तद्धितलुकि" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं पञ्चगवधनः इति। "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे प्रक्रियाकार्ये पञ्च गो धन इति स्थिते प्रस्तुतेन सूत्रेण गोशब्दान्तात् पञ्चगो इत्यस्मात् समासान्तः टच्प्रत्ययो भवति। टचः टस्य "चुटू" इत्यनेन टकारस्य च "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे पञ्च गो अ धन इति स्थिते "एचोऽयवायावः" इत्यनेन गोशब्दावयवस्य ओकारस्य अवादेशे सर्वसंयोगे निष्पन्नात् पञ्चगवधनशब्दात् प्रक्रियाकार्ये सौ पञ्चगवधनः इति रूपम्।



## पाठगतप्रश्नाः-३

१०. "दिक्पूर्वपदादसंज्ञायां ञः" इति सूत्रस्यार्थः कः।

११. पौर्वशालः इत्यत्र कस्मिन्नर्थे कः तद्धितप्रत्ययः।

१२. "तद्धितेष्वचामादेः " इति सूत्रस्यार्थः कः।

१३. पौर्वशालः इत्यत्र केन सूत्रेण कथं च वृद्धिः।

१४. "गोरतद्धितलुकि" इति सूत्रस्यार्थः कः।

१५. पञ्चगवधनः इत्यत्र टच्प्रत्ययः केन सूत्रेण कथं च।

---

**समाहारे वाच्ये एतत्प्रकरणोपकारकाणि सूत्राणि वर्ण्यन्ते -**

## [३.६] तत्पुरुषः समानाधिकरणः कर्मधारयः॥ (१.२.४२)

**सूत्रार्थः** - समानाधिकरणः तत्पुरुषसमासः कर्मधारयसंज्ञको भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण समानाधिकरणस्य तत्पुरुषस्य कर्मधारयसंज्ञा विधीयते। सूत्रमिदं पदत्रयात्मकम्। अत्र तत्पुरुषः समानाधिकरणः कर्मधारयः इति पदत्रयं प्रथमैकवचनान्तम्। समानम् एकम् अधिकरणं वाच्यं ययोः ते समानाधिकरणे पदे इति बहुव्रीहिः। समानाधिकरणे नाम समानविभक्तिके। समानाधिकरणे पदे स्तः अस्येति विग्रहे "अर्शआदिभ्योऽच्" इत्यनेन सूत्रेण मत्वर्थे अर्शआदित्वाद् अचि समानाधिकरणः इति निष्पन्नः। समानाधिकरणः नाम समानाधिकरणपदकः। एवम् अस्य सूत्रस्यार्थः समायाति - "समानाधिकरणपदकः तत्पुरुषसमासः कर्मधारयसंज्ञको भवति" इति।

कर्मधारयसंज्ञायां सत्यां कृष्णा चतुर्दशी इति विग्रहे "पुंवत्कर्मधारयजातीयदेशीयेषु" इत्यनेन सूत्रेण पूर्वपदस्य कृष्णापदस्य कर्मधारयसमासे पुंवद्भावे प्रक्रियाकार्ये कृष्णचतुर्दशी इति रूपं सिध्यति।



कर्मधारयसंज्ञकस्य तत्पुरुषसंज्ञा अप्यभीष्टा। अत एव "आकडारादेका संज्ञा" इति सूत्रस्याधिकारे अस्य सूत्रस्य पाठो न विहितः।

## [३.७] पुंवत्कर्मधारयजातीयदेशीयेषु॥ (६.३.४२)

**सूत्रार्थः** - भाषितपुंस्कात्पर ऊङोऽभावो यस्मिन् तथाभूतस्य स्त्रीलिङ्गकस्य पूर्वपदस्य कर्मधारये जातीयदेशीययोश्च परतः पुंवाचकस्येव रूपं भवति।

**सूत्रव्याख्या** - इदम् अतिदेशसूत्रम्। अनेन सूत्रेण पुंवद्भावस्यातिदेशो भवति। सूत्रे अस्मिन् पदद्वयं पुंवत् कर्मधारयजातीयदेशीयेषु चेति। पुंवत् इति वतिप्रत्ययान्तम् अव्ययम्, कर्मधारयजातीयदेशीयेषु इति च सप्तमीबहुवचनान्तं पदम्। कर्मधारयश्च जातीयश्च देशीयश्च कर्मधारयजातीयदेशीयास्तेषु कर्मधारयजातीयदेशीयेषु इति इतरेतरद्वन्द्वसमासः। अत्र विषयभेदात् सप्तम्या अपि भेदः। कर्मधारये इत्यत्र अधिकरणसप्तमी, जातीयदेशीयेषु इत्यत्र परसप्तमी। अत्र "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रात् स्त्रियाः भाषितपुंस्कादनूङ् चेति पदद्वयम् अनुवर्तते। अत्र भाषितपुंस्कादनूङ् इति लुप्तषष्ठ्येकवचनान्तं समस्तं पदं स्त्रियाः इत्यस्य विशेषणम्।अत्र निपातनात् पञ्चम्याः अलुक् षष्ठ्याश्च लुक्। भाषितः पुमान् यस्मिन् सः भाषितपुंस्कः इति बहुव्रीहिसमासः, तस्मात् भाषितपुंस्काद् इति। ऊङोऽभावः अनूङ् इति अव्ययीभावः। भाषितपुंस्काद् अनूङ् यस्यां सा भाषितपुंस्कादनूङ्, तस्याः भाषितपुंस्कादनूङ् इति। अतः सूत्रस्यास्यार्थस्तावत् - "भाषितपुंस्कात्पर ऊङोऽभावो यस्मिन् तथाभूतस्य स्त्रीलिङ्गकस्य पूर्वपदस्य कर्मधारये जातीयदेशीययोश्च परतः पुंवाचकस्येव रूपं भवति" इति।

**उदाहरणम्** - अत्रोदाहरणं तावत् कृष्णचतुर्दशी इति। कृष्णा चासौ चतुर्दशी च इति लौकिकविग्रहे कृष्णा सु चतुर्दशी सु इत्यलौकिकविग्रहे "विशेषणं विशेष्येण बहुलम्" इत्यनेन तत्पुरुषसमासे, कृष्णा सु इत्यस्य पूर्वनिपाते प्रातिपदिकसंज्ञायां ततः सुब्लुकि कृष्णा चतुर्दशी इति भवति। कृष्णाचतुर्दशी इति समानाधिकरणस्य तत्पुरुषस्य "तत्पुरुषः समानाधिकरणः कर्मधारयः" इत्यनेन कर्मधारयसंज्ञा भवति। ततः अत्र कृष्णा इत्यस्य पुंलिङ्गे अपि समानार्थे प्रयोगाद् भाषितपुंस्कत्वात् ततः ऊङः अभावाद् प्रस्तुतसूत्रेण पुंवद्भावे कृष्णचतुर्दशी इति भवति। ततः कृष्णचतुर्दशीशब्दस्वरूपस्य एकदेशविकृतन्यायेन समासत्वाक्षत्या ततः सौ विभक्तिकार्ये कृष्णचतुर्दशी इति रूपम्। जातीयर्-प्रत्यये परे पाचकजातीया इति, देशीयर्-प्रत्यये परे च पुंवद्भावस्य पाचकदेशीया इत्युदाहरणम्।

## [३.८] संख्यापूर्वो द्विगुः॥ (२.१.५२)

**सूत्रार्थः** - तद्धितार्थोत्तरपदसमाहारे च इत्यस्मिन् सूत्रे उक्तः त्रिविधः संख्यापूर्वः समासो द्विगुसंज्ञो भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण संख्यापूर्वस्य तत्पुरुषस्य द्विगुसंज्ञा विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र संख्यापूर्वः द्विगुः इति पदद्वयं प्रथमैकवचनान्तम्। संख्या पूर्वः पूर्वावयवः



यस्य स संख्यापूर्वः इति बहुव्रीहिसमासः। "तद्धितार्थोत्तरपदसमाहारे च" इत्यत्रोक्तः त्रिविधः संख्यापूर्वपदः समासः अत्र संख्यापूर्वशब्देन गृह्यते। एतस्य सूत्रस्य अर्थो भवति - "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन तद्धितार्थे विषये, उत्तरपदे परे समाहारे च वाच्ये यः संख्यापूर्वपदः समासः भवति स द्विगुसंज्ञको भवति" इति।

**उदाहरणम्** - सूत्रस्यास्य तद्धितार्थे विषये पञ्चकलापः इति, उत्तरपदे परतः पञ्चगवधनः इति, समाहारे च वाच्ये पञ्चगवम् इत्युदाहरणं भवति। तथाहि पञ्चानां गवां समाहारः इति लौकिकविग्रहे पञ्चन् आम् गो आम् इत्यलौकिकविग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे प्रक्रियाकार्ये निष्पन्नात् गोशब्दान्तात् पञ्चगोशब्दात् "गोरतद्धितलुकि" इति सूत्रेण टच्प्रत्यये पञ्चगो अ इति भवति। ततः "एचोऽयवायावः" इति सूत्रेण गकारोत्तरस्य ओकारस्य अवादेशे पञ्चगव इति भवति। "तत्पुरुषः समानाधिकरणः कर्मधारयः" इत्यनेन कर्मधारयसंज्ञायां प्रकृतसूत्रेण पञ्चन् इति संख्यापूर्वत्वाद् पञ्चगव इत्यस्य द्विगुसमासः भवति। ततः द्विगुसमासे विशेषकार्यबोधनाय सूत्रं प्रवृत्तम् -

## [३.९] द्विगुरेकवचनम्॥ (२.४.१)

**सूत्रार्थः** - दिग्वर्थः समाहारः एकवद् भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण एकवद्भावः विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र द्विगुः एकवचनम् इति पदद्वयं प्रथमैकवचनान्तम्। "समाहारग्रहणं कर्तव्यम्" इति वार्तिकबलात् सूत्रे समाहारः इति पदम् आगच्छति। वक्तीति विग्रहे "कृत्यल्युटो बहुलम्" इत्यनेन बाहुलकात् कर्तरि ल्युटि नपुंसकत्वे वचनम् इति निष्पन्नम्। एकस्य वचनम् एकवचनम् इति षष्ठीतत्पुरुषसमासः। एकस्य अर्थस्य प्रतिपादकः इत्यर्थः। "समाहारार्थे यः द्विगुः भवति स एकवचनं भवति" इति सूत्रार्थः।

**उदाहरणम्** - तथाहि पञ्चानां गवां समाहारः इति लौकिकविग्रहे पञ्चन् आम् गो आम् इत्यलौकिकविग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे प्रक्रियाकार्ये निष्पन्नस्य पञ्चगवशब्दस्य "संख्यापूर्वो द्विगुः" इत्यनेन द्विगुसमासे प्रस्तुतसूत्रेण एकवद्भावः विधीयते। ततः सूत्रं प्रवृत्तम्-

## [३.१०] स नपुंसकम्॥ (२.४.१७)

**सूत्रार्थः** - समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण नपुंसकत्वं विधीयते। सूत्रमिदं पदद्वयात्मकम्। अत्र स नपुंसकम् इति पदद्वयं प्रथमैकवचनान्तम्। अत्र सः इति पदेन समाहारार्थे द्विगोः समाहारद्वन्द्वस्य च ग्रहणम्। एवं "समाहारे द्विगुः द्वन्द्वश्च नपुंसकं भवति" इति सूत्रार्थः।

द्विगुसमासस्य तत्पुरुषभेदत्वात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन प्राप्तायाः द्विगोः द्वन्द्वस्य च परवल्लिङ्गताया अपवादभूतं सूत्रमिदम्।

**उदाहरणम्** - पञ्चगवम् इत्युदाहरणम्। तथाहि पञ्चानां गवां समाहारः इति लौकिकविग्रहे पञ्चन् आम् गो आम् इत्यलौकिकविग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे प्रक्रियाकार्ये निष्पन्नस्य



पञ्चगवशब्दस्य "संख्यापूर्वो द्विगुः" इत्यनेन द्विगुसमासो भवति। ततः एकवद्भावे प्रकृतसूत्रेण तस्य नपुंसकलिङ्गत्वं विधीयते। तेन पञ्चगवशब्दात् नपुंसके सौ सोरमि प्रक्रियाकार्ये पञ्चगवम् इति रूपं निष्पद्यते। समाहारद्वन्द्वे अस्य सूत्रस्योदाहरणं पाणिपादम् इति।



## पाठगतप्रश्नाः-४

१६. "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति सूत्रस्यार्थः कः।

१७. "पुंवत्कर्मधारयजातीयदेशीयेषु" इति सूत्रस्यार्थः कः।

१८. "पुंवत्कर्मधारयजातीयदेशीयेषु" इति सूत्रस्योदाहरणमेकं देयम्।

१९. "संख्यापूर्वो द्विगुः" इति सूत्रस्यार्थः कः।

२०. "द्विगुरेकवचनम्" इति सूत्रस्यार्थः कः।

२१. "स नपुंसकम्" इति सूत्रस्यार्थः कः।

२२. द्विगौ एकवद्भावस्योदाहरणमेकं देयम्।

---

## [३.११] विशेषणं विशेष्येण बहुलम्॥ (२.१.५७)

**सूत्रार्थः** - भेदकं भेद्येन समानाधिकरणेन सह बहुलं समस्यते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण विशेषणविशेष्यसमासो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे विशेषणमिति प्रथमैकवचनान्तं, विशेष्येण इति तृतीयैकवचनान्तं, बहुलम् इति प्रथमैकवचनान्तं च पदम्। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इत्यस्मात् सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। विशिष्यते अनेनेति विशेषणम्, अन्यस्मात् व्यावर्तकं भेदकम्। यद् भिद्यते तद् व्यावर्त्यं भेद्यं विशेष्यम् इति। अतः सूत्रस्यास्यार्थस्तावत् "भेदकं समानाधिकरणेन भेद्येन बहुलं समस्यते, स च तत्पुरुषसंज्ञो भवति" इति।

"तत्पुरुषः समानाधिकरणः कर्मधारयः" इति सूत्रबलात् अयं समासः कर्मधारयसंज्ञकोऽपि भवति। वाग्रहणेनैव सिद्धे सूत्रे बहुलग्रहणात् सर्वोपाधिव्यभिचारः। तेन कृष्णसर्पः इत्यादौ नित्यसमासः। रामो जामदग्न्यः इत्यादौ तु समासः न भवति।

**उदाहरणम्** - नीलोत्पलम् इत्याद्यत्रोदाहरणम्। नीलं च तदुत्पलम् इति लौकिकविग्रहे नील सु उत्पल सु इत्यलौकिकविग्रहे विशेषणवाचकं नील सु इति सुबन्तं समानाधिकरणेन विशेष्येण उत्पल सु इत्यनेन सुबन्तेन प्रस्तुतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकसूत्रे विशेषणम् इत्यस्य प्रथमानिर्देशात् तद्बोध्यस्य नील सु इति पदस्य उपसर्जनत्वेन पूर्वनिपाते नील सु उत्पल सु इति भवति। ततः समुदायस्य समासत्वेन प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुद्वयस्य लुकि



नील उत्पल इति भवति। ततः "आद् गुणः" इति सूत्रेण अकारस्य उकारस्य च स्थाने एकारे एकादेशे निष्पन्नस्य नीलोत्पलशब्दस्य एकदेशविकृतन्यायेन प्रातिपदिकत्वात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रेण नपुंसके लिङ्गे वर्तमानात् ततः सौ, सोरमि विभक्तिकार्ये नीलोत्पलम् इति रूपं सिद्धम्।

नीलपदस्य अनीलादुत्पलाद् उत्पलशब्दस्य व्यावर्तकत्वेन विशेषणत्वमस्ति। तथैव उत्पलपदम् अनुत्पलान्नीलं व्यावर्तयतीत्युत्पलपदस्यापि विशेषणत्वम्। अतः उत्पलशब्दस्य पूर्वनिपातो भवतु इति शङ्का भवति। अत्र समाधानं तावद् जातिगुणक्रियावाचिनां शब्दानां समभिव्याहारे जातिवाचक एव विशेष्यम्, अन्यद् विशेषणं स्वभावात्। अत्र उत्पलशब्दस्य जातिवाचकत्वाद् विशेषणत्वाभावात् न पूर्वनिपातः। गुणशब्दयोः गुणक्रियाशब्दयोः समभिव्याहारे विशेषणविशेष्यभावस्य नास्ति नियमः। अतः गुणवाचकयोः विशेषणविशेष्यभावे खञ्जकुब्जः कुब्जखञ्जः इति रूपद्वयं भवति। एवमेव क्रियाशब्दयोरपि समभिव्याहारे पाचकपाठकः पाठकपाचकः इति रूपद्वयम्। तथा गुणक्रियाशब्दयोः समभिव्याहारे खञ्जपाचकः, पाचकखञ्जः इति रूपद्वयम्। सामान्यजातिविशेषजातिशब्दयोः समभिव्याहारे तु विशेषजातिरेव विशेषणम्। यथा शिंशपावृक्षः इत्यादौ।

## [३.१२] कुत्सितानि कुत्सनैः॥ (२.१.५३)

**सूत्रार्थः** - कुत्स्यमानानि सुबन्तानि कुत्सनैः समानाधिकरणैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र कुत्सितानि इति प्रथमाबहुवचनान्तं कुत्सनैः इति च तृतीयाबहुवचनान्तं पदम्। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तच्च विभक्तिविपरिणामेन कुत्सनैः इत्यस्य विशेषणत्वात् समानाधिकरणैः इति भवति। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सुबन्तम् इति लभ्यते। कुत्सितशब्दे वर्तमाने क्तप्रत्ययः, व्याख्यानात्। कुत्सितानि इत्यस्य कुत्स्यमानानि इत्यर्थः। अतः सूत्रस्यास्यार्थः "कुत्स्यमानानि सुबन्तानि कुत्सनैः समानाधिकरणैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - अत्रोदाहरणं तावत् वैयाकरणखसूचिः इति। वैयाकरणश्चासौ खसूचिश्चेति इति लौकिकविग्रहे वैयाकरण सु खसूचि सु इत्यलौकिकविग्रहे कुत्स्यमानवाचकं वैयाकरण सु इति सुबन्तं समानाधिकरणेन खसूचि सु इत्यनेन सुबन्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः कुत्सितार्थस्य वैयाकरण सु इत्यस्य पूर्वनिपाते सुब्लुकि निष्पन्नात् वैयाकरणखसूचिशब्दात् सौ प्रक्रियाकार्ये वैयाकरणखसूचिः इति रूपं निष्पन्नम्। एवमेव मीमांसकदुर्दुरूटः इत्यादिकमेतस्य सूत्रस्योदाहरणम्।





## पाठगतप्रश्नाः-५

२३. "विशेषणं विशेष्येण बहुलम्" इति सूत्रस्यार्थः कः।

२४. "विशेषणं विशेष्येण बहुलम्" इति सूत्रे बहुलग्रहणस्य किं फलम्।

२५. नीलोत्पलम् इत्यत्र नीलशब्दस्य विशेष्यत्वं कुतः न।

२६. गुणक्रियावाचकानां समभिव्याहारे विशेषणविशेष्यभावस्योदाहरणं देयम्।

२७. "कुत्सितानि कुत्सनैः" इति सूत्रस्यार्थः कः।

२८. "कुत्सितानि कुत्सनैः" इति सूत्रस्योदाहरणं देयम्।

---

## [३.१३] पापाणके कुत्सितैः॥ (२.१.५४)

**सूत्रार्थः** - पापशब्दः अणकशब्दश्च कुत्स्यमानैः समानाधिकरणैः सुबन्तैः सह समस्यते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र पापाणके इति प्रथमाद्विवचनान्तं कुत्सितैः इति च तृतीयाबहुवचनान्तं पदम्। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तच्च विभक्तिविपरिणामेन कुत्सितैः इत्यस्य विशेषणत्वात् समानाधिकरणैः इति भवति। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ कुत्सितैः इत्यस्य विशेषणत्वात् सुबन्तैः इति लभ्यते। कुत्सितैः नाम कुत्स्यमानैः। अतः सूत्रस्यास्यार्थस्तावत् - "पापशब्दः अणकशब्दश्च कुत्स्यमानैः समानाधिकरणैः सुबन्तैः सह समस्यते, स च तत्पुरुषसंज्ञको भवति" इति।

"विशेषणं विशेष्येण बहुलम्" इत्यनेन एव सूत्रकार्ये सिद्धे सूत्रमिदं किमर्थमिति प्रश्नः समायाति। अत्रोत्तरं तावत् पूर्वसूत्रस्यापवादभूतमिदं सूत्रम्। अत्र पापाणके इति प्रथमान्तत्वेन पठितत्वात् समासे तयोरेव शब्दयोः पूर्वनिपातः।

**उदाहरणम्** - अत्रोदाहरणं तावत् पापनापितः इति। पापश्चासौ नापितश्चेति इति लौकिकविग्रहे पाप सु नापित सु इत्यलौकिकविग्रहे पाप सु इति सुबन्तं समानाधिकरणेन कुत्स्यमानेन नापित सु इत्यनेन सुबन्तेन सह प्रोक्तसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः पापशब्दस्य पूर्वनिपाते सुब्लुकि निष्पन्नात् पापनापितशब्दात् सौ प्रक्रियाकार्ये पापनापितः इति रूपं निष्पन्नम्। एवमेव अणककुलालः इति अस्य सूत्रस्योदाहरणम्।



## [३.१४] उपमानानि सामान्यवचनैः॥ (२.१.५५)

**सूत्रार्थः** - उपमानवाचकानि सुबन्तानि सामान्यवचनैः समानाधिकरणैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र उपमानानि इति प्रथमाबहुवचनान्तं सामान्यवचनैः इति च तृतीयाबहुवचनान्तं पदम्। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तच्च विभक्तिविपरिणामेन सामान्यवचनैः इत्यस्य विशेषणत्वात् समानाधिकरणैः इति भवति। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ समानाधिकरणैः इत्यनेनान्वयात् सुबन्तैः इति लभ्यते। उपपूर्वकात् मीधातोः करणे ल्युटि उपमानशब्दो निष्पद्यते। उपमीयते सदृशतया परिच्छिद्यते यैस्तानि उपमानानि। समानस्य भावः सामान्यं, साधारणो धर्मः इति तदर्थः। सामान्यम् उक्तवन्तः इति सामान्यवचनाः, तैः सामान्यवचनैः। उपमानोपमेयसाधारणो यो धर्मस्तद्विशिष्टवचनैरित्यर्थः। ये शब्दाः पूर्वं साधारणधर्ममुक्त्वा मत्वर्थीयाच्प्रत्ययबलात् तद्वति द्रव्ये वर्तन्ते ते सामान्यवचना इति वैयाकरणराद्धान्तः। अतः सूत्रस्यास्यार्थस्तावत् "उपमानवाचकानि सुबन्तानि सामान्यवचनैः समानाधिकरणैः सुबन्तैः सह वा समस्यन्ते, स च तत्पुरुषसंज्ञको भवति" इति।

"विशेषणं विशेष्येण बहुलम्" इत्यनेनैव समासे उपमानवाचकस्य पूर्वनिपाते सिद्धे सूत्रमिदं व्यर्थमिति चेदुच्यते उपमानवाचकपदस्यैव पूर्वनिपातः यथा स्यात् तदर्थमिदं सूत्रम्। अन्यथा उभयोः गुणवाचकत्वेन विशेषणविशेष्यभावे कामचारात् खञ्जकुब्जः, कुब्जखञ्जः इतिवद् अनियमापत्तिरिति स्यात्।

**उदाहरणम्** - अत्रोदाहरणं तावत् घनश्यामः इति। घन इव श्यामः इति लौकिकविग्रहे घन सु श्याम सु इत्यलौकिकविग्रहे उपमानवाचकं घन सु इति सुबन्तं समानाधिकरणेन श्याम सु इत्यनेन सामान्यवचनेन सह विकल्पेन प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः समासविधायकशास्त्रे उपमानानि इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य घन सु इत्यस्य उपसर्जनसंज्ञायां पूर्वनिपाते, समुदायस्य समासत्वात् सुब्लुकि निष्पन्नात् घनश्यामशब्दात् सौ प्रक्रियाकार्ये घनश्यामः इति रूपं निष्पन्नम्।

घनशब्दस्य जलधरवाचकत्वात् श्यामशब्दस्य च रामार्थवाचकत्वात् नास्ति सामानाधिकरण्यम् इति शङ्का। समाधानं तावद् घनपदं घनसदृशे रामे वर्तते, श्यामशब्दोऽपि श्यामगुणविशिष्टे रामे वर्तते इत्यस्ति सामानाधिकरण्यम्।



### पाठगतप्रश्नाः-६

२९. "पापाणके कुत्सितैः" इति सूत्रस्यार्थः कः।

३०. "पापाणके कुत्सितैः" इति सूत्रस्योदाहरणं देयम्।



३१. "विशेषणं विशेष्येण बहुलम्" इत्यनेन एव सिद्धे "पापाणके कुत्सितैः" इति सूत्रं किमर्थम्।

३२. "उपमानानि सामान्यवचनैः" इति सूत्रस्यार्थः कः।

३३. "उपमानानि सामान्यवचनैः" इति सूत्रस्योदाहरणं देयम्।

३४. "विशेषणं विशेष्येण बहुलम्" इत्यनेन एव सिद्धे "उपमानानि सामान्यवचनैः" इति सूत्रं किमर्थम्।

## [३.१५] उपमितं व्याघ्रादिभिः सामान्याप्रयोगे॥ (२.१.५५)

**सूत्रार्थः** - उपमेयं सुबन्तं उपमानैः व्याघ्रादिभिः समानाधिकरणैः सुबन्तैः सह विकल्पेन समस्यते साधारणधर्मस्याप्रयोगे सति, तत्पुरुषसंज्ञकश्च भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदत्रयम् अस्ति। अत्र उपमितमिति प्रथमैकवचनान्तं, व्याघ्रादिभिः इति तृतीयाबहुवचनान्तं, सामान्याप्रयोगे इति सप्तम्येकवचनान्तं पदम्। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तच्च विभक्तिविपरिणामेन व्याघ्रादिभिः इत्यस्य विशेषणत्वात् समानाधिकरणैः इति भवति। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ उपमितम् इत्यनेनान्वयात् सुबन्तम् इति लभ्यते। सुपा इत्यस्य तदन्तविधौ व्याघ्रादिभिः इत्यनेनान्वयात् सुबन्तैः इति लभ्यते। उपमितं नाम उपमेयम्। भूतकालः अत्र न विवक्षितः। तच्च सम्बन्धिशब्दत्वाद् उपमानमाक्षिपति। आक्षिप्तस्य उपमानस्य समानाधिकरणेन इत्यस्य च व्याघ्रादिभिः सहान्वयः भवति। एवम् समानाधिकरणैः उपमानैः व्याघ्रादिभिः सुबन्तैः इत्यर्थः। समानस्य भावः सामान्यं, साधारणो धर्मः इत्यर्थः। सामान्यस्य अप्रयोगः सामान्याप्रयोगः, तस्मिन् सामान्याप्रयोगे इति षष्ठीतत्पुरुषः। अतः सूत्रस्यास्यार्थः - "उपमेयं सुबन्तं उपमानैः व्याघ्रादिभिः समानाधिकरणैः सुबन्तैः सह विकल्पेन समस्यते साधारणधर्मस्याप्रयोगे सति, तत्पुरुषसंज्ञकश्च भवति" इति।

अत्र उपमानोपमेययोः उपमानस्यैव पूर्वनिपाते प्राप्ते उपमितस्य पूर्वनिपातविधानार्थम् इदम्।

**उदाहरणम्** - पुरुषव्याघ्रः इत्यादिकमस्य सूत्रस्योदाहरणम्। पुरुषो व्याघ्र इव इति लौकिकविग्रहे पुरुष सु व्याघ्र सु इत्यलौकिकविग्रहे उपमेयवाचकं पुरुष सु इति सुबन्तं समानाधिकरणेन व्याघ्र सु इत्युपमानवाचकेन सुबन्तेन सह विकल्पेन प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः पुरुष सु इत्युपमेयस्य उपसर्जनत्वात् पूर्वनिपाते सुब्लुकि निष्पन्नात् पुरुषव्याघ्रशब्दात् सौ प्रक्रियाकार्ये पुरुषव्याघ्रः इति रूपं सिद्धम्। अत्र सादृश्यबोधकशौर्यात्मकसाधारणधर्मस्याप्रयोगात् प्रस्तुतसूत्रेण समासः।

सामान्याप्रयोगे इति वचनात् पुरुषो व्याघ्र इव शूर इति विग्रहे उपमानोपमेयसाधारणधर्मस्य शौर्यस्य प्रयोगात् प्रस्तुतसूत्रेण न समासः। व्याघ्रादेराकृतिगणत्वात् मुखपद्मम्, मुखकमलम्, करकिसलयम् इत्यादीन्यपि सिध्यन्ति।



## (३.१५.१) शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् (वार्तिकम् )

**वार्तिकार्थः** - शाकपार्थिवादीनां शब्दानां सिद्धये पूर्वपदे स्थितस्य उत्तरपदलोपस्य उपसंख्यानं कर्तव्यम्।

**वार्तिकव्याख्या** - "वर्णो वर्णेन" इति सूत्रस्थे महाभाष्ये "समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च" इति। तस्यैव वार्तिकस्य सज्जीकरणेन पूर्वोक्तं वार्तिकरूपम् आगतम्। शाकपार्थिवादीनां सिद्धौ वारद्वयं समासः भवति। आदौ पदद्वयस्य समासेन एकं पदं निर्मीयते, ततः समस्तस्य पदस्य अन्येन समानाधिकरणेन पदेन सह कर्मधारयसमासो भवति। तत्र कर्मधारयसमासे पूर्वपदस्य उत्तरपदस्य अनेन वार्तिकेन लोपो भवति।

**उदाहरणम्** - वार्तिकस्यास्योदाहरणं भवति शाकपार्थिवः इति। शाकः प्रियः यस्येति विग्रहे "अनेकमन्यपदार्थे" इत्यनेन समासे शाकप्रियः इति रूपम्। शाकप्रियः पार्थिवः इति लौकिकविग्रहे शाकप्रिय सु पार्थिव सु इत्यलौकिकविग्रहे विशेषणं विशेष्येण बहुलम् इत्यनेन सूत्रेण समासे प्रक्रियाकार्ये शाकप्रियपार्थिवशब्दो निष्पन्नः। तदा अनेन वार्तिकेन पूर्वपदस्य शाकप्रियेत्यस्य उत्तरपदस्य प्रियशब्दस्य लोपे प्रक्रियाकार्ये शाकपार्थिवः इति रूपं निष्पद्यते। एतस्यान्यदुदाहरणं भवति देवब्राह्मणः। देवानां पूजकः देवपूजकः, देवपूजकः ब्राह्मणः देवब्राह्मणः।



### पाठगतप्रश्नाः-७

३५. "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रस्यार्थः कः।

३६. "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रस्योदाहरणं देयम्।

३७. "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रस्य किं प्रयोजनम्।

३८. "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रे सामान्याप्रयोगे इति पदं किमर्थम्।

३९. "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति वार्तिकस्यार्थः कः।

४०. "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति वार्तिकस्योदाहरणं देयम्।

---

## [३.१६] सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः॥ (२.१.६१)

**सूत्रार्थः** - सन्महत्परमोत्तमोत्कृष्टाः समानाधिकरणैः पूज्यमानैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र सन्महत्परमोत्तमोत्कृष्टाः इति इतरेतरद्वन्द्वसमासनिष्पन्नं प्रथमाबहुवचनान्तं, पूज्यमानैः इति



तृतीयाबहुवचनान्तं पदम्। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तस्य च पूज्यमानैः इत्यनेनान्वयाद् विभक्तिविपरिणामेन समानाधिकरणैः इति भवति। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ सन्महत्परमोत्तमोत्कृष्टाः इत्यनेनान्वयात् सुबन्ताः इति लभ्यते। सुपा इत्यस्य तदन्तविधौ पूज्यमानैः इत्यनेनान्वयात् सुबन्तैः इति लभ्यते। अतः सूत्रस्यास्यार्थस्तावत् - "सन्महत्परमोत्तमोत्कृष्टाः सुबन्ताः पूज्यमानैः समानाधिकरणैः सुबन्तैः सह वा समस्यन्ते, तत्पुरुषसंज्ञकश्च भवति" इति।

"विशेषणं विशेष्येण बहुलम्" इत्यनेन एव समासे सिद्धे सन्महत्परमोत्तमोत्कृष्टानां शब्दानां पूर्वनिपातनियमाय इदं सूत्रम्।

**उदाहरणम् -** सद्वैद्यः इत्यादिकमस्य सूत्रस्योदाहरणम्। सन् वैद्यः इति लौकिकविग्रहे सत् सु वैद्य सु इत्यलौकिकविग्रहे सत् सु इत्यस्य समानाधिकरणेन वैद्य सु इत्यनेन पूज्यमानवाचकेन सुबन्तेन सह विकल्पेन प्रकृतसूत्रेण समासे प्रक्रियाकार्ये सद्वैद्यः इति रूपं सिद्धम्। एवमेव महावैयाकरणः इत्यादिकमस्योदाहरणम्।

## [३.१७] वृन्दारकनागकुञ्जरैः पूज्यमानम्॥ (२.१.६२)

**सूत्रार्थः -** पूज्यमानं सुबन्तं वृन्दारकनागकुञ्जरैः समानाधिकरणैः सुबन्तैः सह वा समस्यते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र वृन्दारकनागकुञ्जरैः इति इतरेतरद्वन्द्वसमासनिष्पन्नं तृतीयाबहुवचनान्तं, पूज्यमानम् इति प्रथमैकवचनान्तं पदम्। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तस्य च वृन्दारकनागकुञ्जरैः इत्यनेनान्वयाद् विभक्तिविपरिणामेन समानाधिकरणैः इति भवति। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। सुप् इत्यस्य तदन्तविधौ पूज्यमानम् इत्यनेनान्वयात् सुबन्तम् इति लभ्यते। सुपा इत्यस्य तदन्तविधौ वृन्दारकनागकुञ्जरैः इत्यनेनान्वयात् सुबन्तैः इति लभ्यते। अतः सूत्रस्यास्यार्थस्तावत् - "पूज्यमानं सुबन्तं वृन्दारकनागकुञ्जरैः समानाधिकरणैः सुबन्तैः सह वा समस्यते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम् -** गोवृन्दारक इत्यादिकमस्य सूत्रस्योदाहरणम्। गौः वृन्दारक इव इति लौकिकविग्रहे गो सु वृन्दारक सु इत्यलौकिकविग्रहे गो सु इति पूज्यमानं सुबन्तं समानाधिकरणेन वृन्दारक सु इत्यनेन सुबन्तेन सह विकल्पेन प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः प्रक्रियाकार्ये निष्पन्नात् गोवृन्दारकशब्दात् सौ गोवृन्दारकः इति रूपं सिद्धम्। एवमेव गोनागः इत्यादिकमस्योदाहरणम्।



## [३.१८] किं क्षेपे॥ (२.१.६४)

**सूत्रार्थः** - निन्दायां गम्यमानायां किमित्यव्ययं समानाधिकरणेन सुबन्तेन सह समस्यते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र किम् इति अव्ययम्, क्षेपे इति च सप्तम्येकवचनान्तं पदम्। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तस्य च सुपा इत्यत्र तदन्तविधौ सुबन्तेनेत्यनेनान्वयो भवति। क्षेपो नाम निन्दा। अतः सूत्रस्यास्यार्थस्तावत् - "निन्दायां गम्यमानायां किमित्यव्ययं समानाधिकरणेन सुबन्तेन सह समस्यते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - अत्रोदाहरणं तावत् किंराजा इति। कुत्सितो राजा इति लौकिकविग्रहे किम् राजन् सु इत्यलौकिकविग्रहे किम् इत्यव्ययं निन्दार्थकं समानाधिकरणेन राजन् सु इत्यनेन सुबन्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः प्रक्रियाकार्ये निष्पन्नात् किंराजन् इत्यस्मात् सौ किंराजा इति रूपम्।



### पाठगतप्रश्नाः-८

४१. "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति सूत्रस्यार्थः कः।

४२. "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति सूत्रस्योदाहरणं देयम्।

४३. "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति सूत्रस्य किं प्रयोजनम्।

४४. "वृन्दारकनागकुञ्जरैः पूज्यमानम्" इति सूत्रस्यार्थः कः।

४५. "वृन्दारकनागकुञ्जरैः पूज्यमानम्" इति सूत्रस्योदाहरणं देयम्।

४६. "किं क्षेपे" इति सूत्रस्यार्थः कः।

४७. "किं क्षेपे" इति सूत्रस्योदाहरणं देयम्।

---

## [३.१९] प्रशंसावचनैश्च॥ (२.१.६६)

**सूत्रार्थः** - रूढ्या प्रशंसावाचकैः समानाधिकरणैः सुबन्तैः जातिवाचकं सुबन्तं समस्यते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। अत्र प्रशंसावचनैः इति तृतीयाबहुवचनान्तं पदम्, चेत्यव्ययपदम्। प्रशंसां वचन्ति इति प्रशंसावचनाः, तैः प्रशंसावचनैः। रूढ्या प्रशंसावाचकैः इत्यर्थः। "प्राक्कडारात्समासः", "सह सुपा",



"तत्पुरुषः" इति सूत्रत्रयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। अत्र "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति सूत्रात् समानाधिकरणेन इति पदम् अनुवर्तते। तस्य च प्रशंसावचनैः इत्यनेनान्वयात् विभक्तिविपरिणामेन समानाधिकरणैः इति भवति। सुपा इत्यत्र तदन्तविधौ प्रशंसावचनैः इत्यनेनान्वयात् सुबन्तैः इति भवति। "पोटायुवतिस्तोककतिपयगृष्टिधेनु-वशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः" इत्यस्मात् सूत्रात् जातिः इत्यनुवर्तते। जातिर्नाम जातिवाचकम्। तस्य विशेषणत्वात् सुप् इत्यस्य तदन्तविधौ सुबन्तमिति भवति। अतः सूत्रस्यास्यार्थस्तावत् - "रूढ्या प्रशंसावाचकैः समानाधिकरणैः सुबन्तैः जातिवाचकं सुबन्तं समस्यते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - अत्रोदाहरणं तावत् गोतल्लजः इति। तल्लजश्चासौ गौश्च इति लौकिकविग्रहे तल्लज सु गो सु इत्यलौकिकविग्रहे प्रंशसावाचकेन तल्लज सु इति सुबन्तेन सह जातिवाचकं गो सु इति सुबन्तं प्रस्तुतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः प्रक्रियाकार्ये निष्पन्नात् गोतल्लजशब्दात् सौ गोतल्लजः इति रूपं निष्पन्नम्। एवमेव गोमतल्लिका, गोमचर्चिका इत्यादिकमेतस्य सूत्रस्योदाहरणम्।

## [३.२०] नञ्॥ (२.२.६)

**सूत्रार्थः** - नञ् सुबन्तेन सह समस्यते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण नञ्तत्पुरुषसमासो विधीयते। सूत्रेऽस्मिन् पदमेकम् अस्ति। अत्र नञ् प्रथमैकवचनान्तं पदम्। किञ्च, "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः", "विभाषा" इति सूत्रचतुष्टयमधिकृतम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति पदमनुवर्तते। अत्र "प्रत्ययग्रहणे तदन्तग्रहणम्" इति परिभाषया सुपा इत्यस्य तदन्तविधौ सुबन्तेनेति भवति। अत्र नञ् इत्यनेन प्रसिद्धस्याव्ययस्यैव ग्रहणं न तु "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इति सूत्रेण विहितस्य नञ्प्रत्ययस्य। एवं सूत्रार्थः भवति - "नञ् सुबन्तेन सह समस्यते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - अब्राह्मणः इत्यादिकमस्य सूत्रस्योदाहरणम्। न ब्राह्मणः इति लौकिकविग्रहे न ब्राह्मण सु इत्यलौकिकविग्रहे न इत्यव्ययम् ब्राह्मण सु इत्यनेन सुबन्तेन सह प्रकृतसूत्रेण तत्पुरुषसंज्ञं भवति। ततः सूत्रे नञ् इत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य नेत्यस्य "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन उपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इत्यनेन पूर्वनिपाते न ब्राह्मण सु इति भवति। ततः समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुब्लुकि न ब्राह्मण इति भवति। तदा नञः नलोपविधायकं सूत्रं प्रवर्तते -

## [३.२१] न लोपो नञः॥ (६.३.७३)

**सूत्रार्थः** - नञो नकारस्य लोपः भवति उत्तरपदे परे ।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण नञः नलोपो विधीयते। सूत्रेऽस्मिन् पदत्रयम् अस्ति। अत्र न इति लुप्तषष्ठ्येकवचनान्तं पदम्। नकारस्येत्यर्थः। लोपः इति प्रथमैकवचनान्तं नञः इति



च षष्ठ्यन्तं पदम्। "अलुगुत्तरपदे" इत्यस्मात् सूत्राद् उत्तरदपदे इत्यनुवर्तते। एवं च सूत्रार्थः भवति - "नञः नकारस्य लोपो भवति उत्तरपदे परे" इति।

**उदाहरणम्** - अब्राह्मणः इत्यादिकमस्य सूत्रस्योदाहरणम्। न ब्राह्मणः इति लौकिकविग्रहे न ब्राह्मण सु इत्यलौकिकविग्रहे नञ्तत्पुरुषसमासे न ब्राह्मण इति स्थिते प्रस्तुतसूत्रेण उत्तरपदे ब्राह्मणशब्दे परे नञः नकारस्य लोपो भवति। ततः अ ब्राह्मण इति जाते सर्वसंयोगे निष्पन्नात् अब्राह्मणशब्दात् सौ प्रक्रियाकार्ये अब्राह्मणः इति रूपम्।

न अश्व इति विग्रहे "नञ्" इत्यनेन समासे नकारलोपे अ अश्व इति स्थिते अजादौ उत्तरपदे परे नञ्समासे नुडागमविधायकं सूत्रं प्रवृत्तम् -

## [३.२२] तस्मान्नुडचि॥ (६.३.७४)

**सूत्रार्थः** - लुप्तनकारात् नञः उत्तरपदस्य अजादेः नुडागमो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण नुडागमो विधीयते। सूत्रेऽस्मिन् पदत्रयम् अस्ति। अत्र तस्मात् नुट् अचि इति पदच्छेदः। तस्मात् इति पञ्चम्येकवचनान्तं, नुट् इति प्रथमैकवचनान्तम् अचि इति सप्तम्येकवचनान्तं च पदम्। "न लोपो नञः" इत्यस्मात् सूत्रात् नञः इत्यनुवर्तते तच्च पञ्चम्यन्ततया विपरिणमते। अलुगुत्तरपदे इत्यस्मात् सूत्राद् उत्तरपदे इत्यनुवर्तते। "यस्मिन्विधिस्तदादावल्ग्रहणे" इत्यनया परिभाषया अचि इत्यस्य तदादिविधौ उत्तरपदे इत्यनेनान्वये सति अजादौ उत्तरपदे इत्यर्थ आयाति। तस्मादित्यनेन नञः अन्वयात् लुप्तनकारात् नञः इति तात्पर्यम्। उभयनिर्देशे पञ्चमीनिर्देशस्य बलीयस्त्वात् अजादौ उत्तरपदे इत्यस्य षष्ठ्यन्तत्वेन विपरिणामो भवति। एवं सूत्रार्थो भवति - "लुप्तनकारात् नञः उत्तरपदस्य अजादेः नुडागमो भवति" इति।

**उदाहरणम्** - अनश्वः इत्यादिकमस्य सूत्रस्योदाहरणम्। न अश्वः इति लौकिकविग्रहे न अश्व सु इत्यलौकिकविग्रहे "नञ्" इत्यनेन सूत्रेण नञ्समासे प्रक्रियाकार्ये न अश्व इति स्थिते नञः नकारस्य लोपे अ अश्व इति भवति। ततः अजादेः उत्तरपदस्य अश्व इत्यस्य लुप्तनकारात् नञः नुटि अ नुट् अश्व इति जाते, उकारस्य "उपदेशेऽजनुनासिक इत्" इत्यनेन टकारस्य "चुटू" इत्यनेन च इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे अ न् अश्व इति जाते सर्वसंयोगे निष्पन्नात् अनश्वशब्दात् सौ प्रक्रियाकार्ये अनश्वः इति रूपम्।



## पाठगतप्रश्नाः-९

४८. "प्रशंसावचनैश्च" इति सूत्रस्यार्थः कः।

४९. "प्रशंसावचनैश्च" इति सूत्रस्योदाहरणं देयम्।

५०. "नञ्" इति सूत्रस्यार्थः कः।

५१. अब्राह्मणः इत्यत्र नञः नकारस्य लोपः केन सूत्रेण।

५२. अनश्वः इत्यत्र नुडागमविधायकं सूत्रं किम्।



## पाठसारः

अस्मिन् पाठे "दिक्संख्ये संज्ञायाम्" "तद्धितार्थोत्तरपदसमाहारे च" इति तत्पुरुषसमासविधायकं सूत्रद्वयं व्याख्यातम्। तत्र संख्यापूर्वस्य तत्पुरुषस्य द्विगुसंज्ञाविधायकं "संख्यापूर्वो द्विगुः" इति सूत्रं, द्विगुसंज्ञायां सत्याम् एकवद्भावविधायकस्य "द्विगुरेकवचनम्" इति सूत्रं, "स नपुंसकम्" इति द्विगोः नपुंसकत्वविधायकं च सूत्रं व्याख्यातम्। अत्र प्रसङ्गाद् "दिक्पूर्वपदादसंज्ञायां ञः" इति तद्धितञप्रत्ययविधायकं "तद्धितेष्वचामादेः" इत्यादेरचो वृद्धिविधायकं सूत्रं प्रस्तुतम्। पञ्चगवधनः इत्यादौ टच्प्रत्ययविधायकं "गोरतद्धितलुकि" इति सूत्रं व्याख्यातम्।

ततः समानाधिकरणतत्पुरुषविधायकानि "विशेषणं विशेष्येण बहुलम्", "कुत्सितानि कुत्सनैः", "पापाणके कुत्सितैः", "उपमानानि सामान्यवचनैः", "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे", "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः", "वृन्दारकनागकुञ्जरैः पूज्यमानम्", "किं क्षेपे", "प्रशंसावचनैश्च" इत्येतानि सूत्राणि व्याख्यातानि। एतदवसरे "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इत्युत्तरलोपसविधायकं वार्तिकमपि प्रस्तुतम्। समानाधिकरणस्य तत्पुरुषस्य "तत्पुरुषः समानाधिकरणः कर्मधारयः" इत्यनेन कर्मधारयसंज्ञा प्रस्तुता। कर्मधारयसंज्ञायां सत्यां पुंवद्भावविधायकं "पुंवत्कर्मधारयजातीयदेशीयेषु" इति सूत्रं प्रस्तुतम्। ततः नञ्समासविधायकं "नञ्" इति सूत्रं व्याख्यातम्। ततः नञः नलोपविधायकं "न लोपो नञः" इति सूत्रं व्याख्यातम्। ततः "तस्मान्नुडचि" इति नुडागमविधायकं सूत्रं प्रस्तुतम्।



## पाठान्तप्रश्नाः

१. "दिक्संख्ये संज्ञायाम्" इति सूत्रं व्याख्यात।
२. "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रं व्याख्यात।
३. "विशेषणं विशेष्येण बहुलम्" इति सूत्रं व्याख्यात।
४. "उपमानानि सामान्यवचनैः" इति सूत्रं व्याख्यात।
५. "प्रशंसावचनैश्च" इति सूत्रं व्याख्यात।
६. "नञ्" इति सूत्रं व्याख्यात।
७. समानाधिकरणः तत्पुरुषः - इति विषयमाश्रित्य टिप्पणीं लिखत।
८. पञ्चगवम् इति रूपं साधयत।
९. पौर्वशालः इति रूपं साधयत।



१०. पञ्चगवधनः इति रूपं साधयत।

११. घनश्यामः इति रूपं साधयत।

१२. अब्राह्मणः इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. पूर्वेषुकामशमी। नियमसूत्रम्।

२. दिशावाचकं संख्यावाचकं च सुबन्तं समानाधिकरणेन सुबन्तेन सह संज्ञायां गम्यमानायामेव तत्पुरुषसमाससंज्ञं भवति।

३. पूर्वेषुकामशमी।

४. सप्तर्षयः।

### उत्तराणि-२

५. विधिसूत्रम्।

६. तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिशावाचकं संख्यावाचकं च सुबन्तं समानाधिकरणेन सुबन्तेन सह विकल्पेन तत्पुरुषसमाससंज्ञं भवति।

७. पौर्वशालः।

८. पञ्चगवधनः।

९. पञ्चगवम्।

### उत्तराणि-३

१०. दिशावाचकं पूर्वपदं यस्य तस्मात् प्रातिपदिकाद् शैषिके भवाद्यर्थे असंज्ञायां गम्यमानायां तद्धितः ञप्रत्ययो भवति।

११. पूर्वशब्दस्य दिग्वाचकत्वात् पूर्वशाला इत्यस्य दिक्पूर्वपदत्वात् ततः भवार्थे प्रकृतसूत्रेण ञप्रत्ययो भवति।

१२. ञिति णिति च तद्धिते परे अचाम् आदेः अचो वृद्धिः भवति।

१३. ञिति तद्धिते परे सति अचाम् आदेः अचः तद्धितेष्वचमादेः इति सूत्रेण वृद्धिः।

१४. गोशब्दान्तात् तत्पुरुषात् समासान्तः टच्प्रत्ययो भवति न तद्धितलुकि।

१५. पञ्चगो इति गोशब्दान्तः तत्पुरुषः अतः तस्मात् गोरद्धितलुकि इति सूत्रेण टच्-प्रत्ययः।



## उत्तराणि-४

१६. समानाधिकरणः तत्पुरुषसमासः कर्मधारयसंज्ञको भवति।

१७. भाषितपुंस्कात्पर ऊङोऽभावो यस्मिन् तथाभूतस्य स्त्रीलिङ्गकस्य पूर्वपदस्य कर्मधारये जातीयदेशीययोश्च परतः पुंवाचकस्येव रूपं भवति।

१८. कृष्णचतुर्दशी इति।

१९. तद्धितार्थोत्तरपदसमाहारे च इत्यस्मिन् सूत्रे उक्तः त्रिविधः संख्यापूर्वः समासो द्विगुसंज्ञो भवति।

२०. दिग्वर्थः समाहारः एकवद् भवति।

२१. समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं भवति।

२२. पञ्चगवम् इति।

## उत्तराणि-५

२३. भेदकं भेद्येन समानाधिकरणेन सह बहुलं समस्यते, स च तत्पुरुषसंज्ञको भवति।

२४. कृष्णसर्पः इत्यादौ नित्यसमासः, रामो जामदग्न्यः इत्यत्र च समासाभावः।

२५. जातिगुणक्रियावाचिनां शब्दानां समभिव्याहारे जातिवाचक एव विशेष्यम्, अन्यद् विशेषणं स्वभावात् इति नियमेन नीलशब्दस्य विशेष्यत्वं नास्ति।

२६. शिंशपावृक्षः इति।

२७. कुत्स्यमानानि सुबन्तानि कुत्सनैः समानाधिकरणैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

२८. वैयाकरणखसूचिः इति।

## उत्तराणि-६

२९. पापशब्दः अणकशब्दश्च कुत्स्यमानैः समानाधिकरणैः सुबन्तैः सह समस्यते, स च तत्पुरुषसंज्ञको भवति।

३०. पापनापितः।

३१. पूर्वसूत्रस्यापवादभूतमिदं सूत्रम्।

३२. उपमानवाचकानि सुबन्तानि सामान्यवचनैः समानाधिकरणैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

३३. घनश्यामः।

३४. उपमानवाचकपदस्यैव पूर्वनिपातः यथा स्यात् तदर्थमिदं सूत्रम्।

## उत्तराणि-७

३५. उपमेयं सुबन्तं उपमानैः व्याघ्रादिभिः समानाधिकरणैः सुबन्तैः सह विकल्पेन समस्यते साधारणधर्मस्याप्रयोगे सति, तत्पुरुषसंज्ञकश्च भवति।



३६. पुरुषव्याघ्र इति।

३७. उपमानोपमेययोः उपमानस्यैव पूर्वनिपाते प्राप्ते उपमितस्य पूर्वनिपातविधानार्थम् इदम्।

३८. सामान्याप्रयोगे इति वचनात् पुरुषो व्याघ्र इव शूर इति विग्रहे उपमानोपमेयसाधारणधर्मस्य शौर्यस्य प्रयोगात् प्रस्तुतसूत्रेण न समासः।

३९. शाकपार्थिवादीनां शब्दानां सिद्धये पूर्वपदे स्थितस्य उत्तरपदलोपस्य उपसंख्यानं कर्तव्यम्।

४०. शाकपार्थिवः इति।

## उत्तराणि-८

४१. सन्महत्परमोत्तमोत्कृष्टाः समानाधिकरणैः पूज्यमानैः सुबन्तैः सह समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

४२. सद्वैद्यः इति।

४३. "विशेषणं विशेष्येण बहुलम्" इत्यनेन एव समासे सिद्धे सन्महत्परमोत्तमोत्कृष्टानां शब्दानां पूर्वनिपातनियमाय इदं सूत्रम्।

४४. पूज्यमानं सुबन्तं वृन्दारकनागकुञ्जरैः समानाधिकरणैः सुबन्तैः सह वा समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

४५. गोवृन्दारकः इति उदाहरणम्।

४६. निन्दायां गम्यमानायां किमित्यव्ययं समानाधिकरणेन सुबन्तेन सह समस्यते, स च तत्पुरुषसंज्ञको भवति।

४७. किंराजा इति।

## उत्तराणि-९

४८. रूढ्या प्रशंसावाचकैः समानाधिकरणैः सुबन्तैः जातिवाचकं सुबन्तं समस्यते, स च तत्पुरुषसंज्ञको भवति।

४९. गोतल्लजः इति।

५०. नञ् सुबन्तेन सह समस्यते, स च तत्पुरुषसंज्ञको भवति।

५१. नलोपो नञः इति सूत्रेण।

५२. तस्मान्नुडचि इति।

॥ इति तृतीयः पाठः ॥



४

# तत्पुरुषसमासः - कुगतिप्रादिसमासः, उपपदसमासः च

## प्रस्तावना

अस्मिन् पाठे कुसमासस्य गतिसमासस्य प्रादिसमासस्य उपपदसमासस्य च वर्णनं क्रियते। अत्र आद्यस्य समासत्रयस्य वर्णनाय "कुगतिप्रादयः" इति सूत्रं व्याख्यातम्। प्रादिसमासविधायकानां वार्तिकानां च व्याख्यानं कृतम्। तत उपपदसमासः "उपपदमतिङ्" इत्यनेन सूत्रेण विधीयते। ततः समासान्तकार्याणां विधायकानि सूत्राणि वर्णितानि। तत्र प्रसङ्गतः तत्पुरुषसमासनिष्पन्नानां शब्दानां लिङ्गनिर्णायकानि सूत्राणि समासे विशिष्टादेशविधायकानि च सूत्राणि वर्णितानि।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कुगतिप्रादिसमासानां विधायकं सूत्रं वार्तिकानि च जानीयात्।
- उपपदसमाससम्बन्धानि सूत्राणि जानीयात्।
- तत्पुरुषसमासान्तप्रत्ययानां विधायकानि सूत्राणि जानीयात्।
- लिङ्गनिर्णायकानि सूत्राणि जानीयात्।
- विशिष्टादेशविधायकानि सूत्राणि जानीयात्।
- ससूत्रं समासं ज्ञात्वा तादृशानाम् अन्येषां समस्तपदानां निर्माणे समर्थो भविष्यति।

## [४.१] कुगतिप्रादयः॥ (२.२.१८)

**सूत्रार्थः** - समर्थाः कुगतिप्रादयः समर्थेन सुबन्तेन सह नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण कुगतिप्रादिसमासाः विधीयन्ते। सूत्रेऽस्मिन् एकं पदम् अस्ति। कुगतिप्रादयः इति प्रथमाबहुवचनान्तं पदम्। कुश्च गतिश्च प्रादिश्च कुगतिप्रादयः इति इतरेतरद्वन्द्वसमासः। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सूत्रात् सुप् इति "नित्यं क्रीडाजीविकयोः"



इत्यस्मात् सूत्रात् नित्यमिति चानुवर्तते। "समर्थः पदविधिः" इत्यस्मात् सूत्रात् समर्थः इति पदमधिक्रियते। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि अत्र अधिकृतानि। यद्यपि कु इति पृथिवीवाची स्त्रीलिङ्गशब्दः वर्तते तथापि गतिप्रादिसाहचर्यात् कुत्सितार्थे विद्यमानं कु इत्यव्ययमेव अत्र गृह्यते। अधिकारानुवृत्तिलब्धपदानि संयोज्य - "समर्थाः कुगतिप्रादयः समर्थेन सुबन्तेन सह नित्यं समस्यन्ते, स च तत्पुरुषसमासः भवति" इत्यर्थो लभ्यते।

**उदाहरणम्** - कुसमासस्योदाहरणं भवति कुपुरुषः इति। कुत्सितः पुरुषः इति लौकिकविग्रहे कु पुरुष सु इत्यलौकिकविग्रहे कु इति पुरुष सु इति सुबन्तेन सह प्रकृतसूत्रेण तत्पुरुषसंज्ञं भवति। ततः कु इत्यस्य समासशास्त्रे प्रथमानिर्दिष्टस्योपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इत्यनेन पूर्वनिपाते कु पुरुष सु इति भवति। समुदायस्य समाससंज्ञकस्य प्रातिपदिकत्वात् ततः "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवस्य सुपः सोः लुकि निष्पन्नात् कुपुरुष इत्यस्मात् प्रातिपदिकात् सौ प्रक्रियाकार्ये कुपुरुषः इति रूपम्।

गतिसमासस्य ऊरीकृत्य शुक्लीकृत्य पटपटाकृत्य इत्यादीनि अत्रोदाहरणानि। "प्रादयः" इति सूत्रेण प्रादीनां द्वाविंशतेः निपातसंज्ञा विधीयते। प्रादिसमासे शोभनः पुरुषः सुपुरुषः इत्यादिकमुदाहणम्। नित्यसमासत्वात् अस्वपदविग्रहः सर्वत्र प्रदर्श्यते।

## [४.२] ऊर्यादिच्विडाचश्च॥ (१.४.६१)

**सूत्रार्थः** - ऊर्यादयः च्व्यन्ताः डाजन्ताश्च क्रियायोगे गतिसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण गतिसंज्ञा विधीयते। ऊरीकृत्य इत्यादौ गतिसंज्ञाविधानाय इदं सूत्रं प्रवृत्तम्। सूत्रेऽस्मिन् पदद्वयम् अस्ति। ऊर्यादिच्विडाचः इति प्रथमाबहुवचनान्तं पदम्। चेत्यव्ययपदम्। ऊरी आदिर्येषां ते ऊर्यादयः इति तद्गुणसंविज्ञानबहुव्रीहिः। ऊर्यादयश्च च्विश्च डाच् च ऊर्यादिच्विडाचः इति इतरेतरद्वन्द्वसमासः। "उपसर्गाः क्रियायोगे" इत्यस्मात् सूत्रात् क्रियायोगे इत्यनुवर्तते। "गतिश्च" इत्यस्मादनुवृत्तस्य गतिः इति पदस्य वचनविपरिणामेन गतयः इति भवन्ति। "प्रत्ययग्रहणे तदन्तग्रहणम्" इत्यनेन च्विप्रत्ययेन च्विप्रत्ययान्तानां डाच्प्रत्ययेन च डाजन्तानां बोधो भवति। एवं सूत्रार्थो भवति "ऊर्यादयः च्विप्रत्ययान्ताः डाच्प्रत्ययान्ताश्च क्रियायोगे गतिसंज्ञकाः भवन्ति" इति।

"प्राग्रीश्वरान्निपाताः" इत्यनेन सूत्रेण ऊर्यादीनां च्विप्रत्ययान्तां डाच्प्रत्ययान्तानां च निपातसंज्ञायां "स्वरादिनिपातमव्ययम्" इत्यनेन सूत्रेण तेषामव्ययसंज्ञा भवति। च्विडाच्प्रत्यययोः कृभ्वस्तियोगे एव विधानात् तत्साहचर्याद् ऊर्यादीनामपि कृभ्वस्तिभ्य एव विधानम्।

**उदाहरणम्** - ऊर्यादीनामुदाहरणं भवति ऊरीकृत्य इति। ऊरी इत्यस्य कृत्वा इत्यनेन योगे प्रकृतसूत्रेण गतिसंज्ञायां "कुगतिप्रादयः" इत्यनेन गतिसमासे प्रक्रियाकार्ये ऊरी कृत्वा इति भवति। ऊरीकृत्वा इत्यस्याव्ययत्वात् ततः सोर्लुकि "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इत्यनेन सूत्रेण क्त्वाप्रत्ययस्य

ल्यपि तुकि प्रक्रियाकार्ये ऊरीकृत्य इति रूपम्। च्विप्रत्ययान्तस्य गतिसंज्ञायां शुक्लीकृत्य डाच्प्रत्ययान्तस्य च गतिसंज्ञायां पटपटाकृत्य इत्युदाहरणम्।



## पाठगतप्रश्नाः-१

१. "कुगतिप्रादयः" इति सूत्रस्यार्थः कः।

२. कुतत्पुरुषसमासस्य एकमुदाहरणं देयम्।

३. गतितत्पुरुषसमासस्य एकमुदाहरणं देयम्।

४. प्रादितत्पुरुषसमासस्य एकमुदाहरणं देयम्।

५. "ऊर्यादिच्विडाचश्च" इति सूत्रस्यार्थः कः।

६. "ऊर्यादिच्विडाचश्च" इति सूत्रस्य एकमुदाहरणं देयम्।

---

**प्रादिसमासविधायकानि वार्तिकान्यधः प्रस्तूयन्ते -**

## (४.२.१) प्रादयो गताद्यर्थे प्रथमया (वार्तिकम्)

**वार्तिकार्थः** - गताद्यर्थे वर्तमानाः प्रादयः प्रथमान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं "कुगतिप्रादयः" इति सूत्रे महाभाष्ये पठितम्। सूत्रस्यास्य नित्यसमासविधानादिदं वार्तिकमपि नित्यसमासं बोधयति। वार्तिके प्रादयः इति प्रथमाबहुवचनान्तं, गताद्यर्थे इति सप्तम्येकवचनान्तं प्रथमया इति च तृतीयान्तं पदम्। "समर्थः पदविधिः" इत्यस्मात् सूत्रात् समर्थः इति पदम् अधिक्रियते। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि सूत्राणि अधिकृतानि। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुप् इति पदमनुवर्तते। प्रथमया इत्यस्य सुपा इत्यस्य च तदन्तविधौ समर्थपदेन सहान्वयेन प्रथमान्तेन समर्थेन सुबन्तेन इत्यागच्छति। गताद्यर्थे प्रादीनां शिष्टसम्मताः प्रयोगाः सन्ति। एवं वार्तिकार्थः समायाति - "गताद्यर्थे वर्तमानाः प्रादयः प्रथमान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति"।

**उदाहरणम्** - एतस्य वार्तिकस्य प्राचार्यः इत्युदाहरणम्। प्रगत आचार्यः इति लौकिकविग्रहे प्र आचार्य सु इत्यलौकिकविग्रहे प्रोक्तवार्तिकेन गताद्यर्थे विद्यमानः प्र इति निपातः आचार्य सु इत्यनेन प्रथमान्तेन सुबन्तेन सह प्रादितत्पुरुषसंज्ञो भवति। ततः प्रक्रियाकार्ये प्राचार्यः इति रूपम्। एवमेव विरुद्धः पक्षः विपक्ष इत्यादिकम् एतस्य वार्तिकस्योदाहरणम्।



## (४.२.२) अत्यादयः क्रान्ताद्यर्थे द्वितीयया (वार्तिकम्)

**वार्तिकार्थः** - क्रान्ताद्यर्थे वर्तमानाः अत्यादयः द्वितीयान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं "कुगतिप्रादयः" इति सूत्रे महाभाष्ये पठितम्। सूत्रस्यास्य नित्यसमासविधानादिदं वार्तिकमपि नित्यसमासं बोधयति। वार्तिके अत्यादयः इति प्रथमाबहुवचनान्तं, क्रान्ताद्यर्थे इति सप्तम्येकवचनान्तं द्वितीयया इति च तृतीयान्तं पदम्। "समर्थः पदविधिः" इत्यस्मात् सूत्रात् समर्थः इति पदम् अधिक्रियते। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि सूत्राणि अधिकृतानि। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुप् इति पदमनुवर्तते। द्वितीयया इत्यस्य सुपा इत्यस्य च तदन्तविधौ समर्थपदेन सहान्वयेन द्वितीयान्तेन समर्थेन सुबन्तेन इत्यागच्छति। क्रान्ताद्यर्थे अत्यादीनां शिष्टसम्मताः प्रयोगाः सन्ति। एवं वार्तिकार्थः - "क्रान्ताद्यर्थे वर्तमानाः अत्यादयः द्वितीयान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - एतस्य वार्तिकस्य अतिमालः इत्युदाहरणम्। अतिक्रान्तः मालाम् इति लौकिकविग्रहे अति माला अम् इत्यलौकिकविग्रहे प्रोक्तवार्तिकन क्रान्ताद्यर्थे विद्यमानः अति इति निपातः माला अम् इत्यस्य द्वितीयान्तेन सुबन्तेन सह प्रादितत्पुरुषसंज्ञो भवति। ततः प्रक्रियाकार्ये सुब्लुकि अतिमाला इति स्थिते ह्रस्वविधानाय उपसर्जनसंज्ञाविधायकं सूत्रं प्रवृत्तम् -

## [४.३] एकविभक्ति चापूर्वनिपाते॥ (१.२.४४)

**सूत्रार्थः** - विग्रहे यत् नियतविभक्तिं तस्य उपसर्जनसंज्ञा भवति, किन्तु तस्य पूर्वनिपातो न भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण उपसर्जनसंज्ञा विधीयते। सूत्रेऽस्मिन् पदत्रयम् अस्ति। एकविभक्ति च अपूर्वनिपाते इति पदच्छेदः। अत्र एकविभक्ति इति प्रथमैकवचनान्तं पदम्। चेत्यव्ययपदम्। अपूर्वनिपाते इति सप्तम्येकवचनान्तं पदम्। "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यस्मात् सूत्रात् समासे उपसर्जनम् इति पदद्वयम् अनुवर्तते। एका विभक्तिर्यस्य तद् एकविभक्ति इति बहव्रीहिसमासः। नियतविभक्तिकम् इत्यर्थः। पूर्वश्चासौ निपातः पूर्वनिपातः इति कर्मधारयसमासः। न पूर्वनिपातः अपूर्वनिपातः तस्मिन् अपूर्वनिपाते इति नञ्समासः। अत्र नञः पर्युदासप्रतिषेधार्थः। पूर्वनिपातभिन्ने कार्ये कर्तव्ये इत्यर्थः। समासपदेन समासोन्मुखविग्रहवाक्यस्य ग्रहणम्। एवं समासे नाम समासोन्मुखविग्रहवाक्ये इति। पूर्वनिपातभिन्ने कार्ये कर्तव्ये समासे समासोन्मुखविग्रहवाक्ये यत् नियतविभक्तिकं तद् उपसर्जनं भवतीति सूत्रतात्पर्यम्। एवं सूत्रार्थो भवति - "विग्रहे यन्नियतविभक्तिकं तस्य उपसर्जनसंज्ञा भवति, किन्तु तस्य पूर्वनिपातो न भवति" इति।

**उदाहरणम्** - एतस्य सूत्रस्य अतिमालः इत्युदाहरणम्। अतिक्रान्तः मालाम् इति लौकिकविग्रहे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन प्रादिसमासे प्रक्रियाकार्ये सुब्लुकि अतिमाला इति स्थिते

प्रस्तुतसूत्रेण विग्रहवाक्ये मालाम् इत्यस्य नियतविभक्तिकत्वात् मालाशब्दस्य उपसर्जनसंज्ञा भवति। अतिमाला इत्यत्र उपसर्जनस्य ह्रस्वविधायकं सूत्रं प्रवृत्तम्-

## [४.४] गोस्त्रियोरुपसर्जनस्य॥ (१.२.४८)

**सूत्रार्थः** - उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण ह्रस्वो विधीयते। सूत्रेऽस्मिन् पदद्वयम् अस्ति। गोस्त्रियोः उपसर्जनस्य इति पदच्छेदः। अत्र गोस्त्रियोः इति षष्ठीद्विवचनान्तं पदम्। उपसर्जनस्य इति षष्ठ्येकवचनान्तं पदम्। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यस्मात् सूत्रात् ह्रस्वः प्रातिपदिकस्य इति पदद्वयम् अनुवर्तते। गौश्च स्त्री च गोस्त्रियौ, तयोः गोस्त्रियोः इति इतरेतरद्वन्द्वः। अत्र गोपदेन गोशब्दस्य ग्रहणम्। स्त्रीपदेनात्र "स्त्रियाम्" इत्यधिकारे विहिताः टाप् डाप् चाप् ङीप् ङीष् ङीन् इत्येते प्रत्यया गृह्यन्ते, न तु स्त्रीशब्दः। स्त्रीपदेन तदन्तविधौ स्त्रीप्रत्ययानामेव ग्रहणम्। उपसर्जनस्य इति गोस्त्रियोः इत्यस्य पदस्य विशेषणम्। गोस्त्रियोः इति प्रातिपदिकस्य विशेषणम्। एवं उपसर्जनस्य गोस्त्रियोः प्रातिपदिकस्य इत्यस्य तात्पर्यं भवति उपसर्जनस्य गोप्रातिपदिकस्य उपसर्जनस्य स्त्रीप्रत्ययान्तप्रातिपदिकस्य च इति। उपसर्जनस्य गोप्रातिपदिकस्य स्त्रीप्रत्ययान्तप्रातिपदिकस्य च ह्रस्वः भवति इति सूत्रतात्पर्यम्। एवं सूत्रार्थो भवति - "उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वो भवति" इति। "अलोऽन्त्यस्य" इति "अचश्च" इति च परिभाषाद्वयबलात् प्रातिपदिकस्य अन्त्यस्य अचः स्थाने एव ह्रस्वादेशो भवति।

**उदाहरणम्** - एतस्य सूत्रस्य अतिमालः इत्युदाहरणम्। अतिक्रान्तः मालाम् इति लौकिकविग्रहे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन प्रादिसमासे प्रक्रियाकार्ये सुब्लुकि अतिमाला इति स्थिते विग्रहवाक्ये मालाम् इत्यस्य नियतविभक्तिकत्वात् मालाशब्दस्योपसर्जनसंज्ञा भवति। ततः प्रकृतसूत्रेण मालाशब्दस्यान्त्यस्य अच आकारस्य स्थाने ह्रस्वे अकारे अतिमालशब्दो निष्पद्यते। ततः सौ अतिमालः इति रूपम्। गोशब्दान्तस्य ह्रस्वे उदाहरणं चित्रगुः इति।



## पाठगतप्रश्नाः-२

७. "प्रादयो गताद्यर्थे प्रथमया" इति वार्तिकस्यार्थः कः।

८. "प्रादयो गताद्यर्थे प्रथमया" इति वार्तिकस्य एकमुदाहरणं देयम्।

९. "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति वार्तिकस्यार्थः कः।

१०. "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति वार्तिकस्य एकमुदाहरणं देयम्।

११. "एकविभक्ति चापूर्वनिपाते" इति सूत्रस्यार्थः कः।

१२. "गोस्त्रियोरुपसर्जनस्य" इति सूत्रस्यार्थः कः।



## (४.४.१) अवादयः क्रुष्टाद्यर्थे तृतीयया (वार्तिकम्)

**वार्तिकार्थः** - क्रुष्टाद्यर्थे वर्तमानाः अवादयः तृतीयान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं "कुगतिप्रादयः" इति सूत्रे महाभाष्ये पठितम्। सूत्रस्यास्य नित्यसमासविधानादिदं वार्तिकमपि नित्यसमासं बोधयति। वार्तिके अवादयः इति प्रथमाबहुवचनान्तं, क्रुष्टाद्यर्थे इति सप्तम्येकवचनान्तं तृतीयया इति च तृतीयैकवचनान्तं पदम्। "समर्थः पदविधिः" इत्यस्मात् सूत्रात् समर्थः इति पदम् अधिक्रियते। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि सूत्राणि अधिकृतानि। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुप् इति पदमनुवर्तते। तृतीयया इत्यस्य सुपा इत्यस्य च तदन्तविधौ समर्थपदेन सहान्वयेन तृतीयान्तेन समर्थेन सुबन्तेन इत्यागच्छति। क्रुष्टाद्यर्थे अवादीनां शिष्टसम्मताः प्रयोगाः सन्ति। एवं वार्तिकार्थः समायाति - "क्रुष्टाद्यर्थे वर्तमानाः अवादयः तृतीयान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - एतस्य वार्तिकस्य अवकोकिलः इत्युदाहरणम्। अवक्रुष्टः कोकिलया इति लौकिकविग्रहे अव कोकिला टा इत्यलौकिकविग्रहे प्रोक्तवार्तिकेन क्रुष्टाद्यर्थे विद्यमानः अव इति निपातः कोकिला टा इत्यनेन सुबन्तेन सह तत्पुरुषसंज्ञो भवति। ततः प्रक्रियाकार्ये सुब्लुकि अवकोकिला इति स्थिते कोकिला इत्यस्य "एकविभक्ति चापूर्वनिपाते" इत्यनेनोपसर्जनसंज्ञायां "गोस्त्रियोरुपसर्जनस्य" इत्यनेन ह्रस्वे प्रक्रियाकार्ये अवकोकिलः इति रूपम्। सङ्गतमर्थेन समर्थमित्यादिकमेतस्य वार्तिकस्योदाहरणम्।

## (४.४.२) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या (वार्तिकम्)

**वार्तिकार्थः** - ग्लानाद्यर्थे वर्तमानाः पर्यादयः चतुर्थ्यन्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं "कुगतिप्रादयः" इति सूत्रे महाभाष्ये पठितम्। सूत्रस्यास्य नित्यसमासविधानादिदं वार्तिकमपि नित्यसमासं बोधयति। वार्तिके पर्यादयः इति प्रथमाबहुवचनान्तं, ग्लानाद्यर्थे इति सप्तम्येकवचनान्तं चतुर्थ्या इति च तृतीयान्तं पदम्। "समर्थः पदविधिः" इत्यस्मात् सूत्रात् समर्थः इति पदम् अधिक्रियते। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि सूत्राणि अधिकृतानि। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुप् इति पदमनुवर्तते। चतुर्थ्या इत्यस्य सुपा इत्यस्य च तदन्तविधौ समर्थपदेन सहान्वयेन चतुर्थ्यन्तेन समर्थेन सुबन्तेन इत्यागच्छति। ग्लानाद्यर्थे पर्यादीनां शिष्टसम्मताः प्रयोगाः सन्ति। एवं वार्तिकार्थः समायाति - "ग्लानाद्यर्थे वर्तमानाः पर्यादयः चतुर्थ्यन्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - एतस्य वार्तिकस्य पर्यध्ययनः इत्युदाहरणम्। अध्ययनाय परिग्लानः इति लौकिकविग्रहे परि अध्ययन ङे इत्यलौकिकविग्रहे प्रोक्तवार्तिकेन ग्लानाद्यर्थे विद्यमानः परि इति अध्ययन

ङे इत्यनेन चतुर्थ्यन्तेन सुबन्तेन सह तत्पुरुषसंज्ञं भवति। ततः समासे सुब्लुकि प्रक्रियाकार्ये पर्यध्ययनः इति रूपम्। उद्युक्तः संग्रामाय उत्संग्रामः इत्यादिकमिहोदाहरणम्।

## (४.४.३) निरादयः क्रान्ताद्यर्थे पञ्चम्या (वार्तिकम्)

**वार्तिकार्थः** - क्रान्ताद्यर्थे वर्तमानाः निरादयः पञ्चम्यन्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं "कुगतिप्रादयः" इति सूत्रे महाभाष्ये पठितम्। सूत्रस्यास्य नित्यसमासविधानादिदं वार्तिकमपि नित्यसमासं बोधयति। वार्तिके निरादयः इति प्रथमाबहुवचनान्तं, क्रान्ताद्यर्थे इति सप्तम्येकवचनान्तं पञ्चम्या इति च तृतीयैकवचनान्तं पदम्। "समर्थः पदविधिः" इत्यस्मात् सूत्रात् समर्थः इति पदम् अधिक्रियते। "प्राक्कडारात्समासः", "सह सुपा", "तत्पुरुषः" इत्येतानि सूत्राणि अधिकृतानि। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुप् इति पदमनुवर्तते। पञ्चम्या इत्यस्य सुपा इत्यस्य च तदन्तविधौ समर्थपदेन सहान्वयेन पञ्चम्यन्तेन समर्थेन सुबन्तेन इत्यागच्छति। क्रान्ताद्यर्थे निरादीनां शिष्टसम्मताः प्रयोगाः सन्ति। एवं वार्तिकार्थः समायाति - "क्रान्ताद्यर्थे वर्तमानाः निरादयः पञ्चम्यन्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति" इति।

**उदाहरणम्** - एतस्य वार्तिकस्य निष्कौशाम्बिः इत्युदाहरणम्। निष्क्रान्तः कौशाम्ब्या इति लौकिकविग्रहे निर् कौशाम्बी ङसि इत्यलौकिकविग्रहे प्रोक्तवार्तिकेन क्रान्ताद्यर्थे विद्यमानं निर् इति कौशाम्बी ङसि इत्यनेन समर्थेन सुबन्तेन तत्पुरुषसमाससंज्ञकं भवति। ततः निर् इत्यस्य पूर्वनिपाते प्रातिपदिकत्वात् सुब्लुकि च प्रक्रियाकार्ये निर् कौशाम्बी इति भवति। तदा "एकविभक्ति चापूर्वनिपाते" इत्यनेन कौशाम्बीत्यस्य उपसर्जनसंज्ञायां ह्रस्वत्वे निष्पन्नात् निष्कौशाम्बिशब्दात् सौ प्रक्रियाकार्ये निष्कौशाम्बिः इति रूपम्। निष्क्रान्तो वाराणस्याः निर्वाराणसिः इत्यादिकमिहोदाहरणम्।

"उपपदमतिङ्" इत्यनेन वक्ष्यमाणसूत्रेण उपपदसमासात् प्राग् उपपदं किमिति वर्णयितुं सूत्रमारब्धम् -

## [४.५] तत्रोपपदं सप्तमीस्थम्॥ (३.१.९२)

**सूत्रार्थः** - सप्तम्यन्ते पदे कर्मण्यण् इत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण उपपदसंज्ञा विधीयते। सूत्रेऽस्मिन् पदत्रयम् अस्ति। तत्र उपपदं सप्तमीस्थम् इति पदच्छेदः। तत्र इत्यव्ययपदम्। उपपदं सप्तमीस्थम् इति पदद्वयं प्रथमैकवचनान्तम्। सप्तम्यां तिष्ठतीति सप्तमीस्थम्। एतस्मात् सूत्रात् पूर्वं "धातोः" इत्यधिकारः प्रवर्तते। स चाधिकारः तृतीयाध्यायपरिसमाप्तिं यावत्। एवं तृतीयाध्यायपरिसमाप्तिं यावत् सूत्रैः ये प्रत्ययाः विहितास्ते धातोः परमेव भवन्ति। प्रस्तुतेन सूत्रेण धात्वधिकारान्तर्गतसूत्रैः यत्र यत्र सप्तम्यन्तं पदं प्रयुक्तं तत्र तत्पदबोध्यं यत् तद्वाचकस्य पदस्योपपदसंज्ञा विधीयते। अत एव सूत्रार्थः समायाति - "सप्तम्यन्ते पदे कर्मण्यण् इत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं भवति" इति।



**उदाहरणम्** - एतस्य सूत्रस्य कुम्भकारः इत्युदाहरणम्। कुम्भं करोतीत्यर्थे "कर्मण्यण्" इत्यनेन अण् भवति। अत्र सूत्रे कर्मणि इति सप्तम्यन्तं पदम्। कर्मणि इत्यनेन बोध्यस्य कर्मीभूतस्य कुम्भस्य वाचकं यत्कुम्भपदं तस्यैवोपपदसंज्ञा प्रस्तुतेन सूत्रेण भवति।



## पाठगतप्रश्नाः-३

१३. "अवादयः क्रुष्टाद्यर्थे तृतीयया" इति वार्तिकस्यार्थः कः।

१४. "अवादयः क्रुष्टाद्यर्थे तृतीयया" इति वार्तिकस्य एकमुदाहरणं देयम्।

१५. "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या" इति वार्तिकस्यार्थः कः।

१६. "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या" इति वार्तिकस्य एकमुदाहरणं देयम्।

१७. "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति वार्तिकस्यार्थः कः।

१८. "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति वार्तिकस्य एकमुदाहरणं देयम्।

१९. "तत्रोपपदं सप्तमीस्थम्" इति सूत्रस्यार्थः कः।

२०. "तत्रोपपदं सप्तमीस्थम्" इति सूत्रस्य एकमुदाहरणं देयम्।

## [४.६] उपपदमतिङ्॥ (२.२.१९)

**सूत्रार्थः** - उपपदं सुबन्तं समर्थेन सह नित्यं समस्यते, स च तत्पुरुषसंज्ञको भवति। अयं च समासः अतिङन्तः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण उपपदतत्पुरुषसमासो विधीयते। पदद्वयात्मके अस्मिन् सूत्रे उपपदम् अतिङ् इति पदद्वयं प्रथमैकवचनान्तम्। "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुबित्यनुवर्तते। प्रथमान्तं समर्थग्रहणं तृतीयान्ततया विपरिणम्यते। तेन समर्थेन इति भवति। अविद्यमानं तिङ् यस्मिन् सः अतिङ् इति बहुव्रीहिसमासः। अतिङन्तमिति तात्पर्यम्। "प्राक्कडारात्समासः", "तत्पुरुषः" इति सूत्रद्वयम् अधिकृतम्। "समर्थः पदविधिः" इत्यतः समर्थः इति पदमधिक्रियते। "नित्यं क्रीडाजीविकयोः" इत्यस्मात् सूत्रात् नित्यम् इत्यनुवर्तते। सुप् इत्यस्य उपपदमित्यस्य विशेषणत्वात् तदन्तविधौ सुबन्तम् उपपदम् इति लभ्यते। एवं सूत्रार्थ आगच्छति - उपपदं सुबन्तं समर्थेन सह नित्यं समस्यते, स च तत्पुरुषसंज्ञको भवति। अयं च समासः अतिङन्तः।" इति।

सूत्रे अतिङ् इति पदस्य ग्रहणाभावे मा भवान् भूत् इति प्रयोगो नोपपद्यते। तथाहि "माङि लुङ्" इत्यनेन माङ्योगे भूधातोर्लुङि रूपम् भवति। सूत्रे माङि इति सप्तमीनिर्दिष्टत्वात् तस्योपपदसंज्ञा भवति। ततः अतिङ् इत्यस्याभावे प्रकृतसूत्रेण मा भूत् इत्यनयोः उपपदसमासः स्यात्। तदा मध्ये भवान् इति प्रयोगो नोपपद्यते समासमध्ये प्रयोगास्वीकारात्। एवम् अतिङ् इत्यस्य प्रयोजनं सूत्रे विद्यते।



**उदाहरणम् -** एतस्य सूत्रस्य कुम्भकारः इत्युदाहरणम्। कुम्भं करोतीति कुम्भकारः। अत्र कुम्भं करोतीति न विग्रहवाक्यं किन्तु कुम्भकारशब्दस्यार्थ एव। धातुप्रत्ययप्रकरणे "कर्मण्यण्" इत्यत्र कर्मणि इत्यनेन सप्तम्यन्तपदेन कुम्भबोधनात् कुम्भमित्यत्रोपपदम्। ततः कुम्भमित्युपपदं "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति परिभाषापरिष्कृतेन कारशब्देन कृदन्तेन समर्थेन सह प्रकृतसूत्रेण तत्पुरुषसमाससंज्ञं भवति। ततः कुम्भशब्दस्य कर्मत्वात् कारशब्देन कृदन्तेन योगे "कर्तृकर्मणोः कृति" इत्यनेन ङस्प्रत्ययो भवति। ततः कुम्भ ङस् कार इति स्थिते समासस्य प्रातिपदिकत्वात् सुब्लुकि निष्पन्नात् कुम्भकारशब्दात् सौ प्रक्रियाकार्ये कुम्भकारः इति रूपम्। अत्र प्रातिपदिकेन कारशब्देन सह समासत्वात् लौकिकविग्रहवाक्यम् असम्भवम्।

## (४.६.१) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ (परिभाषा)

**परिभाषार्थः -** गतिसंज्ञकस्य कारकसंज्ञकस्य उपपदसंज्ञकस्य च कृदन्तेन सह समासः कृदन्तात् सुबुत्पत्तेः प्राक् भवति।

**परिभाषाव्याख्या -** "उपपदमतिङ्" इत्यस्मिन् सूत्रे सह सुपा इत्यस्मात् सूत्रात् सुपा इत्यस्यानुवृत्तिः न क्रियते। तदा तिङन्तेन सहोपपदस्य समासप्रसङ्गः, तद्वारणाय सूत्रे अतिङ् इति पदं प्रदत्तम्। एवं सूत्रे सुबुत्पत्तेः प्रागेव कृदन्तेन सह उपपदस्य समासो विहितः। सुपा इत्यस्य पदस्य सूत्रे अनुवृत्तिः यदि भवति तर्हि अतिङ् इति पदं न देयं तिङन्तप्रतिषेधाय। तथापि सुपा इत्यस्य अनुवृत्तिः कथं नास्तीति प्रश्ने सति सुबुत्पत्तेः पूर्वं समासे प्रमाणं दर्शयति "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति।

**उदाहरणम् -** एतस्याः परिभाषायाः उदाहरणं व्याघ्री इति। विशेषेण आ समन्ताद् जिघ्रतीति विग्रहे आङ् इत्युपपदे घ्राधातोः "आतश्चोपसर्गे" इत्यनेन कप्रत्यये "आतो लोप इटि च" इत्यनेन धातोराकारस्य लोपे आ घ्र् अ इति जाते सर्वसंयोगे आ घ्र इति भवति। तदा घ्र इत्यनेन कृदन्तेन सह आ इति उपपदस्य सुबुत्पत्तेः पूर्वम् "उपपदमतिङ्" इत्यनेन उपपदसमासे आघ्र इति निष्पद्यते। ततः "गतिश्च" इत्यनेन गतिसंज्ञकस्य वि इत्यस्योपसर्गस्य आघ्र इत्यनेन सह "कुगतिप्रादयः" इत्यनेन नित्यं प्रादितत्पुरुषसमासो भवति। ततः वि आघ्र इति स्थिते "इको यणचि" इत्यनेन वि इत्यस्य इकारस्य अचि आकारे परे यणि यकारे सर्वसंयोगे व्याघ्र इति निष्पद्यते। ततः सुबुत्पत्तेः पूर्वमेव ङीषि व्याघ्री इति रूपम्।

कारकस्योदाहरणम् अश्वक्रीती। अश्वेन क्रीता इति लौकिकविग्रहे अश्व टा क्रीत इत्यलौकिकविग्रहे "कर्तृकरणे कृता बहुलम्" इत्यनेन सूत्रेण क्रीत इति कृदन्तेन सह करणकारकस्य अश्व टा इत्यस्य समासे प्रक्रियाकार्ये निष्पन्नात् अश्वक्रीतशब्दात् स्त्रीत्वविवक्षायां "क्रीतात्करणपूर्वात्" इत्यनेन ङीषि प्रक्रियाकार्ये अश्वक्रीती इति रूपम्।



तत्पुरुषसमासे समासान्तानां प्रत्ययानां सूत्राणि -

## [४.७] तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः॥ (५.४.८६)

**सूत्रार्थः** - संख्याऽव्ययादेः अङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अच्प्रत्ययो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे तत्पुरुषस्य अङ्गुलेः संख्याव्ययादेः इति पदत्रयं षष्ठ्येकवचनान्तम्। "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" इत्यतः अच् इति प्रथमान्तम् पदम् अनुवर्तते। "समासान्ताः", "तद्धिताः", "प्रत्ययः", "परश्च" इत्येतानि अधिकृतानि। अङ्गुलेः इति तत्पुरुषस्येत्यस्य विशेषणम्। अतः "येन विधिस्तदन्तस्य" इत्यनेन सूत्रेण तदन्तविधौ अङ्गुल्यन्तस्य तत्पुरुषस्य इति भवति। संख्याऽव्ययादेः इत्यस्यापि तत्पुरुषस्येत्यत्रान्वयः। संख्या च अव्ययं च संख्याव्ययम्, संख्याव्ययम् आदि यस्य सः संख्याव्ययादिः तस्येति द्वन्द्वगर्भबहुव्रीहिसमासः। एवं सूत्रार्थ आगच्छति - "संख्याऽव्ययादेः अङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति" इति।

**उदाहरणम्** - संख्यापूर्वस्याङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तस्य अचः उदाहरणं द्व्यङ्गुलं दार्वादिकम् इति। द्वे अङ्गुली प्रमाणमस्येति लौकिकविग्रहे द्वि औ अङ्गुलि औ इत्यलौकिकविग्रहे तद्धितार्थे मात्रचि विवक्षिते "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन सूत्रेण तत्पुरुषसमासो भवति। ततः संख्यावाचकस्य द्वि औ इत्यस्योपसर्जनत्वात्पूर्वनिपातो भवति। अस्य समासस्य "तत्पुरुषः" इत्यनेन तत्पुरुषत्वं "संख्यापूर्वो द्विगुः" इत्यनेन च सूत्रेण द्विगुत्वमस्ति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि द्वि अङ्गुलि इति स्थिते यणि द्व्यङ्गुलि इति जाते प्रस्तुतेन सूत्रेण संख्यापूर्वस्य तत्पुरुषस्य समासान्तः अच्प्रत्ययो भवति। अचः चकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे द्व्यङ्गुलि अ इति जाते "यचि भम्" इत्यनेन द्व्यङ्गुलि इत्यस्य भसंज्ञायां "यस्येति च" इत्यनेन इकारस्य लोपे सर्वसंयोगे निष्पन्नात् द्व्यङ्गुलशब्दात् सौ द्व्यङ्गुलम् इति रूपं निष्पन्नम्। अव्ययपूर्वस्य अङ्गुल्यन्तस्य समासान्तस्योदाहरणं निर्गतम् अङ्गुलिभ्यः निरङ्गुलम् इति।



## पाठगतप्रश्नाः-४

२१. "उपपदमतिङ्" इति सूत्रस्यार्थः कः।

२२. "उपपदमतिङ्" इति सूत्रस्य एकमुदाहरणं देयम्।

२३. "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः" इति परिभाषार्थः कः।

२४. सुबुत्पत्तेः प्राक् कृदन्तेन सह गतिसमासे किमुदाहरणम्।

२५. "तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः" इति सूत्रस्यार्थः कः।

२६. संख्यापूर्वस्य तत्पुरुषस्य समासान्तविधाने किमुदाहरणम्।



२७. अव्ययपूर्वपदस्य तत्पुरुषस्य समासान्तविधाने किमुदाहरणम्।

## [४.८] अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः॥ (५.४.८७)

**सूत्रार्थः** - अहःसर्वैकदेशसंख्यातपुण्यशब्देभ्यः संख्याऽव्ययादेः च परो यः रात्रिशब्दः तदन्तस्य तत्पुरुषस्य समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अच्प्रत्ययो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे अहःसर्वैकदेशसंख्यातपुण्यात् इति पञ्चम्येकवचनान्तं पदम्। च इत्यव्ययपदम्। रात्रेः इति षष्ठ्येकवचनान्तं पदम्। "तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः" इत्यस्मात् सूत्रात् तत्पुरुषस्य इति पदमनुवर्तते। "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" इत्यतः अच् इति पदम् अनुवर्तते। "समासान्ताः", "तद्धिताः", "प्रत्ययः", "परश्च" इत्येतानि अधिकृतानि। चकारेण पूर्वसूत्रात् संख्याव्ययादेः इति पदस्य ग्रहणमस्ति। अहश्च सर्वश्च एकदेशश्च संख्यातश्च पुण्यश्च अहःसर्वैकदेशसंख्यातपुण्यम्, तस्मादिति समाहारद्वन्द्वसमासः। एकदेशशब्देन अवयववाचकानां पूर्वपराधरोत्तरादीनां शब्दानां ग्रहणं भवति। एवं सूत्रार्थ आगच्छति - "अहःसर्वैकदेशसंख्यातपुण्यशब्देभ्यः संख्याऽव्ययादेः च परो यः रात्रिशब्दः तदन्तस्य तत्पुरुषस्य समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति" इति।

एतस्य सूत्रस्य व्याख्यानावसरे "अहर्ग्रहणं द्वन्द्वार्थम्" इति वार्तिकं पठितम्। अहन्पूर्वस्य रात्र्यन्तस्य द्वन्द्वस्य समासान्तः अच् तेन भवति।

**उदाहरणम्** - अहन्पूर्वस्य रात्र्यन्तस्य समासान्तस्य अचः उदाहरणम् अहोरात्रः इति। अहश्च रात्रिश्चानयोः समाहारः इति लौकिकविग्रहे अहन् सु रात्रि सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः "अल्पाच्तरम्" इत्यनेन अल्पतराच्सहितस्य अहन् सु इत्यस्य पूर्वनिपाते, प्रातिपदिकत्वात् सुब्लुकि अहन् रात्रि इति स्थिते "अहर्ग्रहणं द्वन्द्वार्थम्" इति वार्तिकपरिष्कृतेन प्रकृतसूत्रेण अहन्पूर्वपदस्य रात्र्यन्तस्य द्वन्द्वस्य समासान्ते अचि अनुबन्धलोपे अहोरात्रि अ इति जाते, "यचि भम्" इत्यनेन अहोरात्रि इत्यस्य भसंज्ञायां "यस्येति च" इत्यनेन इकारस्य लोपे सर्वसंयोगे निष्पन्नात् अहोरात्रशब्दात् सौ प्रक्रियाकार्ये अहोरात्रः इति निष्पन्नम्।

सर्वपूर्वपदस्य रात्र्यन्तस्य तत्पुरुषस्य समासान्तस्योदाहणं सर्वरात्रः इति। सर्वा चासौ रात्रिश्च इति लौकिकविग्रहे सर्वा सु रात्रि सु इत्यलौकिकविग्रहे तत्पुरुषसमासे सुब्लुकि प्रक्रियाकार्ये सर्वरात्रि इति स्थिते, अनेन सूत्रेण सर्वपूर्वपदस्य रात्र्यन्तस्य समासान्ते अचि प्रक्रियाकार्ये सौ सर्वरात्रः इति निष्पन्नम्।

एकदेशपूर्वपदस्य समासान्तस्योदाहरणं पूर्वं रात्रेः पूर्वरात्रः इति। संख्यातपूर्वपदस्य समासान्तस्योदाहरणं संख्यातरात्रः इति। पुण्यपूर्वपदस्य समासान्तस्योदाहरणं पुण्यरात्रः इति।

## [४.९] रात्राह्नाऽहाः पुंसि॥ (२.४.२९)

**सूत्रार्थः** - रात्राह्नाहान्तौ द्वन्द्वतत्पुरुषौ पुंसि भवतः।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण पुंस्त्वं विधीयते। अहोरात्रशब्दस्य "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन रात्रिशब्दस्य स्त्रीलिङ्गत्वात् स्त्रीलिङ्गता प्राप्नोति, तत् प्रबाध्य "स नपुंसकम्" इत्यनेन नपुंसकत्वापत्तिः। सर्वरात्रशब्दस्य तु स्त्रीलिङ्गतापत्तिश्च। अहोरात्र-सर्वरात्रशब्दयोः किं लिङ्गं स्यादिति वर्णनाय सूत्रमिदं प्रवृत्तम्।

पदद्वयात्मके अस्मिन् सूत्रे रात्राह्नाहाः इति प्रथमाबहुवचनान्तं पुंसि इति सप्तम्येकवचनान्तं पदम्। "परवल्लिङ्गं द्वन्द्वत्पुरुषयोः" इत्यस्मात् सूत्रात् द्वन्द्वतत्पुरुषयोः इति पदमनुवर्तते। तस्य च विभक्तिविपरिणामेन द्वन्द्वतत्पुरुषौ इति रूपम्। रात्रश्च अह्नश्च अहश्च रात्राह्नाहाः इतीतरेतरद्वन्द्वसमासः। द्वन्द्वतत्पुरुषौ इत्यस्य विशेषणत्वात् रात्राह्नाहाः इत्यस्य तदन्तविधौ रात्राह्नाहान्तौ द्वन्द्वतत्पुरुषौ इत्यर्थः। एवं "रात्राह्नाहान्तौ द्वन्द्वतत्पुरुषौ पुंसि भवतः" इति सूत्रार्थः।

एतत्सूत्रव्याख्याने "संख्यापूर्वा रात्रिः" इति लिङ्गानुशासनस्य नपुंसकाधिकारे अन्तर्गतं सूत्रम् अवलम्ब्य एकं वचनं प्राप्यते "संख्यापूर्वं रात्रं क्लीबम्" इति। संख्यापूर्वपदस्य रात्र्यन्तस्य च समासस्य नपुंसकलिङ्गे प्रयोगो भवति इति वचनस्यार्थः।

**उदाहरणम्** - अहश्च रात्रिश्च इति विग्रहे समासे निष्पन्नस्य अहोरात्रशब्दस्य “स नपुंसकम्” इत्यनेन नपुंसकत्वं प्रबाध्य प्रकृतसूत्रेण पुंस्त्वविधानात् सौ प्रक्रियाकार्ये अहोरात्रः इति रूपम्। एवमेव सर्वरात्रशब्दस्य सौ सर्वरात्रः इति रूपम्।

"संख्यापूर्वं रात्रं क्लीबम्" इति वचनानुसारेण द्वयोः रात्र्योः समाहारः इति विग्रहे निष्पन्नस्य द्विरात्रशब्दस्य नपुंसके प्रयोगो भवति। एवमेव त्रिरात्रम् नवरात्रम् इत्यादिकं सिध्यति।

## [४.१०] राजाहःसखिभ्यष्टच्॥ (५.४.९१)

**सूत्रार्थः** - राजाहःसखिशब्दान्तात् तत्पुरुषात् समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे राजाहःसखिभ्यः टच् इति पदच्छेदः। राजाहःसखिभ्यः इति पञ्चमीबहुवचनान्तं टच् इति च प्रथमैकवचनान्तं पदम्। राजा च अहश्च सखा च राजाहःसखायः, तेभ्य इतीतरेतरद्वन्द्वः। "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इत्यस्मात् सूत्रात् तत्पुरुषस्य इति पदमनुवर्तते। तस्य विभक्तिविपरिणामेन पञ्चम्येकवचने तत्पुरुषादिति भवति। तद्विशेषणत्वेन राजाहःसखिभ्यः इत्यस्य तदन्तविधौ राजाहःसखिशब्दान्तात् तत्पुरुषाद् इत्यर्थो भवति। "समासान्ताः", "तद्धिताः" इति सूत्रद्वयम् अधिकृतम्। एवं सूत्रार्थः - "राजाहःसखिशब्दान्तात् तत्पुरुषात् समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं परमराजः इति। परमश्चासौ राजा चेति लौकिकविग्रहे परम सु राजन् सु इत्यलौकिकविग्रहे "विशेषणं विशेष्येण बहुलम्" इत्यनेन तत्पुरुषसमासे प्रक्रियाकार्ये परमराजन् इति निष्पद्यते। ततः प्रकृतसूत्रेण समासान्ते टचि परमराजन् टच् इति स्थिते टकारस्य "चुटू" इत्यनेन चकारस्य च "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे परमराजन् अ इति

भवति। ततः परमराजन् इत्यस्य भसंज्ञायां "नस्तद्धिते" इत्यनेन टेरनः लोपे परमराज् अ इति स्थिते सर्वसंयोगे निष्पन्नस्य परमराजशब्दस्य परवल्लिङ्गत्वेन पुंसि सौ प्रक्रियाकार्ये परमराजः इति रूपम्।



## पाठगतप्रश्नाः-५

२८. "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति सूत्रस्यार्थः कः।

२९. "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति सूत्रस्य एकमुदाहरणं देयम्।

३०. "रात्राह्नाहाः पुंसि" इति सूत्रस्यार्थः कः।

३१. "रात्राह्नाहाः पुंसि" इति सूत्रस्य एकमुदाहरणं देयम्।

३२. "संख्यापूर्वं रात्रं क्लीबम्" इति वचनस्यार्थः कः, किञ्चात्रोदाहरणम्।

३३. "राजाहसखिभ्यष्टच्" इति सूत्रस्यार्थः कः।

३४. "राजाहसखिभ्यष्टच्" इति सूत्रस्य एकमुदाहरणं देयम्।

---

## [४.११] आन्महतः समानाधिकरणजातीययोः॥ (६.३.४६)

**सूत्रार्थः** - समानाधिकरणे उत्तरपदे जातीये च परे महतः आकारः आदेशो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण महतः आकारः अन्तादेशो विधीयते। पदत्रयात्मके अस्मिन् सूत्रे आत् महतः समानाधिकरणजातीययोः इति पदच्छेदः। अस्मिन् सूत्रे आत् इति प्रथमैकवचनान्तं, महतः इति पञ्चम्येकवचनान्तं समानाधिकरणजातीययोः इति च सप्तमीद्विवचनान्तं पदम्। समानाधिकरणं च जातीयश्च समानाधिकरणजातीयौ तयोः समानाधिकरणजातीययोः इति इतरेतरद्वन्द्वः। "अलुगुत्तरपदे" इत्यस्मात्सूत्रात् उत्तरपदे इति पदम् अनुवर्तते। उत्तरपदे इत्यस्यान्वयः समानाधिकरणेत्यंशेन एव सम्भवति "प्रकारवचने जातीयर्" इत्यनेन विहितस्य जातीयस्य प्रत्ययत्वाद् उत्तरपदत्वाभावात्। एवं सूत्रार्थः समायाति - "समानाधिकरणे उत्तरपदे जातीये च परे महतः आकारः आदेशो भवति" इति।

"अलोऽन्त्यस्य" इति परिभाषया महतः अन्त्यस्य तकारस्य स्थाने एव आकारादेशो भवति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं महाराजः इति। महान् चासौ राजा चेति लौकिकविग्रहे महत् सु राजन् सु इत्यलौकिकविग्रहे "विशेषणं विशेष्येण बहुलम्" इत्यनेन तत्पुरुषसमासे प्रक्रियाकार्ये महत् राजन् इति सिध्यति। ततः "अलोऽन्त्यस्य" इति परिभाषया परिष्कृतेन प्रकृतसूत्रेण उत्तरपदे परे महतः तकारस्य आकारादेशे मह आ राजन् इति जाते सवर्णदीर्घे महाराजन् इति निष्पद्यते। ततः समासान्ते टचि प्रक्रियाकार्ये महाराजः इति रूपम्।



जातीयरि परे उदाहरणं भवति महाजातीयः इति। महत्त्वविशिष्ट इत्यर्थे महत् इत्यस्मात् "प्रकारवचने जातीयर्" इत्यनेन जातीयर्-प्रत्यये अनुबन्धलोपे महत् जातीय इति जाते प्रकृतसूत्रेण जातीयरि परे महतः तकारस्य आकारे सवर्णदीर्घे प्रक्रियाकार्ये महाजातीयः इति रूपम्।

## [४.१२] द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः॥ (६.३.४७)

**सूत्रार्थः** - द्वि अष्टन् इत्यनयोः शब्दयोः संख्यावाचके उत्तरपदे परे आकारः अन्तादेशो भवति, न तु बहुव्रीहिसमासे अशीत्युत्तरपदे च परे।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण आकारः अन्तादेशो विधीयते।पदत्रयात्मके अस्मिन् सूत्रे द्व्यष्टनः संख्यायाम् अबहुव्रीह्यशीत्योः इति पदच्छेदः। अस्मिन् सूत्रे द्व्यष्टनः इति षष्ठ्येकवचनान्तं, संख्यायाम् इति सप्तम्येकवचनान्तम् अबहुव्रीह्यशीत्योः इति सप्तमीद्विवचनान्तं पदम्। द्वि च अष्ट च द्व्यष्ट, तस्य द्व्यष्टनः इति समाहारद्वन्द्वः। बहुव्रीहिश्च अशीतिश्च बहुवीह्यशीती, तयोः बहुव्रीह्यशीत्योः इतीतरेतरद्वन्द्वः। न बहुव्रीह्यशीत्योः अबहुव्रीह्यशीत्योः इति नञ्तत्पुरुषः। "आन्महतः समानाधिकरणजातीययोः" इत्यस्मात् सूत्राद् आत् इत्यनुवर्तते। "अलुगुत्तरपदे" इत्यस्मात्सूत्रात् उत्तरपदे इति पदम् अनुवर्तते। उत्तरपदे इत्यस्यान्वयः संख्यायाम् इत्यनेन अशीत्याम् इत्यनेन च सम्भवति। बहुव्रीहौ इत्यनेन सह तस्यान्वयो नास्ति। एवं सूत्रार्थः समायाति - "द्वि अष्टन् इत्यनयोः शब्दयोः संख्यावाचके उत्तरपदे परे आकारः अन्तादेशो भवति, न तु बहुव्रीहिसमासे अशीत्युत्तरपदे च परे" इति।

"अलोऽन्त्यस्य" इति परिभाषया अन्त्यस्य स्थाने एव आकारादेशो भवति।

**उदाहरणम्** - अस्य सूत्रस्य द्विशब्दस्योदाहरणं तावद् द्वादश इति। द्वौ च दश च इति लौकिकविग्रहे द्वि औ दशन् जस् इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण द्वन्द्वसमासे प्रक्रियाकार्ये सुब्लुकि द्वि दशन् इति स्थिते प्रकृतसूत्रेण संख्यावाचके दशन् इत्युत्तरपदे परे द्विशब्दस्य आकारान्तादेशे द्वादशन् इति निष्पद्यते। ततः जसि प्रक्रियाकार्ये द्वादश इति रूपम्। एवमेव द्विशब्दस्य द्वाविंशतिः, द्वात्रिंशत् इत्यादिकमुदाहरणम्। एवमेव अष्टन्शब्दस्य अष्टादश इत्युदाहरणम्।

## [४.१३] त्रेस्त्रयः॥ (६.३.४८)

**सूत्रार्थः** - त्रिशब्दस्य संख्यावाचके उत्तरपदे परे त्रयस् इत्यादेशो भवति, न तु बहुव्रीहिसमासे अशीत्युत्तरपदे च परे।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण त्रिशब्दस्य त्रयस् इत्यादेशो विधीयते।

पदद्वयात्मके अस्मिन् सूत्रे त्रेः इति षष्ठ्येकवचनान्तं त्रयः इति प्रथमैकवचनान्तं पदम्। "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः" इत्यस्मात् सूत्रात् संख्यायाम् इति पदम् अबहुव्रीह्यशीत्योः इति च पदम् अनुवर्तते। "अलुगुत्तरपदे" इत्यस्मात्सूत्रात् उत्तरपदे इति पदम् अनुवर्तते। उत्तरपदे इत्यस्यान्वयः संख्यायाम् इत्यनेन अशीत्याम् इत्यनेन च सम्भवति। बहुव्रीहौ इत्यनेन सह तस्यान्वयो नास्ति। एवं

सूत्रार्थः समायाति- "त्रिशब्दस्य संख्यावाचके उत्तरपदे परे त्रयस् इत्यादेशो भवति, न तु बहुव्रीहिसमासे अशीत्युत्तरपदे च परे" इति।

"अनेकाल्शित्सर्वस्य" इति परिभाषया त्रिशब्दस्य सम्पूर्णस्य स्थाने एव त्रयस् इत्यादेशो भवति।

**उदाहरणम् -** अस्य सूत्रस्य द्विशब्दस्योदाहरणं तावद् त्रयोदश इति। त्रयश्च च दश च इति लौकिकविग्रहे त्रि जस् दशन् जस् इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण द्वन्द्वसमासे प्रक्रियाकार्ये सुब्लुकि त्रि दशन् इति स्थिते प्रकृतसूत्रेण संख्यावाचके दशन् इत्युत्तरपदे परे त्रिशब्दस्य सर्वस्य स्थाने त्रयस् इत्यादेशे त्रयस् दशन् इति निष्पद्यते। ततः सस्य रुत्वे "हशि च" इत्यनेन रेफस्य उकारे गुणे सर्वसंयोगे त्रयोदशन् इति शब्दो निष्पद्यते। ततः जसि प्रक्रियाकार्ये त्रयोदश इति रूपम्। एवमेव त्रिशब्दस्य त्रयोविंशतिः, त्रयस्त्रिंशत् इत्यादिकमुदाहरणम्।



## पाठगतप्रश्नाः-६

३५. "आन्महतः समानाधिकरणजातीययोः" इति सूत्रस्यार्थः कः।

३६. महाराजः इत्यत्र महत आकारः अन्तादेशः केन कथम्।

३७. जातीयरि परे महत आकारान्तादेशस्य किमुदाहरणम्।

३८. "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः" इति सूत्रस्यार्थः कः।

३९. द्वादश इत्यत्र द्विशब्दस्य आकारान्तादेशः कथम्।

४०. "त्रेस्त्रयः" इति सूत्रस्यार्थः कः।

४१. त्रयस् इत्यादेशः सम्पूर्णस्य त्रिशब्दस्य स्थाने कथं भवति।

---

## [४.१४] परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥ (२.४.२६)

**सूत्रार्थः -** द्वन्द्वतत्पुरुषयोः परपदस्येव लिङ्गं भवति।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। अनेन सूत्रेण द्वन्द्वे तत्पुरुषे च परवल्लिङ्गं विधीयते। पदत्रयात्मके अस्मिन् सूत्रे परवत् इत्यव्ययपदम्, लिङ्गमिति प्रथमैकवचनान्तं द्वन्द्वतत्पुरुषयोः इति षष्ठीद्विवचनान्तं पदम्। परशब्दात् षष्ठ्यन्तात् "तत्र तस्येव" इत्यनेन वतिप्रत्यये परवत् इति रूपम्। परस्य परपदस्य इव इति तात्पर्यम्। द्वन्द्वश्च तत्पुरुषश्च द्वन्द्वतत्पुरुषौ तयोः द्वन्द्वतत्पुरुषयोः इति इतरेतरद्वन्द्वसमासः। एवं सूत्रार्थः समायाति - "द्वन्द्वतत्पुरुषयोः परपदस्येव लिङ्गं भवति" इति।

**उदाहरणम् -** अस्य सूत्रस्य द्वन्द्वसमासे उदाहरणं तावत् कुक्कुटमयूर्यौ इति। कुक्कुटश्च च मयूरी च इति लौकिकविग्रहे कुक्कुट सु मयूरी सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासे प्रक्रियाकार्ये कक्कुटमयूरीशब्दो निष्पद्यते। कुक्कुटमयूरी इत्यत्र मयूरी इत्यस्य



स्त्रीलिङ्गत्वात् प्रकृतसूत्रेण द्वन्द्वसमासनिष्पन्नस्य कुक्कुटमयूरीशब्दस्य स्त्रीलिङ्गे प्रथमाद्विवचने कुक्कुटमयूर्यौ इति रूपं निष्पद्यते।

तत्पुरुषे चोदाहरणम् अर्धपिप्पली इति। अर्धं पिप्पल्याः इति लौकिकविग्रहे अर्ध सु पिप्पली ङस् इत्यलौकिकविग्रहे "अर्धं नपुंसकम्" इत्यनेन सूत्रेण तत्पुरुषसमासे प्रक्रियाकार्ये अर्धपिप्पलीशब्दो निष्पन्नः। अर्धपिप्पली इत्यत्र पिप्पली इत्यस्य स्त्रीलिङ्गत्वात् प्रकृतसूत्रेण अर्धपिप्पलीत्यस्य सम्पूर्णस्य स्त्रीलिङ्गत्वविधानात् ततः प्रथमैकवचने सौ अर्धपिप्पली इति रूपम्।

## (४.१४.१) द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः (वार्तिकम्)

**वार्तिकार्थः** - द्विगुसमासे प्राप्तापन्नालम्पूर्वपदे तत्पुरुषसमासे गतिसमासे च परवल्लिङ्गतायाः प्रतिषेधो भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रस्य वर्णनावसरे महाभाष्ये पठितम्। अतः एतत्सूत्रसम्प्राप्तस्य परवल्लिङ्गत्वस्यैव निषेधकं वार्तिकम् इदम्।

त्रिषु स्थानेषु परवल्लिङ्गतायाः निषेधः अनेन वार्तिकेन विधीयते -

क) द्विगुसमासे परवल्लिङ्गतानिषेधो भवति।

ख) प्राप्तापन्नालम्पूर्वपदकस्य तत्पुरुषस्य परवल्लिङ्गतानिषेधो भवति।

ग) गतिसमासे परवल्लिङ्गतानिषेधो भवति।

अलम्पूर्वस्य तत्पुरुषसमासस्य विधायकं किमपि सूत्रं न प्राप्यते। तथापि अस्मिन् वार्तिके तस्योल्लेखादेव अलम्पूर्वकः तत्पुरुषः भवतीति ज्ञाप्यते।

**उदाहरणम्** - अस्य वार्तिकस्य द्विगुसमासे उदाहरणं पञ्चकपालः इति। पञ्चसु कपालेषु संस्कृतः इति लौकिकविग्रहे पञ्चन् सुप् कपाल सुप् इत्यलौकिकविग्रहे "संस्कृतं भक्षाः" इत्यनेन तद्धिते विवक्षिते "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन सूत्रेण द्विगुसमासे, संख्यावाचकस्य पूर्वनिपाते, सुब्लुकि पञ्चनः नकारस्य लोपे पञ्चकपाल इति सिध्यति। तस्मात् सप्तमीबहुवचने सुपि पञ्चकपाल सुप् इति सप्तम्यन्तात् "संस्कृतं भक्षाः" इत्यनेन तद्धिते अणि "द्विगोर्लुगनपत्ये" इत्यनेनाणः लोपे, "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः लुकि पञ्चकपाल इति तद्धितान्तः शब्दो निष्पद्यते। तस्य प्रातिपदिकत्वात् ततः विभक्त्युत्पत्तेः प्राक् लिङ्गनिर्णयः कार्यः। तदा "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन सूत्रेण कपालशब्दस्येव नपुंसकलिङ्गत्वे प्राप्ते प्रस्तुतेन वार्तिकेन द्विगुसमासे परवल्लिङ्गतानिषेधे पुरोडाशः इति विशेष्यानुसारेण पुंसि सौ प्रक्रियाकार्ये पञ्चकपालः इति रूपम्।

प्राप्तापन्नालम्पूर्वकानामुदाहरणानि यथाक्रमं प्राप्तजीविकः जनः, आपन्नजीविकः जनः, अलङ्कुमारिः इति। गतिसमासे च निष्कौशाम्बिः इत्यादिकमुदाहरणम्।

## [४.१५] प्राप्तापन्ने च द्वितीयया॥ (२.२.४)

**सूत्रार्थः** - प्राप्त आपन्न इत्येतौ शब्दौ द्वितीयया सह समस्येते, अकारश्चानयोः अन्तादेशो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तत्पुरुषसमासः अकारश्च अन्तादेशो विधीयते। प्रसङ्गतः प्राप्तापन्नशब्दयोगे समासविधायकं सूत्रमिदं प्रवृत्तम्। पदत्रयात्मके अस्मिन् सूत्रे प्राप्तापन्ने इति प्रथमाद्विवचनान्तं, च इत्यव्ययं द्वितीयया इति च तृतीयैकवचनान्तं पदम्। द्वितीयया अ इति प्रश्लेषः। प्राप्तं च आपन्नं च प्राप्तापन्ने इति इतरेतरद्वन्द्वः। समासः, सुप्, सह सुपा, तत्पुरुषः इत्येतत्सर्वम् अधिकृतम्। सूत्रे चकारग्रहणं विधिद्वयस्य समुच्चयार्थम्। द्वितीयया इत्यत्र तदन्तविधौ द्वितीयान्तेन सुबन्तेन इत्यर्थ आयाति। एवं सूत्रार्थः - "प्राप्त आपन्न इत्येतौ शब्दौ द्वितीयया सह समस्येते, अकारश्चानयोः अन्तादेशो भवति" इति।

"अलोऽन्त्यस्य" इति परिभाषया प्राप्तापन्नशब्दयोः अन्त्यस्य स्थाने एव अकारादेशो भवति। एतत्सूत्रं "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति द्वितीयातत्पुरुषसमासस्य अपवादभूतम्।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं प्राप्तजीविकः इति। प्राप्तः जीविकाम् इति लौकिकविग्रहे प्राप्त सु जीविका अम् इत्यलौकिकविग्रहे प्रोक्तेन सूत्रेण प्राप्त सु इति सुबन्तं जीविका अम् इत्यनेन द्वितीयान्तेन सह तत्पुरुषसमाससंज्ञं भवति। ततः प्रक्रियाकार्ये प्राप्ताजीविका इति स्थिते एतत्सूत्रप्रश्लेषबलाद् प्राप्त इत्यत्र आकारस्य स्थाने अकारे प्राप्तजीविका इति जाते ततः जीविकेत्यस्योपसर्जनसंज्ञायां ह्रस्वत्वे निष्पन्नात् प्राप्तजीविकशब्दात् पूर्वोक्तेन वार्तिकेन विशेष्यानुसारेण पुंसि सौ प्रक्रियाकार्ये प्राप्तजीविकः इति रूपम्। एवमेव प्राप्तजीविकः आपन्नजीविकः इत्यादिकमेतस्य सूत्रस्योदाहरणम्।

## [४.१६] अर्धर्चाः पुंसि च॥ (२.४.३१)

**सूत्रार्थः** - अर्धर्चादिगणे पठिताः शब्दाः पुंसि क्लीबे च भवन्ति।

**सूत्रव्याख्या** - अर्धर्चादीनां तत्पुरुषसमासनिष्पन्नानां शब्दानां विशेषतया पुंलिङ्गे क्लीबे च प्रयोगविधानाय इदं सूत्रं प्रवृत्तम्। पदत्रयात्मके अस्मिन् सूत्रे अर्धर्चाः इति प्रथमाबहुवचनान्तं, पुंसि इति सप्तम्येकवचनान्तं च इत्यव्ययं पदम्। "अपथं नपुंसकम्" इत्यस्मात् सूत्रात् चकारेण नपुंसकम् इति स्वीक्रियते। तस्य च विभक्तिविपरिणामेन सप्तम्यां नपुंसके इति भवति। अर्धर्चाः इत्यत्र बहुवचनाद् अर्धर्चादिगणे पठिताः अर्धर्चादयः शब्दा गृह्यन्ते। एवं सूत्रार्थ आयाति - "अर्धर्चादिगणे पठिताः शब्दाः पुंसि क्लीबे च भवन्ति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं अर्धर्चम् अर्धर्चः इति। ऋचः अर्धम् इति लौकिकविग्रहे ऋच् ङस् अर्ध सु इत्यलौकिकविग्रहे "अर्धं नपुंसकम्" इत्यनेन विकल्पेन तत्पुरुषसमासे सुब्लुकि प्रक्रियाकार्ये अर्धर्च् इति निष्पद्यते। ततः "ऋक्पूरब्धूःपथामानक्षे" इत्यनेन सूत्रेण अर्धर्च् इत्यस्य समासान्ते अप्रत्यये सर्वसंयोगे निष्पन्नस्य अर्धर्चशब्दस्य तत्पुरुषसंज्ञकत्वात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन परपदस्य



ऋच् इत्यस्यानुसारेण स्त्रीलिङ्गत्वे प्राप्ते तत् प्रबाध्य प्रोक्तेन सूत्रेण अर्धर्चादिगणे पठितस्य शब्दस्य पुंसि नपुंसके च प्रयोगो विधीयते। तेन अर्धर्चः अर्धर्चम् इति रूपद्वयं सिध्यति।



## पाठगतप्रश्नाः-७

४२. "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रस्यार्थः कः।

४३. द्वन्द्वे परवल्लिङ्गस्य किमुदाहरणम्।

४४. तत्पुरुषे परवल्लिङ्गस्य किमुदाहरणम्।

४५. "द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः" इति वार्तिकस्यार्थः कः।

४६. द्विगौ परवल्लिङ्गतानिषेधस्य किमुदाहरणम्।

४७. प्राप्तापन्नालम्पूर्वकानां तत्पुरुषाणां परवल्लिङ्गतानिषेधस्य कानि उदाहरणानि।

४८. गतिसमासे परवल्लिङ्गतानिषेधस्य किमुदाहरणम्।

४९. "प्राप्तापन्ने च द्वितीयया" इति सूत्रस्यार्थः कः।

५०. "प्राप्तापन्ने च द्वितीयया" इति सूत्रस्य किमुदाहरणम्।

५१. "अधर्चाः पुंसि च" इति सूत्रस्यार्थः कः।

५२. "अधर्चाः पुंसि च" इति सूत्रस्य किमुदाहरणम्।



## पाठसारः

अस्मिन् पाठे कु-गति-प्रादिसमासानां विधायकं "कुगतिप्रादयः" इति सूत्रं व्याख्यातम्। "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञाविधायकं सूत्रमत्र व्याख्यातम्। प्रादिसमासविधायकानि "प्रादयो गताद्यर्थे प्रथमया", "अत्यादयः क्रान्ताद्यर्थे द्वितीयया", "अवादयः क्रुष्टाद्यर्थे तृतीयया", "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या", "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति पञ्च वार्तिकानि च व्याख्यातानि। अत्र प्रसङ्गात् "एकविभक्ति चापूर्वनिपाते" इति उपसर्जनसंज्ञाविधायकं "गोस्त्रियोरुपसर्जनस्य" इति उपसर्जनह्रस्वविधायकं सूत्रं व्याख्यातम्।

"तत्रोपपदं सप्तमीस्थम्" इति उपपदसंज्ञाविधायकं सूत्रम् "उपपदमतिङ्" इति उपपदसमासविधायकस्य सूत्रस्य वर्णनात्पूर्वं प्रस्तुतम्। "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति सुबुत्पत्तेः पूर्वं समासप्रतिपादिका परिभाषा व्याख्याता।

ततः अस्मिन् पाठे "तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः" इति "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" समासान्तस्य अच्प्रत्ययस्य, "राजाहःसखिभ्यष्टच्" इति समासान्तस्य टच्प्रत्ययस्य विधायकं सूत्रं



व्याख्यातम्। ततः रात्राह्नाहान्तस्य शब्दस्य लिङ्गनिर्णायकं "रात्राह्नाऽहाः पुंसि" इति सूत्रं व्याख्यातम्। महाराजः इत्यादौ महत आकारान्तादेशविधायकम् "आन्महतः समानाधिकरणजातीययोः" इति सूत्रं प्रतिपादितम्। ततः समासकार्यविधायकानि "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः", "त्रेस्त्रयः" इति सूत्रद्वयं प्रस्तुतम्। ततः द्वन्द्वतत्पुरुषयोः परवल्लिङ्गताविधायकं "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रं तन्निषेधकं च "द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः" इति वार्तिकं प्रस्तुतम्। ततः प्राप्तापन्नशब्दयोगे तत्पुरुषसमासविधायकं "प्राप्तापन्ने च द्वितीयया" इति सूत्रम्, अर्धर्चादीनां पुंसि च क्लीबे विधायकम् "अर्धर्चाः पुंसि च" इति सूत्रं व्याख्यातम्। एवं तत्पुरुषसमासः अस्मिन् पाठे प्रतिपादितः।



## पाठान्तप्रश्नाः

१. "कुगतिप्रादयः" इति सूत्रस्य व्याख्यां कुरुत।

२. प्रादिसमासविधायकानि वार्तिकानि आश्रित्य एकां टिप्पणीं लिखत।

३. "तत्रोपपदं सप्तमीस्थम्" इति सूत्रस्य व्याख्यां कुरुत।

४. "उपपदमतिङ्" इति सूत्रस्य व्याख्यां कुरुत।

५. "आन्महतः समानाधिकरणजातीययोः" इति सूत्रस्य व्याख्यां कुरुत।

६. "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रस्य व्याख्यां कुरुत।

७. ससूत्रं समस्तपदानि साधयत - अतिमालः निष्कौशाम्बिः कुम्भकारः महाराजः अहोरात्रः प्राप्तजीविकः।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. समर्थाः कुगतिप्रादयः समर्थेन सुबन्तेन सह नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

२. कुपुरुषः इति।

३. ऊरीकृत्य।

४. सुपुरुषः।

५. ऊर्यादयः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः भवन्ति।

६. पटपटाकृत्य।



## उत्तराणि-२

७. गताद्यर्थे वर्तमानाः प्रादयः प्रथमान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

८. प्राचार्यः इति।

९. उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वो भवति।

१०. अतिमालः इति।

११. विग्रहे यत् नियतविभक्तिं तस्य उपसर्जनसंज्ञा भवति, किन्तु तस्य पूर्वनिपातो न भवति।

१२. उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वो भवति।

## उत्तराणि-३

१३. क्रुष्टाद्यर्थे वर्तमानाः अवादयः तृतीयान्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

१४. अवकोकिलः इति।

१५. ग्लानाद्यर्थे वर्तमानाः पर्यादयः चतुर्थ्यन्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

१६. पर्यध्ययनः।

१७. क्रान्ताद्यर्थे वर्तमानाः निरादयः पञ्चम्यन्तेन समर्थेन सुबन्तेन नित्यं समस्यन्ते, स च तत्पुरुषसंज्ञको भवति।

१८. निष्कौशाम्बिः।

१९. सप्तम्यन्ते पदे कर्मण्यण् इत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं भवति।

२०. कुम्भकारः।

## उत्तराणि-४

२१. उपपदं सुबन्तं समर्थेन सह नित्यं समस्यते, स च तत्पुरुषसंज्ञको भवति। अयं च समासः अतिङन्तः।

२२. कुम्भकारः।

२३. गतिसंज्ञकस्य कारकसंज्ञकस्य उपपदसंज्ञकस्य च कृदन्तेन सह समासः कृदन्तात् सुबुत्पत्तेः प्राक् भवति।

२४. आघ्रः।

२५. संख्याऽव्ययादेः अङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति।

२६. द्व्यङ्गुलम्।

२७. निरङ्गुलम्।



## उत्तराणि-५

२८. अहःसर्वैकदेशसंख्यातपुण्यशब्देभ्यः संख्याऽव्ययादेः च परो यः रात्रिशब्दः तदन्तस्य तत्पुरुषस्य समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति।

२९. अहोरात्रः।

३०. रात्राह्नाहान्तौ द्वन्द्वतत्पुरुषौ पुंसि भवतः।

३१. अहोरात्रः।

३२. संख्यापूर्वपदस्य रात्र्यन्तस्य च समासस्य नपुंसकलिङ्गे प्रयोगो भवति इति वचनस्यार्थः। त्रिरात्रम्, नवरात्रम् इत्यादीनि उदाहरणानि।

३३. राजाहःसखिशब्दान्तात् तत्पुरुषात् समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

३४. परमराजः इत्युदाहरणम्।

## उत्तराणि-६

३५. समानाधिकरणे उत्तरपदे जातीये च परे महतः आकारः आदेशो भवति।

३६. राजन् इति समानाधिकरणे उत्तरपदे जातीये च परे महतः आकारः आन्महतः समानाधिकरणजातीययोः इति सूत्रेण।

३७. महाजातीयः इति।

३८. द्वि अष्टन् इत्यनयोः शब्दयोः संख्यावाचके उत्तरपदे परे आकारः अन्तादेशो भवति, न तु बहुव्रीहिसमासे अशीत्युत्तरपदे च परे।

३९. द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः इति सूत्रेण संख्यावाचके दशन् इत्युत्तरपदे परे द्विशब्दस्य आकारान्तादेशे द्वादशन् इति निष्पद्यते। ततः जसि द्वादश इति रूपम्।

४०. त्रिशब्दस्य संख्यावाचके उत्तरपदे परे त्रयस् इत्यादेशो भवति, न तु बहुव्रीहिसमासे अशीत्युत्तरपदे च परे।

४१. "अनेकाल्शित्सर्वस्य" इति परिभाषया त्रिशब्दस्य सम्पूर्णस्य स्थाने एव त्रयस् इत्यादेशो भवति।

## उत्तराणि-७

४२. द्वन्द्वतत्पुरुषयोः परपदस्येव लिङ्गं भवति।

४३. कुक्कुटमयूर्यौ ।

४४. अर्धपिप्पली।

४५. द्विगुसमासे प्राप्तापन्नालम्पूर्वपदे तत्पुरुषसमासे गतिसमासे च परवल्लिङ्गतायाः प्रतिषेधो भवति।

४६. पञ्चकपालः।

४७. प्राप्तापन्नालम्पूर्वकानामुदाहरणानि यथाक्रमं प्राप्तजीविकः जनः, आपन्नजीविकः जनः, अलङ्कुमारिः इति।



४८. निष्कौशाम्बिः।

४९. प्राप्त आपन्न इत्येतौ शब्दौ द्वितीयया सह समस्येते, अकारश्चानयोः अन्तादेशो भवति।

५०. प्राप्तजीविकः।

५१. अर्धर्चादिगणे पठिताः शब्दाः पुंसि क्लीबे च भवन्ति।

५२. अर्धर्चम् अर्धर्चः इति उदाहरणद्वयम्।

॥इति चतुर्थः पाठः॥

## ५

# बहुव्रीहिसमासः - व्यधिकरणबहुव्रीहिः समासान्तप्रत्ययः च

## प्रस्तावना

अस्मिन् पाठे बहुव्रीहिसमासस्यालोचनं भवति। प्रायेण अन्यपदार्थप्रधानो बहुव्रीहिसमासः इति तस्य सामान्यलक्षणम्। अन्यपदस्यार्थः अन्यपदार्थः। अन्यपदार्थः प्रधानो यस्मिन् सः अन्यपदार्थप्रधानः। अर्थाद् यस्मिन् समासे समस्यमानपदातिरिक्तस्य अन्यस्य पदस्यार्थः प्रधानो भवति स बहुव्रीहिसमासः। यथा पीताम्बरः इति। पीतम् अम्बरं यस्य स इति विग्रहः। अत्र बहुव्रीहौ समस्यमानपदे पीतम् इति अम्बरम् इति च। एतद्द्वयसमस्यमानपदाद् अतिरिक्तम् अन्यत्पदं यस्य इति। तदर्थः विष्णुः। निष्पन्नेन पीताम्बर इति पदेन विष्णोः बोधनात् अन्यपदार्थप्रधानत्वादयं बहुव्रीहिसमासः। अयं च बहुव्रीहिः "शेषो बहुव्रीहिः" इत्यधिकारसूत्रबलात् प्रवर्तते। अस्मिन् पाठे बहुव्रीहिसमासविधायकानि पञ्च सूत्राणि उपन्यस्तानि। वार्तिकानि अपि संगृहीतानि यैः बहुव्रीहिसमासः, पूर्वपदस्य उत्तरपदस्य लोपश्च विधीयते। ततः समासविधायकसूत्रवर्णनावसरे तदुदाहरणेषु समासान्तकार्यविधानाय यानि सूत्राणि अपेक्षितानि तान्यपि अत्र संगृहीतानि।

समासविधायकसूत्रार्थलेखनावसरे बहुत्र समस्यते इति पदस्य प्रयोगः अस्ति। समस्यते इति पदस्यार्थो भवति समाससंज्ञं भवति इति। यथा - "अनेकमन्यपदार्थे" इति सूत्रस्य "अनेकं प्रथमान्तम् अन्यपदार्थे वर्तमानं विकल्पेन समस्यते, स च बहुव्रीहिसंज्ञको भवति" इत्यर्थः। एतस्य तात्पर्यं भवति "अनेकं प्रथमान्तम् अन्यपदार्थे वर्तमानं विकल्पेन बहुव्रीहिसमाससंज्ञं भवति" इति। एवमेव अन्यत्र अवधेयम्।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- बहुव्रीहिसमासविधायकानि सूत्राणि जानीयात्।
- बहुव्रीहौ पूर्वपदस्योत्तरपदलोपविधायकानि वार्तिकानि जानीयात्।
- विधायकसूत्रोपयोगितया पुंवत्कार्य-तिलोप-सादेशविधायकानि सूत्राणि जानीयात्।
- समासान्तप्रत्ययविधायकानि सूत्राणि जानीयात्।



## [५.१] शेषो बहुव्रीहिः॥ (२.२.२३)

**सूत्रार्थः** - "चार्थे द्वन्द्वः" इत्यस्मात् सूत्रात् पूर्वपर्यन्तं बहुव्रीह्यधिकारः।

**सूत्रव्याख्या** - सूत्रमिदम् अधिकारसूत्रम्। अनेन सूत्रेण बहुव्रीहिसमासस्याधिकारो विधीयते। सूत्रेऽस्मिन् शेषः बहुव्रीहिः इति पदद्वयं प्रथमैकवचनान्तम्। "प्राक्कडारात्समासः" इत्यधिकृतम् अत्र। अयमधिकारः "चार्थे द्वन्द्वः" (२।२।२९) इत्यस्मात् सूत्रात्प्राक्पर्यन्तम्। अर्थात् "शेषो बहुव्रीहिः" इत्यस्मात् सूत्रात् "चार्थे द्वन्द्वः" इत्यतः प्राग् यावत् सूत्रैः यः समासः विधीयते स बहुव्रीहिसंज्ञको भवति। एतस्मिन् अधिकारे पञ्च सूत्राणि आगच्छन्ति - "अनेकमन्यपदार्थे", "संख्ययाव्ययासन्नदूराधिकसंख्याः संख्येये", "दिङ्नामान्यन्तराले", "तत्र तेनेदमिति सरूपे", "तेन सहेति तुल्ययोगे" च।

सूत्रे शेषो नाम उक्तादन्यः। "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इत्यनेन द्वितीयान्तस्य, "तृतीया तत्कृतार्थेन गुणवचनेन" इत्यनेन तृतीयान्तस्य, "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इत्यनेन चतुर्थ्यन्तस्य, "पञ्चमी भयेन" इत्यनेन पञ्चम्यन्तस्य, "षष्ठी" इत्यनेन षष्ठ्यन्तस्य "सप्तमी शौण्डैः" इत्यनेन सप्तम्यन्तस्य च समासो विहितः। अतः द्वितीयादिसप्तमीविभक्त्यन्तानाम् उक्तत्वम्। ततः अन्यः शेषः प्रथमान्तम्। एवं प्रथमान्तानां समास एव बहुव्रीहिसंज्ञकः इति फलति।

## [५.२] अनेकमन्यपदार्थे॥ (२.२.२४)

**सूत्रार्थः** - अन्यपदस्यार्थे वर्तमानम् अनेकं प्रथमान्तं पदं विकल्पेन समस्यते, स च बहुव्रीहिसंज्ञको भवति।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण बहुव्रीहिसमासो विधीयते। सूत्रेऽस्मिन् अनेकम् इति प्रथमैकवचनान्तम् अन्यपदार्थे इति च सप्तम्येकवचनान्तं पदम्। "प्राक्कडारात्समासः", "विभाषा", "शेषो बहुव्रीहिः" इत्येतानि सूत्राणि अधिकृतानि। न एकम् अनेकम् इति नञ्तत्पुरुषसमासः। अन्यच्च तत्पदम् अन्यपदम् इति कर्मधारयसमासः। अन्यपदस्यार्थः अन्यपदार्थः, तस्मिन् अन्यपदार्थे इति षष्ठीतत्पुरुषसमासः। वर्तमानम् इत्यध्याहार्यम्। शेषग्रहणसामर्थ्यात् प्रथमान्तम् इति लभ्यते। प्रथमान्तम् इत्यस्य विशेषणम् अनेकम् इति। "अन्यपदस्यार्थे वर्तमानम् अनेकं प्रथमान्तं पदं विकल्पेन समासं प्राप्नोति, स च बहुव्रीहिसंज्ञको भवती"ति सूत्रस्यार्थः।

**उदाहरणम्** - सूत्रे प्रथमान्तानां पदानां समस्यमानतया द्वितीयान्तादीनामेव अन्यपदार्थत्वं सम्भवति। द्वितीयान्ते अन्यपदार्थे उदाहरणं प्राप्तम् उदकं यं सः प्राप्तोदको ग्रामः। तृतीयान्ते अन्यपदार्थे उदाहरणं भवति ऊढो रथो येन स ऊढरथः अनड्वान् इति। चतुर्थ्यन्ते अन्यपदार्थे उदाहरणं भवति उपहृतः पशुः यस्मै स उपहृतपशुः इति। पञ्चम्यन्ते अन्यपदार्थे उदाहरणं भवति उद्धृत ओदनो यस्याः सा उद्धृतौदना इति। षष्ठ्यन्ते अन्यपदार्थे उदाहरणं पीतमम्बरं यस्य सः पीताम्बरः इति। सप्तम्यन्ते अन्यपदार्थे उदाहरणं वीराः पुरुषा यस्मिन् स वीरपुरुषको ग्रामः इति।



तथाहि पीतम् अम्बरं यस्य सः इति लौकिकविग्रहे पीत सु अम्बर सु इत्यलौकिकविग्रहे अन्यपदार्थे विष्ण्वर्थे विद्यमानं पीत सु इति अम्बर सु इति च प्रथमान्तं प्रस्तुतसूत्रेण बहुव्रीहिसमाससंज्ञकं भवति। ततः पीत सु अम्बर सु इति समुदायस्य "कृत्तद्धितसमासाश्च" इत्यनेन सूत्रेण प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुद्वयस्य लुकि पीत अम्बर इति भवति। तदा "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन समासविधायकसूत्रे प्रथमान्तमित्यस्य प्रथमानिर्दिष्टत्वात् पीत सु अम्बर सु इत्युभयोरेव तद्बोध्यत्वेन उपसर्जनत्वमस्ति। परन्तु "उपसर्जनं पूर्वम्" इत्यनेन कस्य पूर्वनिपातः इति शङ्कायां पूर्वनिपातविधायकं सूत्रं प्रवर्तते -

## [५.३] सप्तमीविशेषणे बहुव्रीहौ॥ (२.२.३५)

**सूत्रार्थः** - बहुव्रीहिसमासे सप्तम्यन्तं विशेषणं च पूर्वं प्रयुज्यते।

**सूत्रव्याख्या** - सूत्रमिदं विधायकम्। अनेन सूत्रेण पूर्वनिपातो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् सप्तमीविशेषणे इति प्रथमाद्विवचनान्तं बहुव्रीहौ इति च सप्तम्येकवचनान्तं पदम्। सप्तमी च विशेषणं च सप्तमीविशेषणे इति इतरेतरद्वन्द्वसमासः। "प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति नियमेन सप्तमीत्यस्य तदन्तविधौ सप्तम्यन्तम् इति लभ्यते। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति क्रियाविशेषणं द्वितीयैकवचनान्तम् अनुवर्तते। प्रयुज्यते इति क्रियापदम् अध्याहार्यम्। "बहुव्रीहिसमासे सप्तम्यन्तं पदं विशेषणं च पूर्वं प्रयुज्यते" इति सूत्रस्यार्थः।

समानाधिकरणानां प्रथमान्तानामेव अन्यपदार्थे बहुव्रीहिसमासविधानात् सूत्रे सप्तमीति पदं व्यर्थम्। तद् व्यर्थीभूय ज्ञापयति यत् क्वचिद् व्यधिकरणपदो बहुव्रीहिः भवति। अत एवोक्तं दीक्षितेन – "अत एव ज्ञापकाद् व्यधिकरणपदो बहुव्रीहिः" इति।

**उदाहरणम्** - विशेषणस्य पूर्वनिपाते पीताम्बरः इत्यादिकम् उदाहरणम्। पीतम् अम्बरं यस्य सः इति लौकिकविग्रहे पीत सु अम्बर सु इत्यलौकिकविग्रहे अन्यपदार्थे विष्ण्वर्थे "अनेकमन्यपदार्थे" इत्यनेन बहुव्रीहौ सुब्लुकि पीत अम्बर इति भवति। तदा उभयोः समासविधायकसूत्रे अनेकमित्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यत्वेन उभयोः उपसर्जनत्वात् कस्य पूर्वनिपात इति प्रश्ने प्रस्तुतेन सूत्रेण विशेषणभूतस्य पीतशब्दस्य पूर्वनिपातो भवति। ततः पीत अम्बर इति स्थिते सवर्णदीर्घे निष्पन्नात् पीताम्बर इत्यस्मात् सौ प्रक्रियाकार्ये पीताम्बरः इति रूपम्।

सप्तम्यन्तस्य पूर्वनिपाते उदाहरणं कण्ठेकालः इति। कण्ठे कालः यस्य सः इति लौकिकविग्रहे कण्ठ ङि काल सु इत्यलौकिकविग्रहे सप्तमीति ग्रहणसामर्थ्याद् व्यधिकरणबहुव्रीहिसमासो भवति। ततः प्रकृतसूत्रेण सप्तम्यन्तस्य पूर्वनिपाते, प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः ङेः सोश्च लुकि प्राप्ते ङेः लुकः निषेधाय सूत्रं प्रवृत्तम् -

## [५.४] हलदन्तात् सप्तम्याः संज्ञायाम्॥ (६.३.८)

**सूत्रार्थः** - हलन्ताद् अदन्ताच्च सप्तम्याः उत्तरपदे परे संज्ञायां गम्यमानायां लुक् न भवति।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण लुकः निषेधो विधीयते। पदत्रयात्मके सूत्रेऽस्मिन् हलदन्तात् इति पञ्चम्येकवचनान्तं सप्तम्याः इति षष्ठ्येकवचनान्तं संज्ञायाम् इति च सप्तम्येकवचनान्तं पदम्। "अलुगुत्तरपदे" इति सूत्रमधिक्रियते। हल् च अत् च हलत्, हलत् अन्ते यस्य स हलदन्तः तस्मात् हलदन्तात् इति द्वन्द्वगर्भबहुव्रीहिसमासः। संज्ञायाम् इत्यनेन सह अन्वयाय गम्यमानायाम् इत्यध्याहार्यम्। "हलन्ताद् अदन्ताच्च सप्तम्याः उत्तरपदे परे संज्ञायां गम्यमानायां लुक् न भवती"ति सूत्रस्यार्थः।

**उदाहरणम्** - हलन्तात्परं सप्तम्या अलुकि उदाहरणं भवति त्वचिसारः। अदन्तात् परं सप्तम्या अलुकि कण्ठेकालः इत्युदाहरणम्। कण्ठे कालः यस्य सः इति लौकिकविग्रहे कण्ठ ङि काल सु इत्यलौकिकविग्रहे बहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपाते, सुपः ङेः सोश्च लुकि प्राप्ते अदन्तात् कण्ठशब्दात् सप्तम्याः ङेर्विधानात् तस्यालुक् अनेन सूत्रेण भवति। ततः सुपः सोर्लुकि प्रक्रियाकार्ये कण्ठेकालः इति रूपम्।



## पाठगतप्रश्नाः-१

१. "शेषो बहुव्रीहिः" इति सूत्रे शेषशब्देन कस्य ग्रहणम्।
२. "शेषो बहुव्रीहिः" इति सूत्रस्याधिकारः कियत्पर्यन्तम्।
३. बहुव्रीहिसमासविधायकानि पञ्च सूत्राणि कानि।
४. "अनेकमन्यपदार्थे" इति सूत्रस्यार्थः कः।
५. "सप्तमीविशेषणे बहुव्रीहौ" इति सूत्रस्यार्थः कः।
६. "हलदन्तात् सप्तम्याः संज्ञायाम्" इति सूत्रस्यार्थः कः।
७. अनेकम् इत्यनेन कस्य ग्रहणम्।
८. सप्तम्यन्तस्य विशेषणस्य च पूर्वनिपाते किं किमुदाहरणम्।
९. कण्ठेकालः इत्यत्र सप्तम्या लुक् कुतो न।

## (५.४.१) प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः (वार्तिकम्)

**वार्तिकार्थः** - प्रादिभ्यः परः यः धातुजकृदन्तशब्दः तदन्तस्य प्रथमान्तस्य प्रथमान्तेन सह विकल्पेन बहुव्रीहिसमासो भवति, बहुव्रीहौ च पूर्वपदस्थस्य धातुजस्य उत्तरपदस्य विकल्पेन लोपो भवति।

**वार्तिकव्याख्या** - अत्र वार्तिके चकारेण बहुव्रीहिसमासविधानं स्वीक्रियते। वस्तुतस्तु "अनेकमन्यपदार्थे" इत्यनेन एव बहुव्रीहिसमासः सिध्यति। वार्तिकमिदं पूर्वपदस्थस्य धातुजस्य उत्तरपदस्य वैकल्पिकलोपविधायकम्।



**उदाहरणम् -** वार्तिकस्यास्य उदाहरणं प्रपर्णः प्रपतितपर्णो वा। प्रकृष्टानि पतितानि इति विग्रहे प्रेत्यस्य पतित जस् इत्यनेन "प्रादयो गताद्यर्थे प्रथमया" इत्यनेन वार्तिकेन नित्यं तत्पुरुषसमासे प्रक्रियाकार्ये प्रपतितानि इति रूपं निष्पद्यते। प्रपतितानि पर्णानि यस्य सः इति लौकिकविग्रहे प्रपतित जस् पर्ण जस् इत्यलौकिकविग्रहे अन्यपदार्थे वृक्षरूपार्थे "अनेकमन्यपदार्थे" इत्यनेन सूत्रेण बहुव्रीहिसमासः भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन विशेषणस्य प्रपतित जस् इत्यस्य पूर्वनिपाते समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः जस्द्वयस्य लुकि प्रपतितपर्ण इति भवति। तदा प्रोक्तेन वार्तिकेन बहुव्रीहौ पूर्वपदस्य प्रपतित इत्यस्य धातुजस्य उत्तरपदस्य पतित इत्यस्य विकल्पेन लोपे सौ प्रक्रियाकार्ये प्रपर्णः इति रूपम्। लोपस्य वैकल्पिकत्वात् तदभावपक्षे प्रपतितपर्णः इति रूपम्। एवं प्रपतितानि पलाशानि यस्य प्रपलाशः प्रपतितपलाशः पादपः इत्येतस्य वार्तिकस्योदाहरणम्।

## (५.४.२) नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः (वार्तिकम्)

**वार्तिकार्थः -** नञः परस्य अस्त्यर्थकशब्दान्तस्य प्रथमान्तस्य प्रथमान्तेन सह विकल्पेन बहुव्रीहिसमासो भवति, बहुव्रीहौ च पूर्वपदस्थस्य अस्त्यर्थकस्य उत्तरपदस्य विकल्पेन लोपो भवति।

**वार्तिकव्याख्या -** अत्र वार्तिके चकारेण बहुव्रीहिसमासविधानं स्वीक्रियते। वस्तुतस्तु "अनेकमन्यपदार्थे" इत्यनेन एव बहुव्रीहिसमासः सिध्यति। वार्तिकमिदं पूर्वपदस्थस्य अस्त्यर्थकस्य उत्तरपदस्य वैकल्पिकलोपविधायकम्।

**उदाहरणम् -** वार्तिकस्यास्य उदाहरणं अपुत्रः अविद्यमानपुत्रो वा। न विद्यमानः इति विग्रहे नेत्यस्य विद्यमान सु इत्यनेन "नञ्" इत्यनेन सूत्रेण तत्पुरुषसमासे प्रक्रियाकार्ये अविद्यमानः इति रूपं निष्पद्यते। अविद्यमानः पुत्रो यस्य सः इति लौकिकविग्रहे अविद्यमान सु पुत्र सु इत्यलौकिकविग्रहे अन्यपदार्थे जनरूपार्थे "अनेकमन्यपदार्थे" इत्यनेन सूत्रेण बहुव्रीहिसमासः भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन विशेषणस्य अविद्यमान सु इत्यस्य पूर्वनिपाते समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुद्वयस्य लुकि अविद्यमानपुत्र इति जाते प्रोक्तेन वार्तिकेन बहुव्रीहौ पूर्वपदस्य अविद्यमान इत्यस्य अस्त्यर्थकस्य उत्तरपदस्य विद्यमान इत्यस्य विकल्पेन लोपे सौ प्रक्रियाकार्ये अपुत्रः इति रूपम्। लोपस्य वैकल्पिकत्वात् तदभावपक्षे अविद्यमानपुत्रः इति रूपम्।

## (५.४.३) सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च (वार्तिकम्)

**वार्तिकार्थः -** सप्तम्यन्तसहितस्य उपमानसहितस्य च पूर्वपदस्य पदान्तरेण समासः पूर्वपदस्य उत्तरपदलोपश्च भवति।

**वार्तिकव्याख्या -** अत्र वार्तिकेन चकारेण बहुव्रीहिसमासविधानं स्वीक्रियते। वस्तुतस्तु "अनेकमन्यपदार्थे" इत्यनेन एव बहुव्रीहिसमासः सिध्यति। वार्तिकमिदं पूर्वपदस्थस्य उत्तरपदस्य लोपविधायकम्।



**उदाहरणम् -** वार्तिकस्यास्य सप्तम्यन्तसहितपूर्वपदपक्षे उदाहरणं तावत् कण्ठेकालः इति। कण्ठे तिष्ठतीति विग्रहे "सुपि स्थः" इत्यनेन कण्ठोपपदे स्थाधातोः कप्रत्यये कण्ठेस्थः इति पदं निष्पन्नम्। कण्ठेस्थः कालः यस्य इति लौकिकविग्रहे कण्ठेस्थ सु काल सु इत्यलौकिकविग्रहे अन्यपदार्थे शिवरूपार्थे "अनेकमन्यपदार्थे" इत्यनेन सूत्रेण बहुव्रीहिसमासः भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन विशेषणस्य कण्ठेस्थ सु इत्यस्य पूर्वनिपाते समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुद्वयस्य लुकि कण्ठेस्थकाल इति भवति। तदा प्रोक्तेन वार्तिकेन पूर्वपदस्य कण्ठेस्थ इत्यस्य उत्तरपदस्य स्थ इत्यस्य लोपे सौ प्रक्रियाकार्ये कण्ठेकालः इति रूपम्।

उपमानसहितपूर्वपदे समासस्योदाहरणम् उष्ट्रमुखः इति। उष्ट्रमुखमिव मुखं यस्य इति विग्रहे बहुव्रीहौ प्रक्रियाकार्ये उष्ट्रमुख मुख इति जाते उपमानसहितस्य उष्ट्रमुखेत्यस्य उत्तरपदस्य लोपे प्रक्रियाकार्ये उष्ट्रमुखः इति रूपम्।



## पाठगतप्रश्नाः-२

१०. "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति वार्तिकस्यार्थः कः।

११. प्रपर्णः इत्यत्र कः विग्रहः।

१२. "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति वार्तिकस्यार्थः कः।

१३. अपुत्रः इत्यत्र कः विग्रहः।

१४. "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इति वार्तिकस्यार्थः कः।

१५. "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इति वार्तिकस्य सप्तम्यन्तसहितपूर्वपदपक्षे किमुदाहरणम्।

१६. "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इति वार्तिकस्य उपमानसहितपूर्वपदपक्षे किमुदाहरणम्।

## [५.५] स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु॥ (६.३.३४)

**सूत्रार्थः -** तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे भवति, न तु पुरण्यां प्रियादौ च परतः।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। अनेन सूत्रेण पुंवद्भावो विधीयते। सूत्रेऽस्मिन् स्त्रियाः पुंवत् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियाम् अपूरणीप्रियादिषु इति पदच्छेदः। अत्र स्त्रियामिति पञ्चम्येकवचनान्तम्, पुंवत् इत्यव्ययम्, भाषितपुंस्कादनूङ् इति प्रथमैकवचनान्तम्, समानाधिकरणे



स्त्रियाम् इत्युभयं सप्तम्येकवचनान्तम् अपूरणीप्रियादिषु इति च सप्तमीबहुवचनान्तं पदम्। "अलुगुत्तरपदे" इत्यस्मात् सूत्राद् उत्तरपदे इत्यनुवर्तते। भाषितपुंस्कादनूङ् स्त्रियाः पुंवत् अपूरणीप्रियादिषु समानाधिकरणे स्त्रियाम् उत्तरपदे इत्यन्वयः।

भाषितपुंस्कादनूङ् इति लुप्तषष्ठ्येकवचनान्तं पदम्। तच्च स्त्रियाः इत्यस्य विशेषणम्। ऊङः अभावः अनूङ् इत्यव्ययीभावसमासः। भाषितः पुमान् येन तद्भाषितपुंस्कम् बहुव्रीहिः। तदस्यास्तीति विग्रहे अर्शआद्यचा भाषितपुंस्कशब्दो निष्पद्यते। यः शब्दः यत् प्रवृत्तिनिमित्तम् आश्रित्य पुंलिङ्गे प्रवर्तते तदेव प्रवृत्तनिमित्तमाश्रित्य यदि अन्यस्मिन् लिङ्गे प्रवर्तते तदा तद् भाषितपुंस्कं भवति। भाषितपुंस्काद् अनुङ् यस्यां सा भाषितपुंस्कादनूङ् तस्याः इति बहुव्रीहिसमासः। अत्र निपातनात्समासे पञ्चम्या अलुक् षष्ठ्याश्च लुक्। स्त्रियाः इत्यस्य स्त्रीवाचकशब्दस्येत्यर्थः। भाषितपुंस्कादनूङ् स्त्रियाः इत्यस्यार्थः भवति - यस्मात् परः ऊङ्-प्रत्ययो न विहितः तादृशस्य भाषितपुंस्कस्य स्त्रीवाचकशब्दस्य इति।

प्रिया आदिर्येषां ते प्रियादयः इति तद्गुणसंविज्ञानबहुव्रीहिः। पूरणी च प्रियादयश्च पूरणीप्रियादयः, तेषु पूरणीप्रियादिषु इति इतरेतरद्वन्द्वसमासः। न पूरणीप्रियादिषु अपूरणीप्रियादिषु इति नञ्समासः। पूरणीशब्देन अत्र पूरणार्थप्रत्ययान्तानां स्त्रीलिङ्गशब्दानां द्वितीयादीनां ग्रहणम्। प्रियादयः नाम प्रियादिगणे पठिताः शब्दाः। उत्तरपदे इत्यनेनान्वये अपूरणीप्रियादिषु इत्यस्यार्थो भवति - पूरणार्थप्रत्ययान्तेषु स्त्रीलिङ्गशब्देषु प्रियादिषु उत्तरपदेषु च परतः न भवति इति।

स्त्रियाम् इति उत्तरपदे इत्यस्य विशेषणं तेन स्त्रीलिङ्गवाचके उत्तरपदे परे इत्यर्थः। एवं सूत्रार्थः समायाति - "तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे भवति, न तु पुरण्यां प्रियादौ च परतः" इति।

सूत्रे अनूङ् इति पदस्य किं प्रयोजनमिति चेदुच्यते वामोरूभार्यः इति। वामोरुशब्दात् स्त्रीत्वविवक्षायां "सहितशफलक्षणवामादेश्च" इत्यनेन सूत्रेण ऊङि वामोरूः इति निष्पन्नम्। वामोरूः भार्या यस्य सः इति लौकिकविग्रहे वामोरू सु भार्या सु इत्यलौकिकविग्रहे बहुव्रीहिसमासे प्रक्रियाकार्ये वामोरू भार्या इति भवति। अस्मिन् सूत्रे अनूङ् इति पदस्याभावे वामोरूशब्दस्य भाषितपुंस्कत्वात् स्त्रीलिङ्गे उत्तरपदे भार्याशब्दे परे तस्य पुंवद्भावापत्तिः स्यात्। तेन वामोरुभार्यः इत्यनिष्टं रूपं भवति। तद्वारणाय एव सूत्रे अनूङ् इति पदम्। अनूङ् इति पदस्य सत्त्वात् वामोरूशब्दस्य ऊङ्-प्रत्ययान्तत्वात् नास्ति पुंवद्भावः।

सूत्रे अपूरणीप्रियादिषु इति पदस्य सत्त्वात् कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमाः रात्रयः इत्यत्र पञ्चमीति पूरणार्थप्रत्ययान्ते स्त्रीलिङ्गे उत्तरपदे परे, कल्याणी प्रिया यस्य स कल्याणीप्रियः इत्यत्र स्त्रीलिङ्गे प्रियाशब्दे उत्तरपदे परे न पुंवद्भावः।

**उदाहरणम्** - सूत्रस्योदाहरणं भवति चित्रगुः इति। चित्रा गावः यस्य सः इति लौकिकविग्रहे चित्रा जस् गो जस् इत्यलौकिकविग्रहे बहुव्रीहौ विशेषणस्य पूर्वनिपाते, प्रातिपदिकत्वात् सुब्लुकि चित्रा गो इति भवति। चित्राशब्दस्य भाषितपुंस्कत्वमस्ति पुंलिङ्गे अपि समानार्थे प्रयोगात्। चित्रा इत्यस्मात्परं समानाधिकरणं स्त्रीलिङ्गकः गोशब्दः अस्ति तथा चित्राशब्दाद् ऊङ् अपि नास्ति। अतः प्रोक्तेन सूत्रेण चित्रा गो इति स्थिते समानाधिकरणे स्त्रीलिङ्गे गोशब्दे परे भाषितपुंस्कस्य चित्राशब्दस्य पुंवद्भावे चित्र गो



इति भवति। ततः उपसर्जनसंज्ञकस्य गोशब्दस्य अन्त्यस्य ओकारस्य "गोस्त्रियोरुपसर्जनस्य" इत्यनेन ह्रस्वे उकारे प्रक्रियाकार्ये निष्पन्नात् चित्रगुशब्दात् विशेष्यानुसारेण पुंसि सौ चित्रगुः इति रूपं निष्पद्यते। एवमेव रूपवती भार्या यस्य स रूपवद्भार्यः इत्यादिकमस्य सूत्रस्योदाहरणम्।

## [५.६] अप्पूरणीप्रमाण्योः॥ (५.४.११६)

**सूत्रार्थः** - पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेः समासान्तः तद्धितसंज्ञकः अप्प्रत्ययः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अप्प्रत्ययः विधीयते। सूत्रेऽस्मिन् अप् इति प्रथमैकवचनान्तं पूरणीप्रमाण्योः इति सप्तमीद्विवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इत्यस्मात् सूत्रात् बहुव्रीहौ इति पदम् अनुवर्तते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। पूरणी च प्रमाणी च पूरणीप्रमाण्यौ तयोः पूरणीप्रमाण्योः इति इतरेतरद्वन्द्वसमासः। "परश्च" इत्यधिकारबलात् पूरणीप्रमाण्योः इत्यस्य बहुव्रीहौ इत्यस्य च पञ्चम्यन्ततया विपरिणामो भवति। तेन पूरणीप्रमाणीभ्याम् इति बहुव्रीहेः इति च लभ्यते। पूरणीप्रमाणीभ्याम् इत्यत्र तदन्तविधौ बहुव्रीहेः इत्यनेनान्वये पूरण्यन्तात् प्रमाण्यन्ताच्च बहुव्रीहेः इति भवति। पूरण्यन्तत्वेन "तस्य पूरणे डट्" इत्यादिभिः सूत्रैः विहिता ये प्रत्ययाः तदन्ताः गृह्यन्ते। प्रमाणीशब्दः प्रमीयते अनेनेति विग्रहे प्रपूर्वकात् माधातोः ल्युटि निष्पन्नस्य प्रमाणशब्दस्य स्त्रियां ङीपि निष्पन्नः। एवं सूत्रार्थः समायाति - "पूरण्यन्तात् प्रमाण्यन्तात् च बहुव्रीहेः समासान्तः तद्धितसंज्ञकः अप्प्रत्ययो भवति" इति।

**उदाहरणम्** - सूत्रस्यास्य पूरण्यन्ते बहुव्रीहौ उदाहरणं भवति कल्याणीपञ्चमाः इति। पञ्चानां पूरणी इत्यर्थे षष्ठ्यन्तात् पञ्चन्शब्दात् मटि स्त्रियां ङीपि पञ्चमीति निष्पद्यते। कल्याणी पञ्चमी यासां रात्रीणां ताः इति लौकिकविग्रहे कल्याणी सु पञ्चमी सु इत्यलौकिकविग्रहे बहुव्रीहौ विशेषणस्य पूर्वनिपाते, सुब्लुकि कल्याणीपञ्चमी इति भवति। तदा कल्याणीपञ्चमीति बहुव्रीहेः पूरण्यन्तत्वात् ततः प्रकृतसूत्रेण अप्प्रत्यये, अपः पकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे कल्याणीपञ्चमी अ इति भवति। तदा कल्याणीपञ्चमीत्यस्य भसंज्ञायां "यस्येति च" इत्यनेन ईकारलोपे सर्वसंयोगे निष्पन्नात् कल्याणीपञ्चमशब्दात् स्त्रियां टापि ततः जसि प्रक्रियाकार्ये कल्याणीपञ्चमाः इति रूपम्।

प्रमाणीशब्दान्ते बहुव्रीहौ उदाहरणं स्त्री प्रमाणं यस्य सः स्त्रीप्रमाणः पुरुषः इति।



## पाठगतप्रश्नाः-३

१७. "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रेण किं विधीयते।

१८. "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रस्यार्थः कः।

१९. "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रे अनूङ् इति पदस्य किं प्रयोजनम्।



२०. "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रे अपूरणीप्रियादिषु इति पदस्य किं प्रयोजनम्।

२१. "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रस्य किमुदाहरणम्।

२२. "अप्पूरणीप्रमाण्योः" इति सूत्रेण किं विधीयते।

२३. "अप्पूरणीप्रमाण्योः" इति सूत्रस्यार्थः कः।

२४. "अप्पूरणीप्रमाण्योः" इति सूत्रस्य पूरण्यन्ते प्रमाण्यन्ते च बहुव्रीहौ किं किमुदाहरणम्।

## [५.७] संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये॥ (२.२.२५)

**सूत्रार्थः** - संख्येयवाचकेन एकादिसंख्याशब्देन अव्ययादयः विकल्पेन समस्यन्ते, स च बहुव्रीहिसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण बहुव्रीहिसमासो विधीयते। सूत्रेऽस्मिन् संख्यया अव्ययासन्नदूराधिकसंख्याः संख्येये इति पदच्छेदः। संख्यया इति तृतीयैकवचनान्तम्, अव्ययासन्नदूराधिकसंख्याः इति प्रथमाबहुवचनान्तं संख्येये इति च सप्तम्येकवचनान्तं पदम्। "प्राक्कडारात्समासः", "विभाषा", "शेषो बहुव्रीहिः" इत्येतानि सूत्राणि अधिकृतानि। अव्ययं च आसन्नं च अदूरञ्च अधिकं च संख्या च अव्ययासन्नादूराधिकसंख्याः इति इतरेतरद्वन्द्वसमासः। अव्ययासन्नादूराधिकसंख्याः सुबन्ताः इत्यर्थः। अत्र संख्याशब्दो न स्वरूपपरः स हि एकादिशब्दपरकः। विंशतेः प्राग् एकादिशब्दाः संख्येयेषु वर्तन्ते, ते विशेष्यलिङ्गा भवन्ति। विंशत्यादिनवतिपर्यन्ताः शब्दास्तु नित्यमेकवचनान्ताः स्त्रीलिङ्गे विद्यमानाः संख्यायां संख्येये चार्थे वर्तन्ते। अत्र अमरवचः प्रमाणम् -

"विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्योः।

संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः।।" इति।

एवं संख्येयवाचकाः ये शब्दा भवन्ति ते एव संख्येयार्थाः संख्याः। अत्र च सूत्रार्थो भवति - "संख्येयवाचकेन एकादिसंख्याशब्देन अव्ययादयः विकल्पेन समस्यन्ते, स च बहुव्रीहिसंज्ञको भवति" इति।

**उदाहरणम्** - सूत्रे अव्ययेन सह बहुव्रीहौ उदाहरणम् उपदशाः इति। अत्र उपेति समीपार्थे वर्तमानम् अव्ययम्। दशानां समीपे ये इति लौकिकविग्रहे दशन् आम् उप इत्यलौकिकविग्रहे प्रकृतसूत्रेण संख्येयवाचकेन संख्याशब्देन दशन् आम् इत्यनेन उपेति अव्ययं बहुव्रीहिसमाससंज्ञं भवति। ततः अव्ययस्य पूर्वनिपाते, प्रातिपदिकसंज्ञायां सुब्लुकि उपदशन् इति रूपं निष्पद्यते। ततः समासान्ते डचि प्रक्रियाकार्ये उपदशाः इति रूपम्।



आसन्नशब्देन सह समासे उदाहरणं भवति विंशतेः आसन्नाः आसन्नविंशाः इति। अदूरशब्देन सह समासे उदाहरणं त्रिंशतः अदूराः अदूरत्रिंशाः इति। अधिकशब्देन सह समासे उदाहरणं चत्वारिंशतः अधिकाः अधिकचत्वारिंशाः इति। संख्यया समासे उदाहरणं द्वौ च त्रयश्च द्वित्राः इति।

तत्र उपदशन् इति स्थिते समासान्तस्य डचः विधानाय सूत्रं प्रवृत्तम्-

## [५.८] बहुव्रीहौ संख्येये डजबहुगणात्॥ (५.४.७३)

**सूत्रार्थः** - संख्येये यो बहुव्रीहिः तस्मात् समासान्तः तद्धितसंज्ञकः डच्प्रत्ययो भवति, किन्तु बहुगणशब्दान्ताद् बहुव्रीहेः न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः डच्प्रत्ययो विधीयते। सूत्रेऽस्मिन् बहुव्रीहौ संख्येये डच् अबहुगणात् इति पदच्छेदः। बहुव्रीहौ संख्येये इति च सप्तम्येकवचनान्तं पदम्। डच् इति प्रथमैकवचनान्तं अबहुगणात् इति च पञ्चम्येवचनान्तं पदम्। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। "परश्च" इत्यधिकारबलात् बहुव्रीहौ इत्यस्य पञ्चम्यन्ततया विपरिणामो भवति। तस्य च संख्येये इत्यनेन अन्वयात् संख्येये यो बहुव्रीहिः तस्माद् इत्यर्थः। संख्येये बहुव्रीहिर्नाम संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये इत्यनेन विहितो यो बहुव्रीहिः। न बहुगणः अबहुगणः तस्माद् अबहुगणादिति नञ्समासः। बहुगणशब्दान्तात् बहुव्रीहेः न भवतीति तात्पर्यम्। एवं सूत्रार्थः समायाति - "संख्येये यो बहुव्रीहिः तस्मात् समासान्तः तद्धितसंज्ञकः डच्प्रत्ययो भवति, किन्तु बहुगणशब्दान्ताद् बहुव्रीहेः न भवति" इति।

सूत्रे अबहुगणाद् इति पदस्य सत्त्वाद् बहूनां समीपे ये सन्ति, गणस्य समीपे ये सन्ति इति विग्रहे यथाक्रमं निष्पन्नाद् उपबहुशब्दाद् उपगणशब्दाच्च डच्प्रत्ययो न भवति।

**उदाहरणम्** - दशानां समीपे ये इति लौकिकविग्रहे दशन् आम् उप इत्यलौकिकविग्रहे प्रकृतसूत्रेण संख्येयवाचकेन संख्याशब्देन दशन् आम् इत्यनेन उपेति अव्ययं बहुव्रीहिसमाससंज्ञं भवति। ततः अव्ययस्य पूर्वनिपाते, प्रातिपदिकसंज्ञायां सुब्लुकि उपदशन् इति स्थिते प्रस्तुतसूत्रेण समासान्ते डचि, डचयोः यथाक्रमं "चुटू" इत्यनेन "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनने तयोर्लोपे उपदशन् अ इति स्थिते पूर्वस्य भसंज्ञायां "नस्तद्धिते" इत्यनेन टेरनः लोपे सर्वसंयोगे उपदशशब्दो निष्पद्यते। ततः जसि उपदशाः इति रूपम्।

आसन्नशब्देन सह समासे उदाहरणं भवति आसन्नविंशाः इति। तत्र विंशतेः आसन्नाः इति विग्रहे समासे आसन्न विंशति इति स्थिते पूर्वसूत्रेण डचि आसन्न विंशति अ इति जाते तिशब्दस्य लोपाय सूत्रं प्रवृत्तम्-

## [५.९] ति विंशतेर्डिति॥ (६.४.१४२)

**सूत्रार्थः** - डिति परे विंशत्यन्तस्य भस्य तिशब्दस्य लोपः भवति।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण तिलोपः विधीयते। सूत्रेऽस्मिन् ति विंशतेः डिति इति पदच्छेदः। ति इति लुप्तषष्ठ्येकवचनान्तम्, विंशतेः इति षष्ठ्येकवचनान्तं डिति इति च सप्तम्येकवचनान्तं पदम्। "भस्य" इत्यधिकृतम्। "अल्लोपोऽनः" इत्यस्मात् सूत्रात् लोपः इत्यनुवर्तते। विंशतेः इत्यनेन विंशत्यन्तस्य ग्रहणम्। डिति विंशतेः भस्य ति लोपः इत्यन्वयः। एवं सूत्रार्थः समायाति - "डिति परे विंशत्यन्तस्य भस्य तिशब्दस्य लोपः भवति" इति।

**उदाहरणम्** - सूत्रस्यास्य आसन्नविंशाः इत्युदाहरणम्। तत्र विंशतेः आसन्नाः इति विग्रहे "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" इति सूत्रेण समासे आसन्न विंशति इति स्थिते पूर्वसूत्रेण डचि आसन्न विंशति अ इति स्थिते प्रकृतसूत्रेण डिति डचि परे भसंज्ञकस्य आसन्नविंशतिशब्दस्य ति इत्यंशस्य लोपो भवति। ततः लोपे आसन्नविंश अ इति जाते "यस्येति च" इत्यकारलोपे सर्वसंयोगे निष्पन्नाद् आसन्नविंशशब्दात् जसि आसन्नविंशा इति रूपम्।



## पाठगतप्रश्नाः-४

२५. "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति सूत्रस्यार्थः कः।

२६. "बहुव्रीहौ संख्येये डजबहुगणात्" इति सूत्रस्यार्थः कः।

२७. "बहुव्रीहौ संख्येये डजबहुगणात्" इति सूत्रे अबहुगणात् इति पदस्य किं प्रयोजनम्।

२८. "ति विंशतेर्डिति" इति सूत्रस्यार्थः कः।

२९. "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इत्यस्य सविग्रहमेकमुदाहरणं देयम्।

३०. उपदशाः इत्यत्र डच्प्रत्ययः कथं केन सूत्रेण।

३१. आसन्नविंशाः इत्यत्र विंशतेस्तिलोपः केन सूत्रेण।

---

## [५.१०] दिङ्नामान्यन्तराले॥ (२.२.२६)

**सूत्रार्थः** - दिशः नामानि अन्तराले वाच्ये विकल्पेन समस्यन्ते, स बहुव्रीहिसंज्ञको भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण बहुव्रीहिसमासो विधीयते। सूत्रेऽस्मिन् दिङ्नामानि अन्तराले इति पदच्छेदः। दिङ्नामानि इति प्रथमाबहुवचनान्तम् अन्तराले च सप्तम्येकवचनान्तं पदम्। "प्राक्कडारात्समासः", "विभाषा", "शेषो बहुव्रीहिः" इत्येतानि सूत्राणि अधिकृतानि। दिशः नामानि दिङ्नामानि इति षष्ठीतत्पुरुषसमासः। दिङ्नामानि नाम दिग्वाचकानि दिगर्थे रूढानि सुबन्तानि इति। अन्तराले इत्यत्र वाच्ये इत्यध्याहार्यम्। अतः सूत्रार्थो भवति - "दिग्वाचकानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, स च बहुव्रीहिसंज्ञको भवति" इति।

**उदाहरणम्** - सूत्रस्यास्योदाहरणं तावत् दक्षिणपूर्वा इति। दक्षिणस्याश्च पूर्वस्याश्च दिशः अन्तरालम् इति लौकिकविग्रहे दक्षिणा ङस् पूर्वा ङस् इत्यलौकिकविग्रहे प्रकृतसूत्रेण दिग्वाचकं दक्षिणा



ङस् इति पूर्वा ङस् इति च बहुव्रीहिसमाससंज्ञं भवति। ततः प्रक्रियाकार्ये दक्षिणापूर्वा इति जाते "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इत्यनेन वार्तिकेन दक्षिणाशब्दस्य पुंवद्भावे दक्षिणपूर्वा इति निष्पद्यते। निष्पन्नाद् दक्षिणपूर्वा इत्यस्मात् शब्दात् दिग् इति विशेष्यानुसारेण स्त्रियां सौ दक्षिणपूर्वा इति रूपम्।

## [५.११] तत्र तेनेदमिति सरूपे॥ (२.२.२७)

**सूत्रार्थः** - सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे कर्मव्यतिहारे द्योत्ये विकल्पेन समस्येते, स बहुव्रीहिसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण बहुव्रीहिसमासो विधीयते। सूत्रेऽस्मिन् तत्र तेन इदम् इति सरूपे इति पदच्छेदः। तत्र इति सप्तम्यन्तमव्ययम्। तेन इति तृतीयैकवचनान्तं पदम्। इति इत्यव्ययपदम्। सरूपे इति सप्तम्येकवचनान्तं पदम्। "प्राक्कडारात्समासः", "विभाषा", "शेषो बहुव्रीहिः" इत्येतानि सूत्राणि अधिकृतानि।

तत्र इत्यनेन सप्तम्यन्ते पदे विवक्षिते। ग्रहणविषये इति प्रथमाद्विवचनान्तं तद्विशेषणम् अध्याहार्यम्। गृह्यते अस्मिन्निति विग्रहे अधिकरणे ल्युटा ग्रहणम् इति निष्पद्यते। ग्रहणं नाम केशादिकम्। तद् विषयः वाच्यं ययोस्ते ग्रहणविषये इति बहुव्रीहिः। ग्रहणवाचके इत्यर्थः।

तेन इत्यनेन तृतीयान्ते पदे विवक्षिते। प्रहरणविषये इति प्रथमाद्विवचनान्तं तद्विशेषणम् अध्याहार्यम्। प्रह्रियते अनेनेति विग्रहे करणे ल्युटा प्रहरणम् इति निष्पद्यते। प्रहरणं नाम दण्डादिकम्। तद् विषयः वाच्यं ययोस्ते प्रहरणविषये इति बहुव्रीहिः। प्रहरणवाचके इत्यर्थः।

सरूपे इति प्रथमाद्विवचनान्तं पदविशेषणम्। ग्रहणविषये इति सप्तम्यन्तेन सह प्रहरणविषये इति च तृतीयान्तेन सह अन्वेति। इदम् इत्यर्थनिर्देशः। अत्र युद्धं प्रवृत्तम् इति विशेष्यम् अध्याहार्यम्। कर्मव्यतिहारे द्योत्ये इत्यप्यध्याहार्यम्। कर्मव्यतिहारो नाम परस्परग्रहणं परस्परप्रहरणं च।

इतिशब्दः लौकिकप्रसिद्धप्रकारवाचकः। अर्थात् केशाकेशीत्यादिलौकिकप्रयोगे यावानर्थः प्रसिद्धः तावत्यर्थे एवायं बहुव्रीहिर्भवति।

अत्र च सूत्रार्थो भवति - "सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे कर्मव्यतिहारे द्योत्ये विकल्पेन समस्येते, स बहुव्रीहिसंज्ञको भवती"ति।

**उदाहरणम्** - सूत्रस्यास्य सप्तम्यन्तसमासे केशाकेशि इत्युदाहरणम्। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति लौकिकविग्रहे केश सुप् केश सुप् इत्यलौकिकविग्रहे प्रकृतसूत्रेण सप्तम्यन्तयोः बहुव्रीहिसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुब्लुकि केश केश इति भवति। ततः "अन्येषामपि दृश्यते" इत्यनेन सूत्रेण पूर्वपदस्याकारस्य बहुव्रीहौ कर्मव्यतिहारे द्योत्ये दीर्घे केशाकेश इति भवति। ततः कर्मव्यतिहारे समासान्ते इच्प्रत्यये अनुबन्धलोपे केशाकेश इ इति भवति। ततः केशाकेशशब्दस्य भसंज्ञायां अकारलोपे सर्वसंयोगे निष्पन्नात् केशाकेशि इति शब्दात् सौ प्रक्रियाकार्ये केशाकेशि इति रूपम्। एवमेव तृतीयान्तसमासे दण्डैश्च दण्डैश्च गृहीत्वा इदं युद्धं प्रवृत्तं दण्डादण्डि इत्युदाहरणम्।

केशाकेशि दण्डादण्डि इत्यादौ समासान्तस्य इचो विधायकं सूत्रं प्रवृत्तम् -

## [५.१२] इच्कर्मव्यतिहारे॥ (५.४.१२७)

**सूत्रार्थः** - कर्मव्यतिहारे यो बहुव्रीहिः तस्मात् समासान्तः तद्धितसंज्ञक इच्प्रत्ययो भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः इच्प्रत्ययो विधीयते। सूत्रेऽस्मिन् इच् इति प्रथमैकवचनान्तं कर्मव्यतिहारे इति च सप्तम्येकवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इत्यस्मात् सूत्रात् बहुव्रीहौ इति पदम् अनुवर्तते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। "परश्च" इत्यधिकारबलात् बहुव्रीहौ इत्यस्य पञ्चम्यन्ततया विपरिणामो भवति। तस्य च कर्मव्यतिहारे इत्यनेन अन्वयात् कर्मव्यतिहारे यो बहुव्रीहिः तस्माद् इत्यर्थः। एवं सूत्रार्थः समायाति - "कर्मव्यतिहारे यो बहुव्रीहिः तस्मात् समासान्तः तद्धितसंज्ञक इच्प्रत्ययो भवति" इति।

**उदाहरणम्** - सूत्रस्यास्य सप्तम्यन्तसमासे केशाकेशि इत्युदाहरणम्। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति लौकिकविग्रहे प्रक्रियाकार्ये केशाकेश इति स्थिते प्रकृतसूत्रेण कर्मव्यतिहारे बहुव्रीहेः केशाकेश इत्यस्मात् समासान्त इच्प्रत्ययो भवति। तत इचश्चकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे केशाकेश इ इति स्थिते, पूर्वस्य "यचि भम्" इत्यनेन भसंज्ञायां "यस्येति च" इत्यनेन भसंज्ञकस्य अन्त्यस्याकारस्य लोपे सर्वसंयोगे केशाकेशि इति निष्पद्यते। ततः निष्पन्नात् केशाकेशि इत्यस्मात् नपुंसके प्रक्रियाकार्ये सौ केशाकेशि इति रूपम्।



### पाठगतप्रश्नाः-५

३२. "दिङ्नामान्यन्तराले" इति सूत्रस्यार्थः कः।

३३. "दिङ्नामान्यन्तराले" इति सूत्रस्य किमुदाहरणम्।

३४. "तत्र तेनेदमिति सरूपे" इति सूत्रस्यार्थः कः।

३५. "इच्कर्मव्यतिहारे" इति सूत्रस्यार्थः कः।

३६. केशाकेशि इत्यत्र कः विग्रहः।

---

## [५.१३] तेन सहेति तुल्ययोगे॥ (२.२.२८)

**सूत्रार्थः** - तुल्ययोगे वर्तमानं सह इत्यव्ययं तृतीयान्तेन सह विकल्पेन समस्यते, स च समासो बहुव्रीहिसंज्ञको भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण बहुव्रीहिसमासो विधीयते। सूत्रेऽस्मिन् तेन सह इति तुल्ययोगे इति पदच्छेदः। तेन इति सप्तम्यन्तमव्ययम्। सह इति साहित्यबोधकम्



अव्ययपदम्। इति इत्यव्ययपदम्। तुल्ययोगे इति सप्तम्येकवचनान्तं पदम्। युगपत्कालिकक्रियायोगे इत्यर्थः। तेन इत्यनेन तृतीयान्तेन इति लभ्यते। "प्राक्कडारात्समासः", "विभाषा", "शेषो बहुव्रीहिः" इत्येतानि सूत्राणि अधिकृतानि। एवं च सूत्रार्थो भवति - "तुल्ययोगे वर्तमानं सह इत्यव्ययं तृतीयान्तेन सह विकल्पेन समस्यते, स च समासो बहुव्रीहिसंज्ञको भवती"ति।

**उदाहरणम्** - सूत्रस्यास्य सहपुत्रः सपुत्रो वा उदाहरणम्। पुत्रेण सह इति लौकिकविग्रहे पुत्र टा सह इत्यलौकिकविग्रहे प्रकृतसूत्रेण तृतीयान्तेन पुत्र टा इत्यनेन तुल्ययोगे वर्तमानं सहेत्यव्ययं बहुव्रीहिसमाससंज्ञकं भवति। ततः प्रातिपदिकत्वात् सुब्लुकि प्रक्रियाकार्ये सहपुत्र इति निष्पद्यते। ततः सहेत्यस्य विकल्पेन स इत्यादेशे निष्पन्नात् सपुत्रशब्दात् सौ सपुत्रः इति रूपम्। सहस्य सादेशाभावपक्षे च सौ सहपुत्रः इति रूपम्।

सहपुत्रः सपुत्रः इत्यादौ विकल्पेन सादेशविधायकं सूत्रं प्रवृत्तम् -

## [५.१४] वोपसर्जनस्य॥ (६.३.८२)

**सूत्रार्थः** - उपसर्जनसर्वावयवकस्य बहुव्रीहेः अवयवस्य सहस्य विकल्पेन सादेशो भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्। अनेन सूत्रेण सहस्य विकल्पेन सादेशो विधीयते। सूत्रेऽस्मिन् वा उपसर्जनस्य इति पदच्छेदः। वा इति विकल्पार्थकमव्ययपदम्। उपसर्जनस्येति षष्ठ्येकवचनान्तं पदम्। "अलुगुत्तरपदे" इत्यतः उत्तरपदे इत्यधिकृतम्। "सहस्य सः संज्ञायाम्" इत्यस्मात् सूत्रात् सहस्य सः इति पदद्वयमनुवर्तते। उपसर्जनम् अस्यास्तीति उपसर्जनः, मत्वर्थे अर्शआद्यच्। उत्तरपदाक्षिप्तः समासो विशेष्यम्। उपसर्जनस्येत्यस्य उपसर्जनवतः समासस्य इत्यर्थः। उपसर्जनसर्वावयवकस्येति तात्पर्यम्। उपसर्जनस्य इत्यनेन लब्धस्य बहुव्रीहेः इत्यस्यान्वयः। बहुव्रीहेः इत्यवयवषष्ठी। एवं च सूत्रार्थो भवति - "उपसर्जनसर्वावयवकस्य बहुव्रीहेः अवयवस्य सहस्य विकल्पेन सादेशो भवती"ति।

**उदाहरणम्** - सूत्रस्यास्य सहपुत्रः सपुत्रो वा उदाहरणम्। पुत्रेण सह इति लौकिकविग्रहे पुत्र टा सह इत्यलौकिकविग्रहे "तेन सहेति तुल्ययोगे" इत्यनेन बहुव्रीहिसमासे सहपुत्र इति निष्पद्यते। ततः प्रकृतसूत्रेण सहेत्यस्य विकल्पेन स इत्यादेशे निष्पन्नात् सपुत्रशब्दात् सौ सपुत्रः इति रूपम्। तदभावपक्षे च सहपुत्रः इति रूपम्।



## पाठगतप्रश्नाः-६

३७. "तेन सहेति तुल्ययोगे" इति सूत्रस्यार्थः कः।

३८. "वोपसर्जनस्य" इति सूत्रस्यार्थः कः।

३९. तुल्ययोगे इति पदस्यार्थः कः।

४०. सहपुत्रः सपुत्र इत्यत्र सहस्य विकल्पेन सादेशः केन सूत्रेण कथं च भवति।



## पाठसारः

अस्मिन् पाठे बहुव्रीहिसमासः प्रतिपादितः। प्रायेण अन्यपदार्थप्रधानो बहुव्रीहिसमासः इति तस्य सामान्यलक्षणम्। अयं च बहुव्रीहिः "शेषो बहुव्रीहिः" इत्यधिकारसूत्रबलात् "चार्थे द्वन्द्वः" इत्यस्मात् सूत्रात् पूर्वपर्यन्तं प्रवर्तते। अत्र बहुव्रीहिसमासविधायकानि "अनेकमन्यपदार्थे", "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये", "दिङ्नामान्यन्तराले", "तत्र तेनेदमिति सरूपे", "तेन सहेति तुल्ययोगे" इति पञ्च सूत्राणि व्याख्यातानि। बहुव्रीहौ पूर्वनिपातविधायकं "सप्तमीविशेषणे बहुव्रीहौ" इति सूत्रं प्रस्तुतम्। सप्तमीविशेषणे इत्यत्र सप्तमीति पदसत्त्वाद् व्यधिकरणपदो बहुव्रीहिः भवति इति ज्ञाप्यते। ततः सप्तम्यन्तस्य अलुग्विधानाय "हलदन्तात् सप्तम्याः संज्ञायाम्" इति सूत्रं व्याख्यातम्।

"प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः", "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः","सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इत्येतानि वार्तिकानि अपि संगृहीतानि यैः बहुव्रीहिसमासः पूर्वपदस्य उत्तरपदस्य लोपश्च विधीयते।

ततः बहुव्रीहौ पुंवद्भावविधायकं "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रं प्रस्तुतम्। "अप्पूरणीप्रमाण्योः" इति समासान्तस्य अप्प्रत्ययस्य "बहुव्रीहौ संख्येये डजबहुगणात्" डच्प्रत्ययस्य "इच्कर्मव्यतिहारे" इति च इच्प्रत्ययस्य विधायकं सूत्रत्रयं व्याख्यातम्। आसन्नविंशा इत्यादौ तिशब्दस्य लोपविधायकं "ति विंशतेर्डिति" इति सूत्रं सहपुत्रः सपुत्रः इत्यादौ विकल्पेन सादेशविधायकं "वोपसर्जनस्य" इति सूत्रं व्याख्यातम्। एवं समासेन बहुव्रीहिसमासः अस्मिन् पाठे प्रस्तुतः।



## पाठान्तप्रश्नाः

१. "अनेकमन्यपदार्थे" इति सूत्रं व्याख्यात।
२. "सप्तमीविशेषणे बहुव्रीहौ" इति सूत्रं व्याख्यात।
३. "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रं व्याख्यात।
४. "बहुव्रीहौ संख्येये डजबहुगणात्" इति सूत्रं व्याख्यात।
५. "दिङ्नामान्यन्तराले" इति सूत्रं व्याख्यात।
६. "तत्र तेनेदमिति सरूपे" इति सूत्रं व्याख्यात।
७. "तेन सहेति तुल्ययोगे" इति सूत्रं व्याख्यात।
८. "संख्ययाव्ययासन्नदूराधिकसंख्याः संख्येये" इति सूत्रं व्याख्यात।



९. पीताम्बरः इति रूपं साधयत।

१०. कण्ठेकालः इति रूपं साधयत।

११. चित्रगुः इति रूपं साधयत।

१२. दक्षिणपूर्वा इति रूपं साधयत।

१३. केशाकेशि इति रूपं साधयत।

१४. सपुत्रः इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. सूत्रे शेषो नाम उक्तादन्यः।

२. "चार्थे द्वन्द्वः" (२।२।२९) इत्यस्मात् सूत्रात्प्राक्पर्यन्तम्।

३. "अनेकमन्यपदार्थे", "संख्ययाव्ययासन्नदूराधिकसंख्याः संख्येये", "दिङ्नामान्यन्तराले", "तत्र तेनेदमिति सरूपे", "तेन सहेति तुल्ययोगे" च।

४. अन्यपदस्यार्थे वर्तमानम् अनेकं प्रथमान्तं पदं विकल्पेन समस्यते, स च बहुव्रीहिसंज्ञको भवति।

५. बहुव्रीहिसमासे सप्तम्यन्तं विशेषणं च पूर्वं प्रयुज्यते।

६. हलन्ताद् अदन्ताच्च सप्तम्याः उत्तरपदे परे संज्ञायां गम्यमानायां लुक् न भवति।

७. अनेकम् इति प्रथमान्तस्य विशेषणम्।

८. कण्ठेकालः।

९. अदन्तात् कण्ठशब्दात् सप्तम्याः ङेर्विधानात् तस्यालुक् भवति।

### उत्तराणि-२

१०. प्रादिभ्यः परः यः धातुजकृदन्तशब्दः तदन्तस्य प्रथमान्तस्य प्रथमान्तेन सह विकल्पेन बहुव्रीहिसमासो भवति, बहुव्रीहौ च पूर्वपदस्थस्य धातुजस्य उत्तरपदस्य विकल्पेन लोपो भवति।

११. प्रकृष्टानि पतितानि इति विग्रहः।

१२. नञः परस्य अस्त्यर्थकशब्दान्तस्य प्रथमान्तस्य प्रथमान्तेन सह विकल्पेन बहुव्रीहिसमासो भवति, बहुव्रीहौ च पूर्वपदस्थस्य अस्त्यर्थकस्य उत्तरपदस्य विकल्पेन लोपो भवति।

१३. अविद्यमानः पुत्रो यस्य सः इति विग्रहः।

१४. सप्तम्यन्तसहितं उपमानसहितस्य च पूर्वपदस्य पदान्तरेण समासः पूर्वपदस्य उत्तरपदलोपश्च भवति।

१५. कण्ठेकालः।



१६. उष्ट्रमुखः।

## उत्तराणि-३

१७. पुंवद्भावः।

१८. तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे भवति, न तु पुरण्यां प्रियादौ च परतः।

१९. अनूङ् इति पदस्य सत्त्वात् वामोरूशब्दस्य ऊङ्-प्रत्ययान्तत्वात् नास्ति पुंवद्भावः।

२०. सूत्रे अपूरणीप्रियादिषु इति पदस्य सत्त्वात् कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमाः रात्रयः इत्यत्र पञ्चमीति पूरणार्थप्रत्ययान्ते स्त्रीलिङ्गे उत्तरपदे परे, कल्याणी प्रिया यस्य स कल्याणीप्रियः इत्यत्र स्त्रीलिङ्गे प्रियाशव्दे उत्तरपदे परे न पुंवद्भावः।

२१. चित्रगुः।

२२. समासान्तः अप्-प्रत्ययः।

२३. पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेः समासान्तः तद्धितसंज्ञकः अप्प्रत्ययः भवति।

२४. कल्याणीपञ्चमाः, स्त्रीप्रमाणः पुरुष।

## उत्तराणि-४

२५. संख्येयवाचकेन एकादिसंख्याशब्देन अव्ययादयः विकल्पेन समस्यन्ते, स च बहुव्रीहिसंज्ञको भवति।

२६. संख्येये यो बहुव्रीहिः तस्मात् समासान्तः तद्धितसंज्ञकः डच्प्रत्ययो भवति, किन्तु बहुगणशब्दान्ताद् बहुव्रीहेः न भवति।

२७. सूत्रे अबहुगणाद् इति पदस्य सत्त्वाद् बहूनां समीपे ये सन्ति, गणस्य समीपे ये सन्ति इति विग्रहे यथाक्रमं निष्पन्नाद् उपबहुशब्दाद् उपगणशब्दाच्च डच्प्रत्ययो न भवति।

२८. डिति परे विंशत्यन्तस्य भस्य तिशब्दस्य लोपः भवति।

२९. दशानां समीपे ये इति विग्रहे उपदशाः।

३०. संख्येये यो बहुव्रीहिः तस्मात् बहुव्रीहौ संख्येये डजबहुगणात् इति सूत्रेण भवति।

३१. ति विंशतेर्डिति इति सूत्रेण।

## उत्तराणि-५

३२. दिशः नामानि अन्तराले वाच्ये विकल्पेन समस्यन्ते, स बहुव्रीहिसंज्ञको भवति।

३३. दक्षिणपूर्वा।

३४. सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे कर्मव्यतिहारे द्योत्ये विकल्पेन समस्येते, स बहुव्रीहिसंज्ञको भवति।



३५. कर्मव्यतिहारे यो बहुव्रीहिः तस्मात् समासान्तः तद्धितसंज्ञक इच्प्रत्ययो भवति।

३६. केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति विग्रहः।

### उत्तराणि-६

३७. तुल्ययोगे वर्तमानं सह इत्यव्ययं तृतीयान्तेन सह विकल्पेन समस्येते, स च समासो बहुव्रीहिसंज्ञको भवति।

३८. उपसर्जनसर्वावयवकस्य बहुव्रीहेः अवयवस्य सहस्य विकल्पेन सादेशो भवति।

३९. युगपत्कालिकक्रियायोगे इत्यर्थः।

४०. सहपुत्रः, सपुत्रः इत्यत्र उपसर्जनसर्वावयवकस्य बहुव्रीहेः अवयवस्य सहस्य विकल्पेन सादेशो वोपसर्जनस्य इति सूत्रेण भवति।

## ॥ इति पञ्चमः पाठः॥



६

# बहुव्रीहिसमासः - समासान्तप्रत्ययः निपातव्यवस्थादिकम्

## प्रस्तावना

अस्मिन् पाठे बहुव्रीहिसमासस्य अवशिष्टांशस्य आलोचनं भवति। बहुव्रीहौ समासान्तप्रत्ययविधायकानि समासान्तादेशविधायकानि च यानि सूत्राणि सन्ति तान्यत्र आलोच्यन्ते। ततः क्वचिद् बहुव्रीहिसमासे निपातनं भवति तद् वर्ण्यते। बहुव्रीहौ पूर्वनिपातविषये अत्रालोचनं भवति। ततः समासविधायकसूत्रवर्णनावसरे तदुदाहरणेषु विसर्गस्यादेशविधानाय यानि सूत्राणि अपेक्षितानि तान्यपि अत्र संगृहीतानि।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्/भवती -

- बहुव्रीहौ समासान्तप्रत्ययविधायकानि सूत्राणि जानीयात्।
- बहुव्रीहौ समासान्तादेशविधायकानि सूत्राणि जानीयात्।
- बहुव्रीहौ निपातनं जानीयात्।
- बहुव्रीहौ पूर्वनिपातविधायकानि सूत्राणि जानीयात्।
- बहुब्रीह्युपयोगितया विसर्गस्य आदेशविधायकानि सूत्राणि जानीयात्।

## [६.१] बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्॥ (५.४.११३)

**सूत्रार्थः** - स्वाङ्गवाचिनः सक्थ्यक्ष्यन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः षच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः षच्प्रत्ययो विधीयते। पदचतुष्टयात्मके सूत्रेऽस्मिन् बहुव्रीहौ इत्यत्र पञ्चम्यर्थे सप्तमी। सक्थ्यक्ष्णोः इति पञ्चम्यर्थे षष्ठी, "व्यत्ययो बहुलम्" इति छन्दसि वचनात्। स्वाङ्गात् इति पञ्चम्येकवचनान्तं षच् इति प्रथमैकवचनान्तं पदम्। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। सक्थ्यक्ष्णोः इत्यत्र तदन्तविधौ सक्थ्यक्ष्यन्ताद् इति लभ्यते। स्वाङ्गात् सक्थ्यक्ष्णोः बहुव्रीहौ इत्यस्यार्थो भवति स्वाङ्गवाचकात् सक्थ्यक्ष्यन्ताद् बहुव्रीहेः



इति। एवं सूत्रार्थः समायाति - "स्वाङ्गवाचिनः सक्थ्यक्ष्यन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः षच्प्रत्ययो भवति" इति।

**उदाहरणम्** - स्वाङ्गवाचिसक्थ्यन्तबहुव्रीहेरुदाहरणं तावद् दीर्घसक्थः इति। दीर्घे सक्थिनी यस्य स इति लौकिकविग्रहे दीर्घ औ सक्थि औ इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन विशेषणस्य दीर्घ औ इत्यस्य पूर्वनिपाते दीर्घ औ सक्थि औ इति जाते, समासस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवयस्य सुपः औप्रत्ययद्वयस्य लुकि दीर्घसक्थि इति भवति। तदा स्वाङ्गवाचिनः दीर्घसक्थि इत्यस्मात् बहुव्रीहेः प्रकृतसूत्रेण समासान्तः षच्प्रत्ययो भवति। षचयोः यथाक्रमं "षः प्रत्ययस्य" इत्यनेन "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन तयोर्लोपे दीर्घसक्थि अ इति भवति। ततः "यचि भम्" इत्यनेन पूर्वस्य दीर्घसक्थि इति शब्दस्य भसंज्ञायां "यस्येति" च इत्यनेन भसंज्ञकस्य दीर्घसक्थि इत्यस्य अन्त्यस्य इकारस्य लोपे सर्वसंयोगे दीर्घसक्थशब्दो निष्पद्यते। ततः सौ दीर्घसक्थः इति रूपम्।

स्वाङ्गवाचिनः अक्ष्यन्तबहुव्रीहेरुदाहरणं तावद् जलजाक्षी इति। जलजे इव अक्षिणी यस्याः इति विग्रहे प्रक्रियाकार्ये जलजाक्षि इति निष्पद्यते। ततः प्रोक्तेन सूत्रेण षचि अनुबन्धलोपे जलजाक्षि अ इति भवति। ततः भसंज्ञकस्य जलजाक्षिशब्दस्य अन्त्यस्य इकारस्य लोपे जलजाक्षशब्दो निष्पद्यते। तस्य षिदन्तत्वात् "षिद्गौरादिभ्यश्च" इत्यनेन ङीषि जलजाक्षी इति रूपम्।

## [६.२] द्वित्रिभ्यां ष मूर्ध्नः॥ (५.४.११५)

**सूत्रार्थः** - बहुव्रीहिसमासे द्वित्रिभ्यां परस्य मूर्ध्नः समासान्तः तद्धितसंज्ञकः षप्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः षप्रत्ययो विधीयते। पदत्रयात्मके सूत्रेऽस्मिन् द्वित्रिभ्याम् इति पञ्चमीद्विवचनान्तम्, ष इति लुप्तप्रथमैकवचनान्तं मूर्ध्नः इति च पञ्चम्येकवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। द्विश्च त्रिश्च द्वित्री, ताभ्यां द्वित्रिभ्याम् इति इतरेतरद्वन्द्वसमासः। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे द्वित्रिभ्यां परस्य मूर्ध्नः समासान्तः तद्धितसंज्ञकः षप्रत्ययो भवति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् द्विमूर्धः इति। द्वौ मूर्धानौ यस्य स इति लौकिकविग्रहे द्वि औ मूर्धन् औ इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन विशेषणस्य द्वि औ इत्यस्य पूर्वनिपाते द्वि औ मूर्धन् औ इति जाते, समासस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवयस्य सुपः औप्रत्ययद्वयस्य लुकि द्विमूर्धन् इति भवति। द्विमूर्धन् इति बहुव्रीहिसंज्ञकात् प्रकृतसूत्रेण समासान्ते षप्रत्यये, षकारस्य "षः प्रत्ययस्य" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनने लोपे द्विमूर्धन् अ इति भवति। ततः पूर्वस्य द्विमूर्धन् इति शब्दस्य "यचि भम्" इत्यनेन भसंज्ञायां

"नस्तद्धिते" इत्यनेन भस्य द्विमूर्धन् इत्यस्य टेरनः लोपे सर्वसंयोगे द्विमूर्धशब्दो निष्पद्यते। ततः सौ द्विमूर्धः इति रूपम्। एवमेव त्रिमूर्धः इत्यस्य सूत्रस्योदाहरणम्।



## पाठगतप्रश्नाः-१

१. "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति सूत्रस्यार्थः कः।

२. दीर्घसक्थः इत्यत्र कः विग्रहः।

३. "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति सूत्रस्य स्वाङ्गवाचिनः अक्ष्यन्तस्य किमुदाहरणम्।

४. "द्वित्रिभ्यां ष मूर्ध्नः" इति सूत्रस्यार्थः कः।

५. "द्वित्रिभ्यां ष मूर्ध्नः" इति सूत्रस्य किमुदाहरणम्।

## [६.३] अन्तर्बहिर्भ्यां च लोम्नः॥ (५.४.११७)

**सूत्रार्थः** - बहुव्रीहिसमासे अन्तर्बहिर्भ्यां परस्य लोम्नः समासान्तः तद्धितसंज्ञकः अप्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अप्प्रत्ययो विधीयते। पदत्रयात्मके सूत्रेऽस्मिन् अन्तर्बहिर्भ्याम् इति पञ्चमीद्विवचनान्तम्, च इत्यव्ययपदम्। चकारेण "अप्पूरणीप्रमाण्योः" इत्यस्मात् सूत्राद् अप् इत्यनुवर्तते। लोम्नः इति पञ्चम्येकवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे अन्तर्बहिर्भ्यां परस्य लोम्नः समासान्तः तद्धितसंज्ञकः अप्प्रत्ययो भवति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् अन्तर्लोमः इति। अन्तः लोमानि यस्य स इति लौकिकविग्रहे अन्तर् लोमन् औ इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः प्रक्रियाकार्ये समासस्य प्रातिपदिकत्वात् सुब्लुकि अन्तर्लोमन् इति भवति। अन्तर्लोमन् इति बहुव्रीहिसंज्ञकात् प्रकृतसूत्रेण समासान्ते अप्प्रत्यये, पकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनने लोपे अन्तर्लोमन् अ इति भवति। तदा पूर्वस्य अन्तर्लोमन् इति शब्दस्य "यचि भम्" इत्यनेन भसंज्ञायां "नस्तद्धिते" इत्यनेन भस्य अन्तर्लोमन् इत्यस्य टेरनः लोपे सर्वसंयोगे अन्तर्लोमशब्दो निष्पद्यते। ततः सौ अन्तर्लोमः इति रूपम्। एवमेव बहिर्लोमः इत्यस्य सूत्रस्योदाहरणम्।

## [६.४] पादस्य लोपोऽहस्त्यादिभ्यः॥ (५.४.१३८)

**सूत्रार्थः** - बहुव्रीहिसमासे हस्त्यादिवर्जिताद् उपमानात्परस्य पादशब्दस्य समासान्तः लोपः भवति।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तलोपो विधीयते। पदत्रयात्मके सूत्रेऽस्मिन् पादस्य लोपः अहस्त्यादिभ्यः इति पदच्छेदः। पादस्य इति षष्ठ्येकवचनान्तम्, लोपः इति प्रथमैकवचनान्तम् अहस्त्यादिभ्यः पञ्चमीबहुवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "उपमानाच्च" इति सूत्रात् उपमानात् इत्यनुवर्तते। "समासान्ताः" इत्यधिकृतम्। न हस्त्यादयः अहस्त्यादयः, तेभ्यः अहस्त्यादिभ्यः इति नञ्तत्पुरुषसमासः। अहस्त्यादिभ्यः उपमानात् पादस्य समासान्तः लोपः बहुव्रीहौ इत्यन्वयः। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे हस्त्यादिवर्जिताद् उपमानात् परस्य पादशब्दस्य समासान्तः लोपो भवति" इति।

"अलोऽन्त्यस्य" इति परिभाषया अयं समासान्तः लोपः पादशब्दस्य अन्त्यस्य अकारस्य भवति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् व्याघ्रपात् इति। व्याघ्रपादौ इव पादौ यस्य स इति लौकिकविग्रहे व्याघ्रपाद औ पाद औ इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इत्यनेन बहुव्रीहिसमासो भवति। ततः "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुब्लुकि व्याघ्रपाद पाद इति स्थिते "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इति वार्तिकेन बहुव्रीहिसमासे पूर्वपदस्य व्याघ्रपादशब्दस्य उत्तरपदस्य पादशब्दस्य लोपे व्याघ्रपादशब्दो निष्पद्यते। ततः बहुव्रीहिसमासे अहस्त्यादिवाचकस्य उपमानस्य व्याघ्रशब्दस्य विद्यमानत्वात् ततः परस्य पादशब्दस्य "अलोऽन्त्यस्य" इति परिभाषया परिष्कृतेन प्रकृतसूत्रेण अन्त्यस्य अकारस्य लोपे व्याघ्रपाद् इति निष्पद्यते। ततः पुंसि सौ प्रक्रियाकार्ये "वाऽवसाने" इत्यनेन वैकल्पिके चर्त्वे व्याघ्रपात् इति भवति। चर्त्वाभावपक्षे व्याघ्रपाद् इति रूपम्।



## पाठगतप्रश्नाः-२

६. "अन्तर्बहिर्भ्यां च लोम्नः" इति सूत्रस्यार्थः कः।

७. "अन्तर्बहिर्भ्यां च लोम्नः" इति सूत्रस्य किमुदाहरणम्।

८. "पादस्य लोपोऽहस्त्यादिभ्यः" इति सूत्रेण किं विधीयते।

९. "पादस्य लोपोऽहस्त्यादिभ्यः" इति सूत्रस्यार्थः कः।

१०. "पादस्य लोपोऽहस्त्यादिभ्यः" इति सूत्रस्य किमुदाहरणम्।

## [६.५] संख्यासुपूर्वस्य॥ (५.४.१४०)

**सूत्रार्थः** - बहुव्रीहिसमासे संख्यावाचकपूर्वस्य सु-इत्यव्ययपूर्वस्य च पादशब्दस्य समासान्तो लोपो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः लोपो विधीयते। एकपदात्मके सूत्रेऽस्मिन् संख्यासुपूर्वस्येति षष्ठ्येकवचनान्तं पदम्। "पादस्य लोपोऽहस्त्यादिभ्यः" इत्यस्मात् सूत्रात्



पादस्य इत्यनुवर्तते। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "समासान्ताः" इत्यधिकृतम्। संख्या च सुश्च संख्यासू इतीतरेतरद्वन्द्वः। संख्यासू पूर्वौ यस्य स संख्यासुपूर्वः, तस्य संख्यासुपूर्वस्य इति बहुव्रीहिसमासः। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे संख्यावाचकपूर्वस्य सु इत्यव्ययपूर्वस्य पादशब्दस्य समासान्तः लोपो भवति" इति।

"अलोऽन्त्यस्य" इति परिभाषया अयं समासान्तः लोपः पादशब्दस्य अन्त्यस्य अकारस्य भवति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् द्विपात् इति। द्वौ पादौ यस्य स लौकिकविग्रहे द्वि औ पाद औ इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेन बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन सूत्रेण विशेषणस्य द्वि औ इत्यस्य पूर्वनिपाते, समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवस्य सुपः औद्वयस्य लुकि द्विपादशब्दो निष्पद्यते। ततः बहुव्रीहिसमासस्य संख्यापूर्वकत्वात् ततः परस्य पादशब्दस्य अन्त्यस्य अकारस्य "अलोऽन्त्यस्य" इति परिभाषया परिष्कृतेन प्रकृतसूत्रेण लोपे द्विपाद् इति निष्पद्यते। ततः पुंसि सौ प्रक्रियाकार्ये "वाऽवसाने" इत्यनेन वैकल्पिके चर्त्वे तकारे द्विपात् इति रूपम्। चर्त्वाभावपक्षे च द्विपाद् इति रूपम्। एवमेव सुपात् सुपाद् इति रूपद्वयं सिध्यति।



## पाठगतप्रश्नाः-३

११. "संख्यासुपूर्वस्य" इति सूत्रेण किं विधीयते।

१२. "संख्यासुपूर्वस्य" इति सूत्रस्यार्थः कः।

१३. "संख्यासुपूर्वस्य" इति सूत्रस्य किमुदाहरणम्।

१४. "संख्यासुपूर्वस्य" इति सूत्रेण विहितः लोपः अन्त्यस्य कथं भवति।

---

## [६.६] उद्विभ्यां काकुदस्य॥ (५.४.१४८)

**सूत्रार्थः** - बहुव्रीहिसमासे उद्विभ्यां परस्य काकुदशब्दस्य समासान्तो लोपो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः लोपो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् उद्विभ्याम् इति पञ्चमीद्विवचनान्तं काकुदस्येति च षष्ठ्येकवचनान्तं पदम्। "ककुदस्यावस्थायां लोपः" इत्यस्मात्सूत्रात् लोपः इत्यनुवर्तते। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "समासान्ताः" इत्यधिकृतम्। उच्च विश्व उद्वी, ताभ्याम् उद्विभ्याम् इतीतरेतरद्वन्द्वः। उद् वि इति निपातद्वयात् इति तात्पर्यम्। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे उद्विभ्यां परस्य काकुदशब्दस्य समासान्तः लोपो भवति" इति।



"अलोऽन्त्यस्य" इति परिभाषया अयं समासान्तः लोपः काकुदशब्दस्य अन्त्यस्य अकारस्य भवति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् उत्काकुत् इति। उद्गतं काकुदं यस्य स लौकिकविग्रहे उद्गत सु काकुद सु इत्यलौकिकविग्रहे "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति वार्तिकेन बहुव्रीहिसमासे, विशेषणस्य पूर्वनिपाते सुब्लुकि वार्तिकेन च पूर्वपदस्य उद्गत इत्यस्य उत्तरपदस्य गतेत्यस्य लोपे उद् काकुद इति भवति। ततः "खरि च" इत्यनेन दकारस्य चर्त्वे तकारे उत्काकुदशब्दो निष्पद्यते। ततः बहुव्रीहिसमासे उत् इत्यस्य परं काकुदशब्दस्य सत्त्वात् काकुदशब्दस्य अन्त्यस्य अकारस्य "अलोऽन्त्यस्य" इति परिभाषया परिष्कृतेन प्रोक्तेन सूत्रेण लोपे उत्काकुद् इति निष्पद्यते। ततः पुंसि सौ प्रक्रियाकार्ये "वाऽवसाने" इत्यनेन वैकल्पिके चर्त्वे तकारे उत्काकुत् इति रूपम्। चर्त्वस्य वैकल्पिकत्वात् तदभावपक्षे उत्काकुद् इति। एवमेव विकाकुत् विकाकुद् इति रूपद्वयं सिध्यति।



## पाठगतप्रश्नाः-४

१५. "उद्विभ्यां काकुदस्य" इति सूत्रेण किं विधीयते।

१६. "उद्विभ्यां काकुदस्य" इति सूत्रस्यार्थः कः।

१७. "उद्विभ्यां काकुदस्य" इति सूत्रस्य किमुदाहरणम्।

१८. "उद्विभ्यां काकुदस्य" इति सूत्रेण विहितः लोपः अन्त्यस्य कथं भवति।

---

## [६.७] पूर्णाद्विभाषा॥ (५.४.१४९)

**सूत्रार्थः** - बहुव्रीहिसमासे पूर्णशब्दात् परस्य काकुदशब्दस्य विकल्पेन समासान्तो लोपो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः लोपो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् पूर्णाद् इति पञ्चम्येकवचनान्तं पदं विभाषा इति च विकल्पबोधकम् अव्ययपदम्। "ककुदस्यावस्थायां लोपः" इत्यस्मात्सूत्रात् लोपः इत्यनुवर्तते। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "समासान्ताः" इत्यधिकृतम्। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे पूर्णशब्दात् परस्य काकुदशब्दस्य विकल्पेन समासान्तः लोपो भवति" इति।

"अलोऽन्त्यस्य" इति परिभाषया अयं समासान्तः लोपः काकुदशब्दस्य अन्त्यस्य अकारस्य भवति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् पूर्णकाकुत् इति। पूर्णं काकुदं यस्य स लौकिकविग्रहे पूर्ण सु काकुद सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। तत्र विशेषणस्य पूर्ण सु इत्यस्य पूर्वनिपाते सुब्लुकि पूर्णकाकुदशब्दो निष्पद्यते। ततः बहुव्रीहिसमासे पूर्णशब्दात्परस्य काकुदशब्दस्य सत्त्वात् "अलोऽन्त्यस्य" इति परिभाषया परिष्कृतेन प्रोक्तेन सूत्रेण



काकुदशब्दस्य विकल्पेन अन्त्यस्याकारस्य लोपे पूर्णकाकुद् इति निष्पद्यते। ततः पुंसि सौ प्रक्रियाकार्ये "वाऽवसाने" इत्यनेन वैकल्पिके चर्त्वे तकारे पूर्णकाकुत् इति रूपम्। चर्त्वस्य वैकल्पिकत्वात् तदभावपक्षे पूर्णकाकुद् इति रूपम्। समासान्तलोपस्य वैकल्पिकत्वात् तदभावपक्षे सौ प्रक्रियाकार्ये पूर्णकाकुदः इति रूपम्।



## पाठगतप्रश्नाः-५

१९. "पूर्णाद्विभाषा" इति सूत्रेण किं विधीयते।

२०. "पूर्णाद्विभाषा" इति सूत्रस्यार्थः कः।

२१. पूर्णं काकुदं यस्येति विग्रहे कति रूपाणि भवन्ति।

२२. "पूर्णाद्विभाषा" इति सूत्रेण विहितः लोपः अन्त्यस्य कथं भवति।

---

## [६.८] सुहृद्-दुर्हृदौ मित्रामित्रयोः॥ (५.४.१५०)

**सूत्रार्थः** - बहुव्रीहिसमासे सुदुर्भ्यां परस्य हृदयशब्दस्य समासान्तो हृद्भावो निपात्यते क्रमशः मित्रामित्रयोः अर्थयोः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तहृद्भावनिपातनं विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् सहृद्-दुर्हृदौ इति प्रथमाद्विवचनान्तं मित्रामित्रयोः इति च सप्तमीद्विवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। "समासान्ताः" इत्यधिकृतम्। सहृत् च दुर्हृत् च सुहृद्-दुर्हृदौ इतीतरेतरद्वन्द्वसमासः। मित्रं च अमित्रश्च मित्रामित्रौ ,तयोः मित्रामित्रयोः इतीतरेतरद्वन्द्वसमासः। वस्तुतस्तु निपातने मित्रार्थे सुहृच्छब्दः अमित्रार्थे च दुर्हृच्छब्दः सिद्धः। तत्र हृदयस्य हृद्भाव एव निपात्यते इति लभ्यते। एवं सूत्रार्थः समायाति - "बहुव्रीहिसमासे सुदुर्भ्यां परस्य हृदयशब्दस्य समासान्तः हृद्भावो निपात्यते क्रमशः मित्रामित्रयोः अर्थयोः" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं सुहृत् इति। शोभनं हृदयं यस्य स लौकिकविग्रहे सु हृदय सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासे सुब्लुकि च सुहृदयशब्दो निष्पद्यते। ततः बहुव्रीहिसमासे सु इति निपातात्परस्य हृदयशब्दस्य सत्त्वात् हृदयशब्दस्य स्थाने मित्रार्थे प्रोक्तेन सूत्रेण समासान्ते हृद् इत्यादेशे सुहृद् इति निष्पद्यते। ततः पुंसि सौ प्रक्रियाकार्ये "वाऽवसाने" इत्यनेन वैकल्पिके चर्त्वे तकारे सुहृत् इति रूपम्। चर्त्वस्य वैकल्पिकत्वात् तदभावपक्षे सुहृद् इति रूपम्। एवमेव अमित्रार्थे तु दुर्हृत् दुर्हृद् इति रूपद्वयम्।

## [६.९] उरःप्रभृतिभ्यः कप्॥ (५.४.१५१)

**सूत्रार्थः** - उरःप्रभृत्यन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो भवति।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः कप्प्रत्ययो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् उरःप्रभृतिभ्यः इति पञ्चमीबहुवचनान्तं कप् इति च प्रथमैकवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। तच्च विभक्तिविपरिणामेन बहुव्रीहेः इति भवति। उरस् इति शब्दः प्रभृतिः आदिः येषां ते उरःप्रभृतयः तेभ्य उरःप्रभृतिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। उरःप्रभृतिभ्यः इति पदं बहुव्रीहेः इत्यस्य विशेषणम्। तेन तदन्तविधौ उरःप्रभृत्यन्ताद् बहुव्रीहेः इति लभ्यते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। एवं सूत्रार्थः समायाति - "उरःप्रभृत्यन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो भवति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् व्यूढोरस्कः इति। व्यूढम् उरः यस्य स इति लौकिकविग्रहे व्यूढ सु उरस् सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन सूत्रेण विशेषणस्य व्यूढ सु इत्यस्य पूर्वनिपाते व्यूढ सु उरस् सु इति जाते, समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुद्वयस्य लुकि गुणे च व्यूढोरस् इति भवति। व्यूढोरस् इति बहुव्रीहिसंज्ञकस्य उरःशब्दान्तत्वात् प्रकृतसूत्रेण समासान्ते कप्प्रत्यये, पकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनने लोपे व्यूढोरस् क इति स्थिते प्रक्रियाकार्ये सर्वसंयोगे व्यूढोरस्कशब्दो निष्पद्यते। ततः पुंसि सौ व्यूढोरस्कः इति रूपम्। एवमेव प्रियं सर्पिः यस्य स इति विग्रहे प्रियसर्पिष्कः इत्यादिकमेतस्य सूत्रस्योदाहरणम्।

समासान्तस्य कप्प्रत्ययस्यालोचनप्रसङ्गे क्वचिद् व्यूढोरस्कः इत्यादौ विसर्गस्य सकारादेशः क्वचित् प्रियसर्पिष्कः इत्यादौ षकारादेशश्च भवति। तत्र सकारादेशविधायकं सूत्रम् अवतरति -

## [६.१०] सोऽपदादौ॥ (८.३.३८)

**सूत्रार्थः** - पाश-कल्प-क-काम्येषु प्रत्ययेषु परेषु विसर्गस्य सकारादेशो भवति संहितायां विवक्षितायाम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण विसर्गस्य सकारादेशो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् सः अपदादौ इति पदच्छेदः। सः इति प्रथमैकवचनान्तम् अपदादौ इति सप्तम्येकवचनान्तं पदम्। सः इत्यत्र अकार उच्चारणार्थकः। "विसर्जनीयस्य सः" इत्यस्मात् सूत्राद् विसर्जनीयस्य इति पदमनुवर्तते। "कुप्वो ≍क ≍पौ च" इत्यस्मात् सूत्रात् कुप्वोः इति पदमनुवर्तते। "तयोर्य्वावचि संहितायाम्" इत्यस्मात् सूत्रात् संहितायाम् इति पदम् अनुवर्तते। न पदादिः अपदादिः, तस्मिन् अपदादौ इति नञ्समासः। अपदादौ इत्यस्य कुप्वोः इत्यनेनान्वयाद् अपदाद्योः कुप्वोः इत्यर्थो भवति। एवम् अपदादौ कवर्गे पवर्गे च परे सति विसर्गस्य स्थाने स् इत्यादेशो भवति संहितायां विवक्षितायाम् इति सूत्रार्थः समायाति। अपदादिकवर्गपवर्गत्वं पाश-कल्प-क-काम्यानां चतुर्णां प्रत्ययानामेव सम्भवति। एवं "पाश-कल्प-क-काम्येषु प्रत्ययेषु परेषु विसर्गस्य सकारादेशो भवति संहितायां विवक्षितायाम्" इति सूत्रार्थः पर्यवस्यति।



**उदाहरणम्** - अस्य सूत्रस्य पाशपि परे उदाहरणं पयस्पाशम् इति। कल्पपि परे उदाहरणं पयस्कल्पम् इति। काम्यचि परे उदाहरणं पयस्काम्यम्। प्रकृते च व्यूढम् उरः यस्य स इति लौकिकविग्रहे व्यूढ सु उरस् सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन सूत्रेण विशेषणस्य पूर्वनिपाते प्रातिपदिकत्वात् सुब्लुकि च गुणे व्यूढोरस् इति जाते, ततः "उरःप्रभृतिभ्यः कप्" इत्यनेन समासान्ते कप्प्रत्यये व्यूढोरस् क इति भवति। तदा "खरवसानयोर्विसर्जनीयः" इत्यनेन सस्य खरि परे विसर्गादिशे व्यूढोरः क इति जाते प्रकृतसूत्रेण अपदादिकप्रत्ययपरकत्वात् विसर्गस्य सादेशे पुंसि सौ व्यूढोरस्कः इति रूपम्।



## पाठगतप्रश्नाः-६

२३. "सुहृद्-दुर्हृदौ मित्रामित्रयोः" इति सूत्रेण किं विधीयते।

२४. "सुहृद्-दुर्हृदौ मित्रामित्रयोः" इति सूत्रस्यार्थः कः।

२५. "सुहृद्-दुर्हृदौ मित्रामित्रयोः" इति सूत्रस्य किमुदाहरणम्।

२६. "उरःप्रभृतिभ्यः कप्" इति सूत्रस्यार्थः कः।

२७. "उरःप्रभृतिभ्यः कप्" इति सूत्रस्य किमुदाहरणम्।

२८. "सोऽपदादौ" इति सूत्रस्यार्थः कः।

२९. "सोऽपदादौ" इति सूत्रस्य किमुदाहरणम्।

---

## [६.११] इणः षः॥ (८.३.३९)

**सूत्रार्थः** - पाश-कल्प-क-काम्येषु प्रत्ययेषु परेषु इण उत्तरस्य विसर्गस्य षकारादेशो भवति संहितायां विवक्षितायाम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण विसर्गस्य षकारादेशो विधीयते। "सोऽपदादौ" इत्येनन प्राप्तस्य सत्वस्य बाधकत्वाद् इदम् अपवादसूत्रम्। पदद्वयात्मके सूत्रेऽस्मिन् इणः इति पञ्चम्येकवचनान्तं षः इति प्रथमैकवचनान्तं पदम्। षः इत्यत्र अकार उच्चारणार्थकः। "सोऽपदादौ" इति सूत्राद् अपदादौ इति पदमनुवर्तते। "विसर्जनीयस्य सः" इत्यस्मात् सूत्राद् विसर्जनीयस्य इति पदमनुवर्तते। "कुप्वो ≍क ≍पौ च" इत्यस्मात् सूत्रात् कुप्वोः इति पदमनुवर्तते। "तयोर्य्वावचि संहितायाम्" इत्यस्मात् सूत्रात् संहितायाम् इति पदम् अनुवर्तते। न पदादिः अपदादिः, तस्मिन् अपदादौ इति नञ्समासः। अपदादौ इत्यस्य कुप्वोः इत्यनेनान्वयाद् अपदाद्योः कुप्वोः इत्यर्थो भवति। एवम् अपदादौ कवर्गे पवर्गे च परे सति इणः परस्य विसर्गस्य स्थाने स् इत्यादेशो भवति संहितायां विवक्षितायाम् इति सूत्रार्थः समायाति। अपदादिकवर्गपवर्गत्वं पाश-कल्प-क-काम्यानां चतुर्णां



प्रत्ययानामेव सम्भवति। एवं "पाश-कल्प-क-काम्येषु प्रत्ययेषु परेषु इणः परस्य विसर्गस्य षकारादेशो भवति संहितायां विवक्षितायाम्" इति सूत्रार्थः पर्यवस्यति।

**उदाहरणम् -** अस्य सूत्रस्य पाशपि परे उदाहरणं सर्पिष्पाशम् इति। कल्पपि परे उदाहरणं यजुष्कल्पम् इति। काम्यचि परे उदाहरणं सर्पिष्काम्यम्। प्रकृते च प्रियं सर्पिः यस्य स इति लौकिकविग्रहे प्रिय सु सर्पिस् सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासे, विशेषणस्य पूर्वनिपाते प्रातिपदिकत्वात् सुब्लुकि च गुणे प्रियसर्पिस् जाते, ततः "उरःप्रभृतिभ्यः कप्" इति प्रकृतसूत्रेण समासान्ते कप्प्रत्यये प्रियसर्पिस् क इति भवति। तदा "खरवसानयोर्विसर्जनीयः" इत्यनेन सस्य विसर्गादेशे प्रियसर्पिः क इति जाते प्रकृतसूत्रेण अपदादिकप्रत्ययपरकत्वात् विसर्गस्य स्थाने प्राप्तं सादेशं प्रबाध्य इणः परस्य षादेशे पुंसि सौ प्रियसर्पिष्कः इति रूपम्।

प्रकरणोपयोगितया विसर्गस्य स्थाने षत्व-सत्वविधायकं सूत्रं प्रवृत्तम् -

## [६.१२] कस्कादिषु च॥ (८.३.४८)

**सूत्रार्थः -** कस्कादिषु इण उत्तरस्य विसर्गस्य षकारादेशो भवति, अन्यत्र तु सकारादेशो भवति।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। अनेन सूत्रेण विसर्गस्य षकारादेशः सकारादेशश्च विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् कस्कादिषु इति सप्तमीबहुवचनान्तं च इत्यव्ययं पदम्। इणः षः इति सूत्रं सम्पूर्णमनुवर्तते। "सोऽपदादौ" इति सूत्रात् सः इति पदमनुवर्तते। "विसर्जनीयस्य सः" इत्यस्मात् सूत्राद् विसर्जनीयस्य इति पदमनुवर्तते। "कुप्वो ᳲक ᳲपौ च" इत्यस्मात् सूत्रात् कुप्वोः इति पदमनुवर्तते। "तयोर्य्वावचि संहितायाम्" इत्यस्मात् सूत्रात् संहितायाम् इति पदम् अनुवर्तते। कस्कशब्द आदिर्येषां ते कस्कादयः, तेषु कस्कादिषु इति तद्गुणसंविज्ञानबहुव्रीहिः। एवं कस्कादिषु शब्देषु इण्प्रत्याहारात् परं विसर्जनीयस्य स्थाने सकारादेशो भवति, कस्कादिषु अन्यत्र विसर्जनीयस्य स्थाने सकारादेशो भवति इति सूत्रार्थः समायाति।

**उदाहरणम् -** अस्य इण्परकत्वे उदाहरणं सर्पिष्कुण्डिका इति। सर्पिः कुण्डिका इति स्थिते कस्कादिषु पठितत्वात् सर्पिः इत्यस्य इणः इकारात्परस्य विसर्गस्य प्रकृतसूत्रेण षकारेदेशे सर्पिष्कुण्डिका इति रूपं भवति। इण्परकत्वाभावे कस्कः इत्युदाहरणम्। "नित्यवीप्सयोः" इत्यनेन सूत्रेण वीप्सार्थे कः इति पदस्य द्वित्वे कः क इति स्थिते विसर्गस्य इण्परकत्वाभावात् प्रकृतसूत्रेण सकारादेशे कस्कः इति रूपं भवति।



### पाठगतप्रश्नाः-७

३०. "इणः षः" इति सूत्रस्यार्थः कः।

३१. "इणः षः" इति सूत्रस्य किमुदाहरणम्।

३२. प्रियसर्पिष्कः इत्यत्र षत्वादेशः केन सूत्रेण।



३३. "कस्कादिषु च" इति सूत्रस्यार्थः कः।

३४. "कस्कादिषु च" इति सूत्रस्य किमुदाहरणम्।

३५. सर्पिष्कुण्डिका इत्यत्र षत्वादेशः केन सूत्रेण।

३६. कस्कः इत्यत्र सत्वादेशः केन सूत्रेण।

## [६.१३] इनः स्त्रियाम्॥ (५.४.१५२)

**सूत्रार्थः** - इन्नन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो भवति स्त्रीत्वे विवक्षिते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः कप्प्रत्ययो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् इनः इति पञ्चम्येकवचनान्तं स्त्रियाम् इति च सप्तम्येकवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। तच्च विभक्तिविपरिणामेन बहुव्रीहेः इति भवति। "उरःप्रभृतिभ्यः कप्" इत्यस्मात् कप् इत्यनुवर्तते। इनः इति पदं बहुव्रीहेः इत्यस्य विशेषणम्। तेन तदन्तविधौ इन्नन्ताद् बहुव्रीहेः इति लभ्यते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। एवं सूत्रार्थः समायाति - "इन्नन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो भवति स्त्रीत्वे विवक्षिते" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं तावद् बहुदण्डिका नगरी इति। दण्डः अस्यास्तीति विग्रहे "अत इनिठनौ" इत्यनेन सूत्रेण इनिप्रत्यये दण्डी इति निष्पद्यते । बहवः दण्डिनो यस्यां सा इति लौकिकविग्रहे बहु जस् दण्डिन् जस् इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन सूत्रेण विशेषणस्य बहु जस् इत्यस्य पूर्वनिपाते बहु जस् दण्डिन् जस् इति जाते, समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः जस्द्वयस्य लुकि बहुदण्डिन् इति भवति। बहुदण्डिन् इति बहुव्रीहिसंज्ञकस्य इन्नन्तत्वात् स्त्रीत्वे विवक्षिते प्रकृतसूत्रेण समासान्ते कप्प्रत्यये, पकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनने लोपे बहुदण्डिन् क इति स्थिते, नकारस्य लोपे सर्वसंयोगे निष्पन्नात् बहुदण्डिकशब्दात् "अजाद्यतष्टाप्" इत्यनेन सूत्रेण टापि प्रक्रियाकार्ये सर्वसंयोगे बहुदण्डिकाशब्दो निष्पद्यते। ततः सौ प्रक्रियाकार्ये बहुदण्डिका इति रूपम्।

## [६.१४] शेषाद्विभाषा॥ (५.४.१५४)

**सूत्रार्थः** - अनुक्तसमासान्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो विकल्पेन भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः कप्प्रत्ययो विकल्पेन विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् शेषात् इति पञ्चम्येकवचनान्तं विभाषा इति च प्रथमैकवचनान्तं पदम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इत्यस्मात् बहुव्रीहौ इति पदमनुवर्तते। तच्च विभक्तिविपरिणामेन बहुव्रीहेः इति भवति। "उरःप्रभृतिभ्यः कप्" इत्यस्मात् सूत्रात् कप् इत्यनुवर्तते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। यस्मात् समासान्तप्रत्ययो न विहितः स एव शेषशब्देन गृह्यते।



शेषात् नाम अनुक्तसमासान्ताद् इति। एवं सूत्रार्थः समायाति - "अनुक्तसमासान्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो विकल्पेन भवति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं महायशस्कः इति। महद् यशो यस्य स इति लौकिकविग्रहे महत् सु यशस् सु इत्यलौकिकविग्रहे "अनेकमन्यपदार्थे" इति सूत्रेण बहुव्रीहिसमासो भवति। ततः "सप्तमीविशेषणे बहुव्रीहौ" इत्यनेन विशेषणस्य महत् सु इत्यस्य पूर्वनिपाते महत् सु यशस् सु इति स्थिते, "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुद्वयस्य लुकि च महत् यशस् इति जाते "आन्महतः समानाधिकरणजातीययोः" इत्यनेन सूत्रेण महतः तकारस्य आकारादेशे "अकः सवर्णे दीर्घः" इत्यनेन सवर्णदीर्घे महायशस् इति शब्दो निष्पद्यते। महायशस् इति बहुव्रीहिसंज्ञकस्य अनुक्तसमासान्तत्वात् प्रकृतसूत्रेण विकल्पेन समासान्ते कप्प्रत्यये, पकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनने लोपे महायशस् क इति स्थिते, "खरवसानयोर्विसर्जनीयः" इत्यनेन खरि परे सकारस्य विसर्गादेशे महायशः क इति जाते "सोऽपदादौ" इत्यनेन सूत्रेण विसर्गस्य सादेशे सर्वसंयोगे महायशस्कशब्दो निष्पद्यते। ततः पुंसि सौ महायशस्कः इति रूपम्। कपः वैकल्पिकत्वात् तदभावपक्षे सौ प्रक्रियाकार्ये महायशाः इति रूपम्।



## पाठगतप्रश्नाः-८

३७. "इनः स्त्रियाम्" इति सूत्रस्यार्थः कः।

३८. "इनः स्त्रियाम्" इति सूत्रस्य किमुदाहरणम्।

३९. "शेषाद्विभाषा" इति सूत्रस्यार्थः कः।

४०. "शेषाद्विभाषा" इति सूत्रस्य किमुदाहरणम्।

४१. महद् यशः यस्य स इति विग्रहे बहुव्रीहौ कति रूपाणि।

## [६.१५] निष्ठा॥ (२.२.३६)

**सूत्रार्थः** - निष्ठान्तं बहुव्रीहौ पूर्वं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण पूर्वनिपातो विधीयते। एकपदात्मके सूत्रेऽस्मिन् निष्ठा इति प्रथमैकवचनान्तं पदम्। "सप्तमीविशेषणे बहुव्रीहौ" इत्यस्मात् सूत्राद् बहुव्रीहौ इति पदम् अनुवर्तते। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति क्रियाविशेषणं द्वितीयैकवचनान्तम् अनुवर्तते। प्रयुज्यते इति क्रियापदम् अध्याहार्यम्। "क्तक्तवतू निष्ठा" इति सूत्रेण विहितयोः क्तक्तवतुप्रत्यययोः निष्ठासंज्ञा। "प्रत्ययग्रहणे तदन्तग्रहणम्" इति नियमेन निष्ठा इत्यस्य तदन्तविधौ निष्ठान्तम् इति लभ्यते। बहुव्रीहिसमासे निष्ठाप्रत्ययान्तं पदं पूर्वं प्रयुज्यते इति सूत्रस्यार्थः।



**उदाहरणम्** - निष्ठान्तस्य पूर्वनिपाते युक्तयोगः इत्यादिकम् उदाहरणम्। युक्तो योगो येन सः इति लौकिकविग्रहे युक्त सु योग सु इत्यलौकिकविग्रहे अन्यपदार्थे विद्यमानस्य युक्त सु इत्यस्य योग सु इत्यस्य च प्रथमान्तस्य "अनेकमन्यपदार्थे" इत्यनेन बहुव्रीहिसमासे, समासस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सूत्रेण सुब्द्वयस्य लुकि युक्त योग इति भवति। तदा प्रोक्तेन सूत्रेण निष्ठान्तस्य युक्त इत्यस्य पूर्वनिपाते निष्पन्नात् युक्तयोग इत्यस्माद् विशेष्यानुसारेण पुंसि सौ प्रक्रियाकार्ये युक्तयोगः इति रूपम्।



## पाठगतप्रश्नाः-९

४२. "निष्ठा" इति सूत्रेण किं विधीयते।

४३. "निष्ठा" इति सूत्रस्यार्थः कः।

४४. "निष्ठा" इति सूत्रस्य किमुदाहरणम्।

४५. निष्ठासंज्ञा केषां भवति।

---

## [६.१६] वाऽऽहिताग्न्यादिषु॥ (२.२.३७)

**सूत्रार्थः** - आहिताग्न्यादिषु बहुव्रीहिषु निष्ठान्तं पूर्वं विकल्पेन भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण विकल्पेन पूर्वनिपातो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् वा इति विकल्पबोधकमव्ययम्। आहिताग्न्यादिषु इति सप्तमीबहुवचनान्तं पदम्। "सप्तमीविशेषणे बहुव्रीहौ" इत्यस्मात् सूत्राद् बहुव्रीहौ इति पदम् अनुवर्तते। तस्य च आहिताग्न्यादिषु इत्यनेन सहान्वयाद् आहिताग्न्यादिषु बहुव्रीहिषु इति लभ्यते। आहिताग्निः आदिर्येषां ते आहिताग्न्यादयः, तेषु आहिताग्न्यादिषु इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति क्रियाविशेषणं द्वितीयैकवचनान्तम् अनुवर्तते। प्रयुज्यते इति क्रियापदम् अध्याहार्यम्। "निष्ठा" इत्यस्मात् सूत्रात् निष्ठा इत्यनुवर्तते। "प्रत्ययग्रहणे तदन्तग्रहणम्" इति नियमेन निष्ठा इत्यस्य तदन्तविधौ निष्ठान्तम् इति लभ्यते। "आहिताग्न्यादिषु बहुव्रीहिसमासेषु निष्ठाप्रत्ययान्तं पदं विकल्पेन पूर्वं प्रयुज्यते" इति सूत्रस्यार्थः।

**उदाहरणम्** - निष्ठान्तस्य विकल्पेन पूर्वनिपाते आहिताग्निः अग्न्याहितः इत्यादिकम् उदाहरणम्। आहिता अग्नयः येन सः इति लौकिकविग्रहे आहित जस् अग्नि जस् इत्यलौकिकविग्रहे अन्यपदार्थे विद्यमानस्य आहित जस् इत्यस्य अग्नि जस् इत्यस्य च प्रथमान्तस्य "अनेकमन्यपदार्थे" इत्यनेन बहुव्रीहौ सुब्लुकि आहित अग्नि इति भवति। तदा आहिताग्निगणे पाठात् प्रोक्तेन सूत्रेण बहुव्रीहौ विकल्पेन निष्ठान्तस्य आहित इत्यस्य पूर्वनिपाते सवर्णदीर्घे निष्पन्नात् आहिताग्नि इत्यस्माद् विशेष्यानुसारेण पुंसि सौ प्रक्रियाकार्ये आहिताग्निः इति रूपम्। पूर्वनिपातस्य वैकल्पिकत्वात् तदभावपक्षे अग्नि आहित इति जाते यणि निष्पन्नाद् अग्न्याहितशब्दात् पुंसि सौ प्रक्रियाकार्ये अग्न्याहितः इति रूपम्।





## पाठगतप्रश्नाः-१०

४६. "वाऽऽहिताग्न्यादिषु" इति सूत्रेण किं विधीयते।

४७. "वाऽऽहिताग्न्यादिषु" इति सूत्रस्यार्थः कः।

४८. "वाऽऽहिताग्न्यादिषु" इति सूत्रस्य किमुदाहरणम्।

४९. अग्न्याहितः आहिताग्निः इति रूपद्वयं कथं भवति।



## पाठसारः

अस्मिन् पाठे बहुव्रीहिसमासस्य अवशिष्टांशः प्रस्तुतः। बहुव्रीहौ समासान्तस्य षच्प्रत्ययस्य विधायकं "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति, षप्रत्ययस्य विधायकं "द्वित्रिभ्यां ष मूर्ध्नः" इति, अप्प्रत्ययस्य च विधायकम् "अन्तर्बहिर्भ्यां च लोम्नः" इति सूत्रं व्याख्यातम्। अत्र "पादस्य लोपोऽहस्त्यादिभ्यः" इति, "संख्यासुपूर्वस्य" इति, "उद्विभ्यां काकुदस्य" इति "पूर्णाद्विभाषा" इति च समासान्तलोपविधायकं सूत्रं व्याख्यातम्। प्रसङ्गात् "सुहृद्-दुर्हृदौ मित्रामित्रयोः" इति हृदयशब्दस्य हृदादेशनिपातविधायकं सूत्रमपि व्याख्यातम्। निपातनं भवति तद् वर्ण्यते। बहुव्रीहौ पूर्वनिपातविषये अत्रालोचनं भवति। ततः समासविधायकसूत्रवर्णनावसरे तदुदाहरणेषु विसर्गस्यादेशविधानाय यानि सूत्राणि अपेक्षितानि तान्यपि अत्र संगृहीतानि। समासान्तस्य कप्प्रत्ययस्य विधायकमत्र "उरःप्रभृतिभ्यः कप्" "इनः स्त्रियाम्" "शेषाद्विभाषा" सूत्रत्रयमपि व्याख्यातम्।

समासान्तपर्यालोचनावसरे "सोऽपदादौ" इति सकारादेशविधायकम्, "इणः षः" इति "कस्कादिषु च" इति षकारादेशविधायकं सूत्रमपि व्याख्यातम्। ततः बहुव्रीहौ पूर्वनिपातविधायकं "निष्ठा" इति "वाऽऽहिताग्न्यादिषु" इति च सूत्रं प्रस्तुतम्। एवं बहुव्रीहिसमासस्यावशिष्टांशः अस्मिन् पाठे प्रस्तुतः।



## पाठान्तप्रश्नाः

१. "बहुब्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति सूत्रं व्याख्यात।

२. "द्वित्रिभ्यां ष मूर्ध्नः" इति सूत्रं व्याख्यात।

३. "अन्तर्बहिर्भ्यां च लोम्नः" इति सूत्रं व्याख्यात।

४. "पादस्य लोपोऽहस्त्यादिभ्यः" इति सूत्रं व्याख्यात।

५. "संख्यासुपूर्वस्य" इति सूत्रं व्याख्यात।

६. "उद्विभ्यां काकुदस्य" इति सूत्रं व्याख्यात।



७. "उरःप्रभृतिभ्यः कप्" इति सूत्रं व्याख्यात।

८. दीर्घसक्थः इति रूपं साधयत।

९. अन्तर्लोमः इति रूपं साधयत।

१०. द्विमूर्धः इति रूपं साधयत।

११. व्याघ्रपाद् इति रूपं साधयत।

१२. द्विपाद् इति रूपं साधयत।

१३. उत्काकुद् इति रूपं साधयत।

१४. पूर्णकाकुदः इति रूपं साधयत।

१५. व्यूढोरस्कः इति रूपं साधयत।

१६. महायशस्कः इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. स्वाङ्गवाचिनः सक्थ्यक्ष्यन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः षच्प्रत्ययो भवति।

२. दीर्घे सक्थिनी यस्य सः इति विग्रहः।

३. जलजाक्षी।

४. बहुव्रीहिसमासे द्वित्रिभ्यां परस्य मूर्ध्नः समासान्तः तद्धितसंज्ञकः षप्रत्ययो भवति।

५. द्विमूर्धः।

### उत्तराणि-२

६. बहुव्रीहिसमासे अन्तर्बहिर्भ्यां परस्य लोम्नः समासान्तः तद्धितसंज्ञकः अप्प्रत्ययो भवति।

७. अन्तर्लोमः।

८. समासान्तलोपः विधीयते।

९. बहुव्रीहिसमासे हस्त्यादिवर्जिताद् उपमानात्परस्य पादशब्दस्य समासान्तः लोपः भवति।

१०. व्याघ्रपात्।

### उत्तराणि-३

११. समासान्तलोपो विधीयते।

१२. बहुव्रीहिसमासे संख्यावाचकपूर्वस्य सु इत्यव्ययपूर्वस्य पादशब्दस्य समासान्तो लोपो भवति।

१३. द्विपात्।

१४. अलोऽन्त्यस्य इति परिभाषया।



## उत्तराणि-४

१५. समासान्तलोपः विधीयते।

१६. बहुव्रीहिसमासे उद्विभ्यां परस्य काकुदशब्दस्य समासान्तो लोपो भवति।

१७. उत्काकुत्।

१८. अलोऽन्त्यस्य इति परिभाषया।

## उत्तराणि-५

१९. समासान्तलोपः।

२०. बहुव्रीहिसमासे पूर्णशब्दात् परस्य काकुदशब्दस्य विकल्पेन समासान्तो लोपो भवति।

२१. रूपत्रयम्।

२२. अलोऽन्त्यस्य इति परिभाषया।

## उत्तराणि-६

२३. समासान्तहृद्भावनिपातनम्।

२४. बहुव्रीहिसमासे सुदुर्भ्यां परस्य हृदयशब्दस्य समासान्तो हृद्भावो निपात्यते क्रमशः मित्रामित्रयोः अर्थयोः।

२५. सुहृत्।

२६. उरःप्रभृत्यन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो भवति।

२७. व्यूढोरस्कः।

२८. पाश-कल्प-क-काम्येषु प्रत्ययेषु परेषु विसर्गस्य सकारादेशो भवति संहितायां विवक्षितायाम्।

२९. पयस्पाशम्।

## उत्तराणि-७

३०. पाश-कल्प-क-काम्येषु प्रत्ययेषु परेषु इण उत्तरस्य विसर्गस्य षकारादेशो भवति संहितायां विवक्षितायाम्।

३१. सर्पिष्पाशम्।

३२. इणः षः इति सूत्रेण।

३३. कस्कादिषु इण उत्तरस्य विसर्गस्य षकारादेशो भवति, अन्यत्र तु सकारादेशो भवति।

३४. सर्पिष्कुण्डिका।

३५. कस्कादिषु च इति सूत्रेण।

३६. कस्कादिषु च इति सूत्रेण।



## उत्तराणि-८

३७. इन्नन्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो भवति स्त्रीत्वे विवक्षिते।

३८. बहुदण्डिका नगरी।

३९. अनुक्तसमासान्ताद् बहुव्रीहेः समासान्तः तद्धितसंज्ञकः कप्प्रत्ययो विकल्पेन भवति।

४०. महायशस्कः।

४१. रूपद्वयम्।

## उत्तराणि-९

४२. पूर्वनिपातः।

४३. निष्ठान्तं बहुव्रीहौ पूर्वं भवति।

४४. युक्तयोगः।

४५. क्तक्तवतुप्रत्यययोः निष्ठासंज्ञा।

## उत्तराणि-१०

४६. पूर्वनिपातः।

४७. आहिताग्न्यादिषु बहुव्रीहिषु निष्ठान्तं पूर्वं विकल्पेन भवति।

४८. आहिताग्निः अग्न्याहितः इत्यादीनि उदाहरणानि।

४९. विकल्पेन निष्ठान्तस्य आहित इत्यस्य पूर्वनिपाते प्रक्रियायाम् आहिताग्निः इति रूपम्,पूर्वनिपातस्य वैकल्पिकत्वात् तदभावपक्षे अग्न्याहितः इति रूपम्।

॥ इति षष्ठः पाठः॥



# ७

# द्वन्द्वसमासः - पूर्वपरनिपातः विशेषकार्याणि एकशेषः च

## प्रस्तावना

बहुव्रीहिसमासात्परं समासस्य भेदो भवति द्वन्द्वः। "चार्थे द्वन्द्वः" इति द्वन्द्वसमासविधायकं सूत्रम्। प्रायेण उभयपदार्थप्रधानः अयं समासः। उभयपदयोः अर्थः उभयपदार्थः। उभयपदार्थः प्रधानः यस्मिन् स उभयपदार्थप्रधानः। यथा रामः च कृष्णः च इति विग्रहे रामकृष्णौ इति। अत्र समस्यमानयोः पदयोः उभयस्यैव प्राधान्यम् अस्ति। अतः रामकृष्णौ गच्छतः इत्युच्यते चेत् रामस्य कृष्णस्य उभयोरेव गमनक्रियायां प्राधान्येनान्वयः। द्वन्द्वे पूर्वपरनिपातविधायकानि सूत्राणि अत्रालोचितानि।

अयं च द्वन्द्वसमासः इतरेतरद्वन्द्वः समाहारद्वन्द्वः इति द्विधा विभक्तः। समाहारद्वन्द्वे च एकवद्भावविधायकानि कानिचन सूत्राणि वर्तन्ते। तान्यत्र आलोचितानि। द्वन्द्वपर्यालोचनावसरे तदपवादत्वेन एकशेषविधानमपि अत्र आलोचितम्।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- द्वन्द्वसमासविधायकं सूत्रं जानीयात्।
- पूर्वपरनिपातविधायकानि सूत्राणि जानीयात्।
- द्वन्द्वापवादम् एकशेषं जानीयात्।
- द्वन्द्वे विशेषकार्यविधायकानि सूत्राणि जानीयात्।
- द्वन्द्वापवादभूतानि एकशेषसूत्राणि जानीयात्।

## [७.१] चार्थे द्वन्द्वः॥ (२.२.२९)

**सूत्रार्थः** - अनेकं सुबन्तं चार्थे वर्तमानं विकल्पेन समस्यते, स च द्वन्द्वसंज्ञको भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण द्वन्द्वसमासो विधीयते। सूत्रेऽस्मिन् चार्थे इति सप्तम्येकवचनान्तं द्वन्द्वः इति च प्रथमैकवचनान्तं पदम्। "प्राक्कडारात्समासः", "विभाषा" इत्येतद्द्वयम् अधिकृतम्। "अनेकमन्यपदार्थे" इत्यस्मात् अनेकम् इति "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यस्मात् सुप् इति



च अनुवर्तते। चस्य अर्थः चार्थः, तस्मिन् चार्थे इति षष्ठीतत्पुरुषसमासः। सुप् इत्यत्र तदन्तविधौ अनेकम् इत्यनेन अन्वयात् अनेकं सुबन्तम् इति लभ्यते। "अनेकं सुबन्तं चार्थे वर्तमानं विकल्पेन समासं प्राप्नोति, स च समासः द्वन्द्वसंज्ञको भवती"ति सूत्रस्यार्थः।

चार्थाः के इति चेद् दीक्षितेनोक्तं सिद्धान्तकौमुद्यां- "समुच्चयान्वाचयेतरेतरयोग-समाहाराश्चार्थाः। परस्परनिरपेक्षस्य अनेकस्य एकस्मिन् अन्वयः समुच्चयः। अन्यतरस्य आनुषङ्गिकत्वे अन्वयः अन्वाचयः। मिलितानामन्वय इतरेतरयोगः। समूहः समाहारः" इति।

परस्परनिरपेक्षानां अनेकपदानां यत्र एकस्मिन् क्रियापदे अन्वयः भवति तत्र समुच्चयः चार्थः। यथा ईश्वरं गुरुं च भजस्व इति। ईश्वरं भजस्व गुरुमपि इति तात्पर्यम्।

अन्यतरस्य एकस्य पदस्य यत्र अप्रधानत्वेन क्रियायामन्वयः, अन्यस्य च प्रधानत्वेन तत्र चार्थः अन्वाचयः। यथा - भिक्षामट गां चानय इति। भिक्षामट, गौः सङ्गता चेत् तामपि आनय इति तात्पर्यम्।

परस्परापेक्षितानां समुदितानाम् एकस्मिन् क्रियापदे अन्वयः यत्र तत्र चार्थः इतरेतरयोगः। इततरेतरयोगो नाम परस्परसाहित्यम्। यथा धवश्च खदिरश्च धवखदिरौ इति। अत्र इतरेतरयोगबोधनाय चकारद्वयप्रयोगः।

एकीभूय क्रियायामन्वयः यत्र तत्र चार्थः समाहारः। यथा संज्ञा च परिभाषा च संज्ञापरिभाषम् इति। समाहारस्यैकत्वादत्र एकवचनम्।

समुच्चये अन्वाचये च असामर्थ्यात् समासो न भवति। यथा ईश्वरं गुरुं च भजस्वेत्यत्र ईश्वरगुरुशब्दयोः परस्परनिरपेक्षयोः आवृत्ते भजस्वेति क्रियापदे क्रमेणान्वयात् परस्परम् अन्वयाभावात् नास्ति सामर्थ्यम्। एवमेव भिक्षामट गां चानयेत्यत्र भिक्षागोपदयोः परस्परनिरपेक्षयोः क्रमशः अटने आनयने चान्वयात् परस्परमन्वयाभावात् नास्ति सामर्थ्यम्। किन्तु इतरेतरयोगस्य समाहारस्य च चार्थस्य सामर्थ्यसत्त्वाद् भवति समासः।

एवमस्मिन् सूत्रे चार्थशब्देन इतरेतरयोगस्य समाहारस्य च ग्रहणम्। एवं **सूत्रार्थः** - "अनेकं सुबन्तं चार्थे इतरेतरयोगे समाहारे च वर्तमानं विकल्पेन समासं प्राप्नोति, स च समासः द्वन्द्वसंज्ञको भवति" इति।

**उदाहरणम्** - इतरेतरयोगस्य चार्थत्वे धवखदिरौ इत्युदाहरणम्। तथाहि धवश्च खदिरश्च इति लौकिकविग्रहे धव सु खदिर सु इत्यलौकिकविग्रहे इतरेतरयोगार्थे विद्यमानस्य धव सु इत्यस्य खदिर सु इत्यस्य च सुबन्तस्य प्रस्तुतसूत्रेण द्वन्द्वसमासो भवति। ततः समुदायस्य प्रातिपदिकत्वात् सुपः सुद्वयस्य लुकि धवखदिरशब्दो निष्पद्यते। ततः "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन सूत्रेण उत्तरपदस्य पुंसि विद्यमानत्वात् धविखदिरशब्दस्य पुंसि विद्यमानत्वात् ततः प्रथमाद्विवचने औप्रत्यये प्रक्रियाकार्ये धवखदिरौ इति रूपम्।

समाहारस्य चार्थत्वे संज्ञापरिभाषम् इत्यदाहरणम्। तथाहि संज्ञा च परिभाषा च इति लौकिकविग्रहे संज्ञा सु परिभाषा सु इत्यलौकिकविग्रहे समाहारार्थे विद्यमानस्य संज्ञा सु इत्यस्य परिभाषा सु इत्यस्य च सुबन्तस्य प्रस्तुतसूत्रेण द्वन्द्वसमासो भवति। ततः समुदायस्य प्रातिपदिकत्वात् सुपः



सुद्वयस्य लुकि संज्ञापरिभाषाशब्दो निष्पद्यते। ततः "स नपुंसकम्" इत्यनेन सूत्रेण संज्ञापरिभाषाशब्दस्य नपुंसकत्वात् ह्रस्वत्वे निष्पन्नात् संज्ञापरिभाषशब्दात् सौ प्रक्रियाकार्ये संज्ञापरिभाषम् इति रूपम्।

## [७.२] राजदन्तादिषु परम्॥ (२.२.३१)

**सूत्रार्थः** - राजदन्तादिषु पूर्वप्रयोगार्हं परं भवति।

**सूत्रव्याख्या** -इदं विधिसूत्रम्। अनेन सूत्रेण परनिपातो विधीयते। सूत्रेऽस्मिन् राजदन्तादिषु इति सप्तमीबहुवचनान्तं परम् इति च प्रथमैकवचनान्तं पदम्। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति पदमनुवर्तते। प्रयुज्यते इति क्रियापदमध्याहार्यम्। राजदन्त इति शब्द आदिर्येषां ते राजदन्तादयः, तेषु राजदन्तादिषु इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। राजदन्तादयः राजदन्तादिगणे पठिताः शब्दाः भवन्ति। एवं सूत्रार्थो भवति - "राजदन्तादिषु समासे पूर्वप्रयोगार्हं पदं परं प्रयुज्यते" इति।

**उदाहरणम्** - राजदन्तः इत्यादिकमेतस्य सूत्रस्योदाहरणम्। तथाहि दन्तानां राजा इति लौकिकविग्रहे दन्त आम् राजन् सु इत्यलौकिकविग्रहे "षष्ठी" इत्यनेन सूत्रेण षष्ठीतत्पुरुषसमासो भवति। ततः "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन समासविधायकसूत्रे षष्ठीत्यस्य प्रथमानिर्दिष्टत्वात् तद्बोध्यस्य दन्त आम् इत्यस्योपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इत्यनेन पूर्वनिपातं प्राप्नोति। तदा राजदन्तादिगणपठितत्वात् प्रोक्तसूत्रेण दन्त आम् इत्यस्य परनिपाते राजन् सु दन्त आम् इति भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन सूत्रेण राजन् सु दन्त आम् इति समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सूत्रेण सुपः सुप्रत्ययस्य आम्प्रत्ययस्य च लुकि राजन् दन्त इति भवति। तदा "न लोपः प्रातिपदिकान्तस्य" इत्यनेन राजन् इत्यस्य नकारस्य लोपे निष्पन्नात् राज दन्त इत्यस्मात् प्रातिपदिकात् प्रथमैकवचनविवक्षायां सौ प्रक्रियाकार्ये राजदन्तः इति रूपम्।

### (७.२.१) धर्मादिष्वनियमः॥ (वार्तिकम्)

**वार्तिकार्थः** - धर्मादिषु समस्यमानयोः अन्यतरस्य पूर्वनिपातो परनिपातो वा भवति।

**वार्तिकव्याख्या** - इदं वार्तिकं धर्मादिगणे पठितानां शब्दानां समासे अन्यतरस्य पूर्वनिपातं विदधाति। वस्तुतस्तु गणसूत्रमिदम्। अस्य वार्तिकस्यार्थो भवति धर्मादिगणे पठितानां शब्दानां समासे पूर्वनिपाते परनिपाते च नियमो नास्तीति।

**उदाहरणम्** - अर्धधर्मौ धर्मार्थौ इत्यादिकमेतस्य वार्तिकस्योदाहरणम्। तथाहि धर्मश्च अर्थश्च इति लौकिकविग्रहे धर्म सु अर्थ सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुप्रत्ययद्वयस्य लुकि धर्म अर्थ इति भवति। ततः "अजाद्यन्तम्" इति सूत्रेण अजादेः अर्थशब्दस्य पूर्वनिपाते प्राप्ते प्रोक्तेन वार्तिकेन धर्मशब्दस्य पाक्षिके पूर्वनिपाते सवर्णदीर्घे निष्पन्नाद् धर्मार्थशब्दाद् प्रथमाद्विवचने औप्रत्यये धर्मार्थौ इति रूपम्। अन्यस्मिन् पक्षे अर्थशब्दस्य पूर्वनिपाते अर्थधर्मौ इति रूपम्।

## [७.३] द्वन्द्वे घि॥ (२.२.३२)

**सूत्रार्थः** - द्वन्द्वे घिसंज्ञकं पूर्वं प्रयुज्यते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण पूर्वनिपातो विधीयते। सूत्रेऽस्मिन् द्वन्द्वे इति सप्तम्येकवचनान्तं घि इति च लुप्तप्रथमैकवचनान्तं पदम्। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति द्वितीयैकवचनान्तं क्रियाविशेषणपदमनुवर्तते। प्रयुज्यते इति क्रियापदमध्याहार्यम्। "शेषो घ्यसखि" इति सूत्रेण विहितस्य सखिवर्जस्य ह्रस्वेकारान्तस्य ह्रस्वोकारान्तस्य च घिसंज्ञकस्यैव घिपदेन ग्रहणम्। एवं सूत्रार्थो भवति - "द्वन्द्वे घिसंज्ञकं पूर्वं प्रयुज्यते" इति।

**उदाहरणम्** - हरिहरौ इत्यादिकमेतस्य सूत्रस्योदाहरणम्। तथाहि हरिश्च हरश्च इति लौकिकविग्रहे हरि सु हर सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासे, प्रातिपदिकत्वात् सुब्लुकि हरि हर इति स्थिते प्रोक्तसूत्रेण इकारान्तत्वाद् घिसंज्ञकस्य हरिशब्दस्य पूर्वनिपाते निष्पन्नाद् हरिहरशब्दात् प्रथमाद्विवचने औप्रत्यये हरिहरौ इति रूपम्।



## पाठगतप्रश्नाः-१

१. "चार्थे द्वन्द्वः" इति सूत्रस्यार्थः कः।

२. चार्थाः के भवन्ति।

३. समुच्चयः नाम कः तस्योदाहरणं च किम्।

४. अन्वाचयः नाम कः तस्योदाहरणं च किम्।

५. इतरेतरयोगः नाम कः तस्योदाहरणं च किम्।

६. समाहारः नाम कः तस्योदाहरणं च किम्।

७. समुच्चयान्वाचयार्थे कुतः समासो न भवति।

८. "राजदन्तादिषु परम्" इति सूत्रस्यार्थः कः।

९. "राजदन्तादिषु परम्" इति सूत्रस्य किमुदाहरणम्।

१०. "धर्मादिष्वनियमः" इति वार्तिकस्यार्थः कः।

११. "धर्मादिष्वनियमः" इति वार्तिकस्य किमुदाहरणम्।

१२. "द्वन्द्वे घि" इति सूत्रस्यार्थः कः।

१३. हरिहरौ इत्यत्र हरिशब्दस्य पूर्वनिपातः कथम्।



## (७.३.१) अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे॥ (वार्तिकम्)

**वार्तिकार्थः** - अनेकस्य घिसंज्ञकस्य पदस्य द्वन्द्वप्राप्तौ सत्यामेकस्य घिसंज्ञकस्य पूर्वनिपातनियमः,अन्यस्मिन् घिसंज्ञकविषये पूर्वनिपातस्य विकल्पो भवति।

**वार्तिकव्याख्या** - इदं वार्तिकम् "अल्पाच्तरम्" इति सूत्रस्य महाभाष्ये पठितम्। अनेन वार्तिकेन अनेकघिसंज्ञकसमासे पूर्वनिपातनियमः विधीयते।

वार्तिकेऽस्मिन् अनेकप्राप्तौ एकत्र नियमः अनियमः शेषे इति पदच्छेदः। अनेकप्राप्तौ इति शेषे इति च सप्तम्यन्तम् एकत्र इति च सप्तम्यर्थबोधकमव्ययम्। नियमः अनियमः इति पदद्वयं प्रथमैकवचनान्तम्। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति द्वितीयैकवचनान्तं क्रियाविशेषणपदमनुवर्तते। "द्वन्द्वे घि" इति सूत्रमनुवर्तते। एवं वार्तिकस्यास्य अर्थो भवति - "अनेकस्य घिसंज्ञकस्य द्वन्द्वप्राप्तौ एकस्मिन् घिसंज्ञके पूर्वनिपातनियमः, अन्यत्र घिसंज्ञके पूर्वनिपातस्यानियमः" इति।

**उदाहरणम्** - हरिगुरुहराः हरिहरगुरवः इत्यादिकमेतस्य वार्तिकस्योदाहरणम्। तथाहि हरिश्च हरश्च गुरुश्च इति लौकिकविग्रहे हरि सु हर सु गुरु सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुप्रत्ययत्रयस्य लुकि हरि हर गुरु इति भवति। ततः प्रोक्तवार्तिकसहायेन "द्वन्द्वे घि" इत्यनेन सूत्रेण इकारान्तत्वाद् घिसंज्ञकस्य हरिशब्दस्य पूर्वनिपाते, द्वितीयस्य घिसंज्ञकस्य गुरुशब्दस्य विकल्पेन पूर्वनिपाताभावात् सर्वसंयोगे निष्पन्नाद् हरिहरगुरुशब्दाद् प्रथमाबहुवचने जस्प्रत्यये हरिहरगुरवः इति रूपम्। द्वितीयस्य घिसंज्ञकस्य पूर्वनिपातस्य वैकल्पिकत्वात् तत्पक्षे निष्पन्नाद् हरिगुरुहरशब्दात् जसि हरिगुरुहराः इति रूपम्।

## [७.४] अजाद्यदन्तम्॥ (२.२.३३)

**सूत्रार्थः** - द्वन्द्वे यद् अजादि अदन्तं च तत् पूर्वं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण पूर्वनिपातो विधीयते।एकपदात्मकसूत्रेऽस्मिन् अजाद्यदन्तम् इति प्रथमैकवचनान्तं पदम्। "द्वन्द्वे घि" इत्यस्मात् द्वन्द्वे इति पदमनुवर्तते। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति द्वितीयैकवचनान्तं क्रियाविशेषणपदमनुवर्तते। प्रयुज्यते इति क्रियापदमध्याहार्यम्। अच् आदिर्यस्य तद् अजादि इति बहुव्रीहिसमासः। अत अन्तो यस्य तद् अदन्तमिति बहुव्रीहिसमासः। एवं सूत्रार्थो भवति - "द्वन्द्वे यद् अजादि अदन्तं च तत् पूर्वं प्रयुज्यते" इति।

**उदाहरणम्** - ईशकृष्णौ इत्यादिकमेतस्य सूत्रस्योदाहरणम्। तथाहि ईशश्च कृष्णश्च इति लौकिकविग्रहे ईश सु कृष्ण सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुप्रत्ययद्वयस्य लुकि ईश कृष्ण इति भवति। ततः ईशशब्दस्य आदौ ईकारः अस्ति। अतः सः अजादिः। एवमेव अकारः अन्ते अस्ति अतः ईशशब्दः अदन्तः। एवं प्रोक्तसूत्रेण अजादेः अदन्तस्य ईशशब्दस्य पूर्वनिपाते निष्पन्नाद् ईशकृष्णशब्दात् प्रथमाद्विवचने औप्रत्यये ईशकृष्णौ इति रूपम्।

## [७.५] अल्पाच्तरम्॥ (२.२.३४)

**सूत्रार्थः** - द्वन्द्वे अल्पाच्तरं पदं पूर्वं भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण पूर्वनिपातो विधीयते। एकपदात्मकसूत्रेऽस्मिन् अल्पाच्तरम् इति प्रथमैकवचनान्तं पदम्। "द्वन्द्वे घि" इत्यस्मात् द्वन्द्वे इति पदमनुवर्तते। "उपसर्जनं पूर्वम्" इत्यतः पूर्वम् इति द्वितीयैकवचनान्तं क्रियाविशेषणपदमनुवर्तते। प्रयुज्यते इति क्रियापदमध्याहार्यम्। अल्पः अच् यस्य तद् अल्पाच् इति बहुव्रीहिसमासः। अल्पाच् एव अल्पाच्तरम् इति स्वार्थे तरप्प्रत्ययः। अत एव निपातनात् कुत्वाभावः। एवं सूत्रार्थो भवति - "द्वन्द्वे अल्पाज्विशिष्टं पदं पूर्वं प्रयुज्यते" इति।

**उदाहरणम्** - शिवकेशवौ इत्यादिकमेतस्य सूत्रस्योदाहरणम्। तथाहि शिवश्च केशवश्च इति लौकिकविग्रहे शिव सु केशव सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुप्रत्ययद्वयस्य लुकि शिव केशव इति भवति। अत्र शिव इत्यस्य द्व्यच्कत्वं केशव इत्यस्य च त्र्यच्कत्वमस्ति। एवं प्रोक्तसूत्रेण शिव इत्यस्य अल्पाच्कस्य पूर्वनिपाते निष्पन्नात् शिवकेशवशब्दात् प्रथमाद्विवचने औप्रत्यये शिवकेशवौ इति रूपम्।

### (७.५.१) ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण॥ (वार्तिकम्)

**वार्तिकार्थः** - समानसंख्याच्कानाम् ऋतूनां नक्षत्राणां च द्वन्द्वे आनुपूर्व्येण क्रमेण निपातो वक्तव्यः।

**वार्तिकव्याख्या** - अनेन वार्तिकेन क्रमेण निपातो विधीयते। वार्तिकेऽस्मिन् ऋतुनक्षत्राणां समाक्षराणाम् आनुपूर्व्येण इति पदच्छेदः। ऋतुनक्षत्राणां समाक्षराणाम् इति पदद्वयं षष्ठीबहुवचनान्तम्। आनुपूर्व्येण इति तृतीयैकवचनान्तं पदम्। "द्वन्द्वे घि" इत्यस्माद् द्वन्द्वे इति पदमनुवर्तते। अत्राक्षरशब्देन अचः ग्रहणम्। समानि अक्षराणि येषां तानि समाक्षराणि, तेषामिति बहुव्रीहिः। समसख्यांकाच्कानाम् इति तात्पर्यम्। एवं वार्तिकस्यास्य अर्थो भवति - "समानसंख्याच्कानाम् ऋतूनां नक्षत्राणां च द्वन्द्वे आनुपूर्व्येण क्रमेण निपातो वक्तव्यः" इति।

**उदाहरणम्** - हेमन्तशिशिरवसन्ताः इत्यादिकमेतस्य वार्तिकस्योदाहरणम्। तथाहि हेमन्तश्च शिशिरश्च वसन्तश्च इति लौकिकविग्रहे हेमन्त सु शिशिर सु वसन्त सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासे, प्रातिपदिकत्वात् सुब्लुकि हेमन्त शिशिर वसन्त इति स्थिते प्रोक्तवार्तिकेन हेमन्तशिशिरवसन्तानां समानाच्कत्वात् तेषाम् आनुपूर्व्यस्य लोकप्रसिद्धत्वात् हेमन्तशब्दस्य पूर्वनिपाते ततः परं शिशिरशब्दस्य निपातो भवति। ततः सर्वसंयोगे निष्पन्नात् हेमन्तशिशिरवसन्तशब्दाद् प्रथमाबहुवचने जस्प्रत्यये हेमन्तशिशिरवसन्ताः इति रूपम्। एवमेव नक्षत्रवाचकत्वे निपातस्योदाहरणं कृत्तिकारोहिण्यौ इति।



## (७.५.२) लघ्वक्षरं पूर्वम्॥ (वार्तिकम्)

**वार्तिकार्थः** - लघ्वक्षरं पदं द्वन्द्वे पूर्वं प्रयोज्यम्।

**वार्तिकव्याख्या** - अनेन वार्तिकेन पूर्वनिपातो विधीयते। वार्तिकेऽस्मिन् लघ्वक्षरं पूर्वमिति पदद्वयं प्रथमैकवचनान्तम्। "द्वन्द्वे घि" इत्यस्माद् द्वन्द्वे इति पदमनुवर्तते। अत्राक्षरशब्देन अचः ग्रहणम्। लघु अक्षरम् अच् यस्य तत् लघ्वक्षरमिति बहुव्रीहिसमासः। ह्रस्वाज्वर्णविशिष्टं पदम् इति तात्पर्यम्। एवं वार्तिकस्यास्य अर्थो भवति - "लघ्वच्कं पदं द्वन्द्वे पूर्वं प्रयोज्यम्" इति।

**उदाहरणम्** - कुशकाशम् इत्यादिकमेतस्य वार्तिकस्योदाहरणम्। तथाहि कुशश्च काशश्च इति लौकिकविग्रहे कुश सु काश सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः "कृत्तद्धितसमासाश्च" इत्यनेन समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुप्रत्ययद्वयस्य लुकि कुश काश इति स्थिते प्रोक्तवार्तिकेन कुशशब्दस्य लघ्वच्कत्वात् तस्य पूर्वनिपातो भवति। ततः सर्वसंयोगे निष्पन्नस्य कुशकाशशब्दस्य एकवद्भावे नपुंसकत्वे ततः सौ कुशकाशम् इति रूपम्।



## पाठगतप्रश्नाः-२

१४. "अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे" इति वार्तिकस्यार्थः कः।

१५. "अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे" इति वार्तिकस्य किमुदाहरणम्।

१६. "अजाद्यदन्तम्" इति सूत्रस्यार्थः कः।

१७. "अजाद्यदन्तम्" इति सूत्रस्योदाहरणं किम्।

१८. "अल्पाच्तरम्" इति सूत्रस्यार्थः कः।

१९. "अल्पाच्तरम्" इति सूत्रस्य किमुदाहरणम्।

२०. "ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण" इति वार्तिकस्यार्थः कः।

२१. "ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण" इति वार्तिकस्य किमुदाहरणम्।

२२. "लघ्वक्षरं पूर्वम्" इति वार्तिकस्यार्थः कः।

२३. "लघ्वक्षरं पूर्वम्" इति वार्तिकस्य किमुदाहरणम्।

---

## (७.५.३) अभ्यर्हितं च॥ (वार्तिकम्)

**वार्तिकार्थः** - अभ्यर्हितं पदं द्वन्द्वे पूर्वं प्रयोज्यम्।



**वार्तिकव्याख्या** - अनेन वार्तिकेन पूर्वनिपातो विधीयते। वार्तिकेऽस्मिन् अभ्यर्हितमिति पदं प्रथमैकवचनान्तम्। चेत्यव्ययपदम्। "द्वन्द्वे घि" इत्यस्माद् द्वन्द्वे इति पदमनुवर्तते। अभ्यर्हितं नाम पूज्यम्। चपदेन पूर्वम् इत्यस्य ग्रहणम्। एवं वार्तिकस्यास्य अर्थो भवति - "अभ्यर्हितं पदं द्वन्द्वे पूर्वं प्रयोज्यम्" इति।

**उदाहरणम्** - वासुदेवार्जुनौ इत्यादिकमेतस्य वार्तिकस्योदाहरणम्। तथाहि वासुदेवश्च अर्जुनश्च इति लौकिकविग्रहे वासुदेव सु अर्जुन सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासे, प्रातिपदिकत्वात् सुब्लुकि वासुदेव अर्जुन इति भवति। ततः "अल्पाच्तरम्" इत्यनेन अल्पाक्षरविशिष्टस्य अर्जुनशब्दस्य पूर्वनिपाते प्राप्ते तं प्रबाध्य प्रोक्तवार्तिकेन अभ्यर्हितस्य वासुदेवशब्दस्य पूर्वनिपातो विधीयते। ततः सवर्णदीर्घे निष्पन्नाद् वासुदेवार्जुनशब्दात् पुंसि प्रथमाद्विवचने औप्रत्यये वासुदेवार्जुनौ इति रूपम्।

## (७.५.४) वर्णानामानुपूर्व्येण॥ (वार्तिकम्)

**वार्तिकार्थः** - द्वन्द्वे वर्णानामानुपूर्व्येण पूर्वनिपातो वक्तव्यः।

**वार्तिकव्याख्या** - अनेन वार्तिकेन पूर्वनिपातो विधीयते।

वार्तिकेऽस्मिन् वर्णानाम् इति षष्ठीबहुवचनान्तम् आनुपूर्व्येण इति तृतीयैकवचनान्तं पदम्। "द्वन्द्वे घि" इत्यस्माद् द्वन्द्वे इति पदमनुवर्तते। "उपसर्जनं पूर्वम्" इत्यस्मात् पूर्वम् इत्यनुवर्तते। वर्णशब्देन प्रसिद्धा ब्राह्मणादयः चत्वारः गृह्यन्ते। एवं वार्तिकस्यार्थो भवति - "द्वन्द्वे वर्णानाम् आनुपूर्व्येण पूर्वनिपातो वक्तव्यः" इति।

**उदाहरणम्** - ब्राह्मणक्षत्रियविट्शूद्राः इत्येतस्य वार्तिकस्योदाहरणम्। तथाहि ब्राह्मणश्च क्षत्रियश्च विट् च शूद्रश्च इति लौकिकविग्रहे ब्राह्मण सु क्षत्रिय सु विश् सु शूद्र सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः समासस्य "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवस्य सुप्रत्ययत्रयस्य लुकि ब्राह्मण क्षत्रिय विश् शूद्र इति भवति। तदा प्रोक्तवार्तिकेन वर्णानामानुपूर्व्येण पूर्वनिपाते प्रक्रियाकार्ये निष्पन्नाद् ब्राह्मणक्षत्रियविट्शूद्रशब्दात् पुंसि प्रथमाबहुवचने जस्प्रत्यये ब्राह्मणक्षत्रियविट्शूद्राः इति रूपम्।

## (७.५.५) भ्रातुर्ज्यायसः॥ (वार्तिकम्)

**वार्तिकार्थः** - द्वन्द्वे ज्येष्ठभ्रातृवाचकस्य पदस्य पूर्वनिपातो वक्तव्यः।

**वार्तिकव्याख्या** - अनेन वार्तिकेन पूर्वनिपातो विधीयते। वार्तिकेऽस्मिन् भ्रातुः इति ज्यायसः इति पदद्वयं षष्ठ्येकवचनान्तम्। "द्वन्द्वे घि" इत्यस्माद् द्वन्द्वे इति पदमनुवर्तते। "उपसर्जनं पूर्वम्" इत्यस्मात् पूर्वम् इत्यनुवर्तते। एवं वार्तिकस्यास्य अर्थो भवति - "द्वन्द्वे ज्येष्ठभ्रातृवाचकस्य पदस्य पूर्वनिपातो वक्तव्यः" इति।

**उदाहरणम्** - युधिष्ठिरार्जुनौ इत्येतस्य वार्तिकस्योदाहरणम्। तथाहि युधिष्ठिरश्च अर्जुनश्च इति लौकिकविग्रहे युधिष्ठिर सु अर्जुन सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि युधिष्ठिर अर्जुन इति स्थिते, "अल्पाच्तरम्" इत्यनेन



अल्पाक्षरविशिष्टस्य अर्जुनशब्दस्य पूर्वनिपाते प्राप्ते तं प्रबाध्य प्रोक्तवार्तिकेन ज्येष्ठभ्रातृवाचकस्य युधिष्ठिरशब्दस्य पूर्वनिपातो भवति। ततः सवर्णदीर्घे निष्पन्नाद् युधिष्ठिरार्जुनशब्दात् पुंसि प्रथमाद्विवचने औप्रत्यये युधिष्ठिरार्जुनौ इति रूपम्।

## (७.५.६) संख्याया अल्पीयस्याः॥ (वार्तिकम्)

**वार्तिकार्थः** - समासे अल्पसंख्यावाचकस्य पूर्वनिपातो वक्तव्यः।

**वार्तिकव्याख्या** - अनेन वार्तिकेन पूर्वनिपातो विधीयते। वार्तिकेऽस्मिन् संख्यायाः इति अल्पीयस्याः इति पदद्वयं षष्ठ्येकवचनान्तम्। संख्यायाः अल्पीयस्याः इत्यस्य अल्पसंख्यावाचकस्य इत्यर्थः। "उपसर्जनं पूर्वम्" इत्यस्मात् पूर्वम् इत्यनुवर्तते। एवं वार्तिकस्यास्यार्थो भवति - "समासे अल्पसंख्यावाचकस्य पदस्य पूर्वनिपातो वक्तव्यः" इति।

**उदाहरणम्** - द्वादश इत्येतस्य वार्तिकस्योदाहरणम्। तथाहि द्वौ च दश च इति लौकिकविग्रहे द्वि जस् दशन् जस्  इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि द्वि दशन् इति स्थिते, प्रोक्तवार्तिकेन अल्पसंख्यावाचकस्य द्विशब्दस्य पूर्वनिपाते द्वि दशन् इति स्थिते ततः द्विशब्दस्य इकारस्य "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः" इत्यनेन सूत्रेण आकारान्तादेशे द्वादशन् इति जाते, नलोपे प्रक्रियाकार्ये निष्पन्नाद् द्वादशशब्दात् जसि द्वादश इति रूपम्।



## पाठगतप्रश्नाः-३

२४. "अभ्यर्हितं च" इति वार्तिकस्यार्थः कः।

२५. "अभ्यर्हितं च" इति वार्तिकस्य किमुदाहरणम्।

२६. "वर्णानामानुपूर्व्येण" इति वार्तिकस्यार्थः कः।

२७. "वर्णानामानुपूर्व्येण" इति वार्तिकस्य किमुदाहरणम्।

२८. "भ्रातुर्ज्यायसः" इति वार्तिकस्यार्थः कः।

२९. "भ्रातुर्ज्यायसः" इति वार्तिकस्य किमुदाहरणम्।

३०. "संख्याया अल्पीयस्याः" इति वार्तिकस्यार्थः कः।

३१. "संख्याया अल्पीयस्याः" इति वार्तिकस्य किमुदाहरणम्।

---

## [७.६] द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्॥ (२.४.२)

**सूत्रार्थः** - प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्व एकवद् भवति।



**सूत्रव्याख्या** - इदम् अतिदेशसूत्रम्। अनेन सूत्रेण एकवद्भावः अतिदिश्यते। एकवत् नाम एकस्मिन् इव। अर्थाद् एकवचनान्ततया प्रयोगो भवति। पदत्रयात्मकसूत्रेऽस्मिन् सूत्रे द्वन्द्व इति प्रथमैकवचनान्तं पदम्। चेत्यव्ययपदम्। प्राणितूर्यसेनाङ्गानाम् इति षष्ठीबहुवचनान्तं पदम्। "द्विगुरेकवचनम्" इत्यस्मात् एकवचनम् इति पदमनुवर्तते। प्राणी च तूर्यञ्च सेना च प्राणितूर्यसेनाः इतीतरेतरयोगद्वन्द्वसमासः। तासाम् अङ्गानि प्राणितूर्यसेनाङ्गानि, तेषां प्राणितूर्यसेनाङ्गानाम् इति षष्ठीतत्पुरुषसमासः। "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायात् प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानाम् इति लभ्यते। एकं वक्तीति एकवचनम् इति कर्तरि ल्युट्। "समाहारग्रहणं कर्तव्यम्" इति वार्तिकबलात् समाहाररूपार्थस्य प्रतिपादकम् एषां द्वन्द्वसमास इति लभ्यते। एवं सूत्रार्थो भवति- "प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्व एकवद् भवति" इति।

**उदाहरणम्** - प्राण्यङ्गस्योदाहरणं पाणिपादम् इति। पाणी च पादौ एषां समाहारः इति लौकिकविग्रहे पाणि औ पाद औ इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि पाणि पाद इति स्थिते प्रोक्तसूत्रेण प्राण्यङ्गद्वन्द्वत्वाद् पाणिपाद इति द्वन्द्वस्य एकवद्भावो भवति। ततः पाणिपादशब्दात् प्रथमैकवचने सौ "स नपुंसकम्" इत्यनेन समाहारद्वन्द्वस्य पाणिपादशब्दस्य नपुंसकत्वं भवति। ततः सोरमि पाणिपाद अम् इति जाते "अमि पूर्वः" इत्यनेन दकाराकारस्य अमः अकारस्य च स्थाने पूर्वरूपे अकारे पाणिपादम् इति रूपम्।

तूर्याङ्गानामुदाहरणं भवति मार्दङ्गिकाश्च वैणविकाश्च एषां समाहारः इति विग्रहे मार्दङ्गिकवैणविकम्। सेनाङ्गानामुदाहरणं भवति रथिकाश्च अश्वारिहाश्च एषां समाहारः इति विग्रहे रथिकाश्वारोहम्।

## [७.७] जातिरप्राणिनाम्॥ (२.४.६)

**सूत्रार्थः** - प्राणिवर्जितजातिवाचकानां द्वन्द्व एकवद् भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदम् अतिदेशसूत्रम्। अनेन सूत्रेण एकवद्भावः अतिदिश्यते। पदत्रयात्मकसूत्रेऽस्मिन् सूत्रे जातिः इति प्रथमैकवचनान्तम् अप्राणिनाम् इति षष्ठीबहुवचनान्तं पदम्। जातिः इत्यत्र षष्ठीबहुवचनस्थाने व्यत्ययेन प्रथमा। जातिवाचिनाम् इत्यर्थः। अप्राणिनामित्यस्य प्राणिवाचकवर्जितानाम् इत्यर्थः। "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्राद् द्वन्द्वः इति पदमनुवर्तते। "द्विगुरेकवचनम्" इत्यस्मात् एकवचनम् इति पदमनुवर्तते। "समाहारग्रहणं कर्तव्यम्" इति वार्तिकबलात् समाहाररूपार्थस्य प्रतिपादकम् एषां द्वन्द्वसमास इति लभ्यते। एवं सूत्रार्थो भवति - "प्राणिवर्जितजातिवाचकानां द्वन्द्व एकवद् भवति" इति।

**उदाहरणम्** - धानाशष्कुलि इत्युदाहरणम्। धानाश्च शष्कुलयश्च तासां समाहारः इति लौकिकविग्रहे धाना जस् शष्कुलि जस् इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सूत्रेण सुपः जस्द्वयस्य लुकि धानाशष्कुलि इति भवति। तदा प्रोक्तसूत्रेण प्राणिभिन्नशस्यजातिवाचिनां द्वन्द्वस्य



धानाशष्कुलि इत्यस्य एकवद्भावो भवति। ततः धानाशष्कुलिशव्दात् सौ "स नपुंसकम्" इत्यनेन नपुंसकत्वे प्रक्रियाकार्ये धानाशष्कुलि इति रूपम्।

## [७.८] येषां च विरोधः शाश्वतिकः॥ (२.४.९)

**सूत्रार्थः** - येषां विरोधः शाश्वतिकः तेषां द्वन्द्व एकवद् भवति।

**सूत्रव्याख्या** - इदम् अतिदेशसूत्रम्। अनेन सूत्रेण एकवद्भावस्य अतिदेशः क्रियते। पदत्रयात्मकसूत्रेऽस्मिन् सूत्रे येषामिति षष्ठीबहुवचनान्तं पदम्। चेत्यव्ययपदम्। विरोधः शाश्वतिकः इति पदद्वयं प्रथमैकवचनान्तम्। विरोधो वैरम्। शाश्वतिको नाम सदा। "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्राद् द्वन्द्वः इति पदमनुवर्तते। "द्विगुरेकवचनम्" इत्यस्मात् एकवचनम् इति पदमनुवर्तते। "समाहारग्रहणं कर्तव्यम्" इति वार्तिकबलात् एषां द्वन्द्वसमास इति लभ्यते। एवं सूत्रार्थो भवति- "येषां विरोधः शाश्वतिकः तेषां द्वन्द्व एकवद् भवति" इति।

**उदाहरणम्** - अहिनकुलम् इत्युदाहरणम्। अहयश्च नकुलाश्च इति लौकिकविग्रहे अहि जस् नकुल जस् इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि प्रक्रियाकार्ये अहिनकुल इति भवति। अहिनकुलयोः विरोधयोः सुप्रसिद्धत्वात् प्रोक्तसूत्रेण तयोर्द्वन्द्वस्य एकवद्भावो भवति। ततः अहिनकुलशव्दात् सौ "स नपुंसकम्" इत्यनेन नपुंसकत्वे सोरमि प्रक्रियाकार्ये अहिनकुलम् इति रूपम्।

## [७.९] विप्रतिषिद्धं चानधिकरणवाचि॥ (२.४.१३)

**सूत्रार्थः** - विरुद्धार्थानाम् अद्रव्यवाचिनां द्वन्द्व एकवद् विकल्पेन भवति।

**सूत्रव्याख्या** - इदम् अतिदेशसूत्रम्। अनेन सूत्रेण विकल्पेन एकवद्भावः अतिदिश्यते। पदत्रयात्मकसूत्रेऽस्मिन् विप्रतिषिद्धम् अनधिकरणवाचि इति पदद्वयं प्रथमैकवचनान्तम्। चेत्यव्ययपदम्। "विभाषा" इत्यनुवर्तते। विप्रतिषेधो विरोधः सहानवस्थानलक्षणः। अधिकरणं द्रव्यम्। न अधिकरणम् अनधिकरणं नाम अद्रव्यम्। "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्राद् द्वन्द्वः इति पदमनुवर्तते। "द्विगुरेकवचनम्" इत्यस्मात् एकवचनम् इति पदमनुवर्तते। "समाहारग्रहणं कर्तव्यम्" इति वार्तिकबलात् एषां द्वन्द्वसमास इति लभ्यते। एवं सूत्रार्थो भवति - "विरुद्धार्थानाम् अद्रव्यवाचिनां द्वन्द्व एकवद् विकल्पेन भवति" इति।

**उदाहरणम्** - शीतोष्णम् इत्युदाहरणम्। शीतं च उष्णं च इति लौकिकविग्रहे शीत सु उष्ण सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपः सुप्रत्ययद्वयस्य लुकि शीत उष्ण इति स्थिते गुणे शीतोष्णशब्दो भवति। शीतोष्ण इत्यत्र अद्रव्यवाचिनोः विरुद्धार्थयोः द्वन्द्वत्वात् तयोर्द्वन्द्वस्य प्रोक्तसूत्रेण विकल्पेन एकवद्भावो भवति। ततः शीतोष्णशव्दात् सौ "स नपुंसकम्" इत्यनेन नपुंसकत्वे

प्रक्रियाकार्ये शीतोष्णम् इति रूपम्। एकवद्भावस्य वैकल्पिकत्वात् तदभावपक्षे औप्रत्यये शीतोष्णे इति रूपं भवति।



## पाठगतप्रश्नाः-४

३२. "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्रस्यार्थः कः।

३३. "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्रेण प्राण्यङ्गानामेकवद्भावे किमुदाहरणम्।

३४. "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्रेण तूर्याङ्गानामेकवद्भावे किमुदाहरणम्।

३५. "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्रेण सेनाङ्गानामेकवद्भावे किमुदाहरणम्।

३६. "जातिरप्राणिनाम्" इति सूत्रस्यार्थः कः।

३७. "जातिरप्राणिनाम्" इति सूत्रस्य किमुदाहरणम्।

३८. "येषां च विरोधः शाश्वतिकः" इति सूत्रस्यार्थः कः।

३९. "येषां च विरोधः शाश्वतिकः" इति सूत्रस्य किमुदाहरणम्।

४०. "विप्रतिषिद्धं चानधिकरणवाचि" इति सूत्रस्यार्थः कः।

४१. "विप्रतिषिद्धं चानधिकरणवाचि" इति सूत्रस्य किमुदाहरणम्।

## [७.१०] आनङृतो द्वन्द्वे॥ (६.३.२५)

**सूत्रार्थः** - द्वन्द्वे विद्यायोनिसम्बन्धवाचिनाम् ऋदन्तानाम् उत्तरपदे परे आनङ् भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण आनङ् विधीयते। पदत्रयात्मके सूत्रेऽस्मिन् आनङ् इति प्रथमैकवचनान्तम् ऋतः इति षष्ठ्येकवचनान्तं द्वन्द्वे इति च सप्तम्येकवचनान्तं पदम्। "अलुगुत्तरपदे" इत्यतः उत्तरपदे इत्यनुवर्तते। "ऋतो विद्यायोनिसम्बन्धेभ्यः" इत्यस्मात् सूत्राद् विद्यायोनिसम्बन्धेभ्यः इति पदमनुवर्तते। तच्च पदं षष्ठ्यन्ततया विपरिणमते। ऋतः इत्यत्र तदन्तविधौ ऋदन्तानाम् इति लभ्यते। एवं सूत्रार्थो भवति - "द्वन्द्वसमासे विद्यायोनिसम्बन्धवाचिनाम् ऋदन्तानाम् उत्तरपदे परे आनङ् भवति" इति।

अयं च आनङ् इत्यादेशः ङित्त्वात् "ङिच्च" इति परिभाषया अन्त्यस्य अल एव स्थाने भवति।

**उदाहरणम्** - विद्यासम्बन्धवाचित्वे उदाहरणं होतापोतारौ इति। होता च पोता च इति लौकिकविग्रहे होतृ सु पोतृ सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि होतृ पोतृ इति भवति। विद्यासम्बन्धिवाचिनः ऋदन्तस्य होतृशब्दस्य पोतृ इत्युत्तरपदे परे "ङिच्च" इति परिभाषया परिष्कृतेन प्रोक्तसूत्रेण ऋकारस्य आनङि होत् आनङ् पोतृ इति भवति। आनङः ङकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे,



नकाराकारस्योच्चारणार्थकत्वाच्च होतान् पोतृ इति भवति। तदा "न लोपः प्रातिपदिकान्तस्य" इत्यनेन होतान् इत्यत्र अन्त्यस्य नकारस्य लोपे होतापोतृशब्दो निष्पद्यते। ततः प्रथमाद्विवचनविवक्षायाम् औप्रत्यये होतापोतारौ इति रूपम्।

एवमेव योनिसम्बन्धवाचित्वे उदाहरणं मातापितरौ इति। माता च पिता च इति लौकिकविग्रहे मातृ सु पितृ सु इत्यलौकिकविग्रहे इतरेतरद्वन्द्वसमासे प्रक्रियाकार्ये मातृ पितृ इति स्थिते प्रोक्तसूत्रेण मातृशब्दस्य ऋकारस्यानङि प्रक्रियाकार्ये मातापितरौ इति रूपम्।

मातापितरौ इत्यत्र इतरेतरद्वन्द्वसमासः। तस्य च समासस्य अपवाद एकशेषः। तस्य एकशेषस्य विधानाय प्रवृत्तम् -

## [७.११] पिता मात्रा॥ (१.२.७०)

**सूत्रार्थः** - मातृशब्देन सहोक्तौ पितृशब्दः विकल्पेन अवशिष्यते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण द्वन्द्वसमासापवाद एकशेषो विधीयते।पदद्वयात्मके सूत्रेऽस्मिन् पिता इति प्रथमैकवचनान्तं मात्रा इति च तृतीयैकवचनान्तं पदम्। "सरूपाणामेकशेष एकविभक्तौ" इत्यस्मात् सूत्रात् शेषः इति पदमनुवर्तते। "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इत्यस्मात् सूत्राद् अन्यतरस्याम् इति पदमनुवर्तते। एवं च सूत्रार्थः- "मातृशब्देन सहोक्तौ पितृशब्दः विकल्पेन अवशिष्यते" इति।

**उदाहरणम्** - सूत्रस्यास्य उदाहरणं पितरौ इति। माता च पिता च इति लौकिकविग्रहे प्रोक्तसूत्रेण मातृपितृशब्दयोः स्थाने पितृशब्दस्य शेषो भवति। ततः "यः शिष्यते स लुप्यमानार्थाभिधायी" इति न्यायेन पितृशब्देन मातृपितृशब्दयोरर्थबोधनात् ततः प्रथमाद्विवचने औप्रत्यये पितृ औ इति भवति। ततः "ऋतो ङिसर्वनामस्थानयोः" इत्यनेन ऋकारस्य गुणे रपरत्वे पितर् औ इति जाते, सर्वसंयोगे पितरौ इति रूपं सिध्यति। एकशेषस्य वैकल्पिकत्वात् तदभावपक्षे द्वन्द्वसमासे मातापितरौ इति रूपम्।

## [७.१२] देवताद्वन्द्वे च॥ (६.३.२६)

**सूत्रार्थः** - देवतावाचिनां द्वन्द्वसमासे उत्तरपदे परे आनङ् भवति।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु इदम् विधिसूत्रम्। अनेन सूत्रेण आनङ् विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् देवताद्वन्द्वे इति सप्तम्येकवचनान्तं पदम्। चेत्यव्ययपदम्। चकारेण "आनङ्तो द्वन्द्वे" इत्यस्मात् सूत्राद् आनङः ग्रहणं भवति। "अलुगुत्तरपदे" इत्यतः उत्तरपदे इत्यनुवर्तते। देवतानां द्वन्द्वं देवताद्वन्द्वं तस्मिन् इति षष्ठीतत्पुरुषसमासः। देवताशब्देन देवतावाचकानां शब्दानां ग्रहणम्। एवं सूत्रार्थो भवति - "देवतावाचिनां द्वन्द्वसमासे उत्तरपदे परे आनङ् भवति" इति।

अयं च आनङ् इत्यादेशः ङित्त्वात् "ङिच्च" इति परिभाषया अन्त्यस्य अल एव स्थाने भवति।



**उदाहरणम्** - मित्रावरुणौ इत्यादिकमस्य सूत्रस्य उदाहरणम्। मित्रश्च वरुणश्च इति लौकिकविग्रहे मित्र सु वरुण सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण इतरेतरद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि मित्रवरुण इति भवति। देवतावाचिद्वन्द्वत्वाद् उत्तरपदे वरुणशब्दे परे "ङिच्च" इति परिभाषया परिष्कृतेन प्रोक्तसूत्रेण मित्रेत्यत्र रकाराकारस्य आनङि मित् र् आनङ् वरुण इति भवति। ततः ङकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे, नकाराकारस्योच्चारणार्थ-कत्वाच्च मित्रान् वरुण इति भवति। तदा "न लोपः प्रातिपदिकान्तस्य" इत्यनेन मित्रान् इत्यस्य नकारस्य लोपे निष्पन्नात् मित्रावरुणशव्दात् प्रथमाद्विवचनविवक्षायाम् औप्रत्यये मित्रावरुणौ इति रूपम्।

## [७.१३] द्वन्द्वाच्चुदषहान्तात्समाहारे॥ (५.४.१०६)

**सूत्रार्थः** - चवर्गान्ताद् दषहान्ताच्च द्वन्द्वात् समाहारे समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः टच्प्रत्ययो विधीयते।पदत्रयात्मके सूत्रेऽस्मिन् द्वन्द्वात् चुदषहान्तात् समाहारे इति पदच्छेदः। द्वन्द्वात् चुदषहान्तात् इति पदद्वयं पञ्चम्येकवचनान्तम्। समाहारे इति सप्तम्येकवचनान्तं पदम्। चुश्च दश्च षश्च हश्च एषां समाहारः चुदषहम् इति समाहारद्वन्द्वः। चुदषहम् अन्ते यस्य स चुदषहान्तः, तस्मात् चुदषहान्तात् इति बहुव्रीहिसमासः। "राजाहःसखिभ्यष्टच्" इत्यस्मात् सूत्रात् टच् इत्यनुवर्तते। "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। चुशब्देन चवर्गस्य ग्रहणम्। दषहेत्यत्र अकार उच्चारणार्थकः। एवं सूत्रार्थो भवति - "चवर्गान्ताद् दषहान्ताच्च द्वन्द्वात् समाहारे समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति" इति।

**उदाहरणम्** - चवर्गान्तात् टचः वाक्त्वचम् इत्युदाहरणम्। वाक् च त्वक् चानयोः समाहारः इति लौकिकविग्रहे वाच् सु त्वच् सु इत्यलौकिकविग्रहे "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण समाहारद्वन्द्वसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि वाच् त्वच् इति भवति। ततः अन्तर्वर्तिनीं विभक्तिमाश्रित्य "चोः कुः" इत्यनेन वाच् इत्यस्य चकारस्य कुत्वे ककारे वाक् त्वच् इति भवति। चवर्गान्तत्वाद् वाक्त्वच् इति समाहारद्वन्द्वस्य प्रोक्तसूत्रेण टचि वाक्त्वच् टच् इति भवति। टचः टकारस्य "चुटू" इत्यनेन चकारस्य च "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे वाक्त्वच् अ इति भवति। तदा सर्वसंयोगे निष्पन्नात् वाक्त्वचशब्दात् "स नपुंसकम्" इत्यनेन नपुंसके विद्यमानात् सौ प्रक्रियाकार्ये वाक्त्वचम् इति रूपम्।

दकारान्तात् टच उदाहरणं शमी च दृषत् चानयोः समाहारः शमीदृषदम् इति। षकारान्तात् टच उदाहरणं वाक् च त्विट् चानयोः समाहारः वाक्त्विषम् इति। हकारान्तात् टच उदाहरणं छत्रं च उपानत् चानयोः समाहारः छत्रोपानहम् इति।





## पाठगतप्रश्नाः-५

४२. "आनङृतो द्वन्द्वे" इति किम्प्रकारकं सूत्रम्।

४३. "आनङृतो द्वन्द्वे" इति सूत्रस्यार्थः कः।

४४. "आनङृतो द्वन्द्वे" इति सूत्रस्य किमुदाहरणम् ।

४५. "पिता मात्रा" इति सूत्रेण किं विधीयते।

४६. "पिता मात्रा" इति सूत्रस्यार्थः कः।

४७. "पिता मात्रा" इति सूत्रस्य किमुदाहरणम्।

४८. "देवताद्वन्द्वे च" इति सूत्रेण किं विधीयते।

४९. "देवताद्वन्द्वे च" इति सूत्रस्यार्थः कः।

५०. "देवताद्वन्द्वे च" इति सूत्रस्य किमुदाहरणम्।

५१. "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति सूत्रेण किं विधीयते।

५२. "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति सूत्रस्यार्थः कः।

५३. "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति सूत्रस्य किमुदाहरणम्।



## पाठसारः

अस्मिन् पाठे द्वन्द्वसमासः प्रस्तुतः। बहुव्रीहिसमासात्परं समासस्य भेदो भवति द्वन्द्वः। "चार्थे द्वन्द्वः" इति द्वन्द्वसमासविधायकं सूत्रम्। प्रायेण उभयपदार्थप्रधानः अयं समासः। द्वन्द्वसमासः इतरेतरद्वन्द्वः समाहारद्वन्द्वः द्विधा विभक्तः। अत्र "चार्थे द्वन्द्वः" इति सूत्रस्य व्याख्यानावसरे चार्थाः प्रतिपादिताः। समुच्चयः अन्वाचयः इतरेतरयोगः समाहारः च चार्थः। परस्परनिरपेक्षाणाम् अनेकपदानां यत्र एकस्मिन् क्रियापदे अन्वयः भवति तत्र समुच्चयः चार्थः। अन्यतरस्य एकस्य पदस्य यत्र अप्रधानत्वेन क्रियायामन्वयः, अन्यस्य च प्रधानत्वेन तत्र चार्थः अन्वाचयः। परस्परापेक्षितानां समुदितानाम् एकस्मिन् क्रियापदे अन्वयः यत्र तत्र चार्थः इतरेतरयोगः। एकीभूय क्रियायामन्वयः यत्र तत्र चार्थः समाहारः। समुच्चये अन्वाचये च सामर्थ्याभावात् न समासो भवति। किन्तु इतरेतरयोगस्य समाहारस्य च चार्थस्य सामर्थ्यसत्त्वाद् भवति समासः। एवं "चार्थे द्वन्द्वः" इति सूत्रेण इतरेतरयोगे समाहारे च द्वन्द्वसमासो भवति।

ततः "राजदन्तादिषु परम्" इति पूर्वनिपातविधायकं सूत्रं प्रस्तुतम्। तद्विषयकतया "धर्मादिष्वनियमः" इति वार्तिकमपि व्याख्यातम्। ततः द्वन्द्वे घिसंज्ञकानां पूर्वप्रयोगविधायकं "द्वन्द्वे घि" इति सूत्रं व्याख्यातम्। ततः "अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे" इति, "ऋतुनक्षत्राणां



समाक्षराणामानुपूर्व्येण" इति, "लघ्वक्षरं पूर्वम्" इति, "अभ्यर्हितं च" इति, "वर्णानामानुपूर्व्येण" इति, "भ्रातुर्ज्यायसः" इति,"संख्याया अल्पीयस्याः" इति पूर्वनिपातविधायकानि वार्तिकानि व्याख्यातानि।

ततः द्वन्द्वे एकवद्भावविधायकानि "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति, "जातिरप्राणिनाम्" इति, "येषां च विरोधः शाश्वतिकः" इति सूत्राण्यपि व्याख्यातानि।

द्वन्द्वसमासप्रसङ्गे मातापितरौ इत्यत्र उत्तरपदे परे आनङ्-विधायकम् "आनङृतो द्वन्द्वे" इति सूत्रमपि व्याख्यातम्। अत्र च द्वन्द्वापवादस्य एकशेषस्य विधायकं "पिता मात्रा" इति सूत्रमपि व्याख्यातम्। मित्रावरुणौ इत्यादी आनङादेशविधायकं "देवताद्वन्द्वे च" इति सूत्रं ततः प्रतिपादितम्। ततः समासान्तस्य टच्प्रत्ययस्य विधायकं "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति सूत्रं प्रतिपादितम्। एवं द्वन्द्वसमासः अस्मिन् पाठे प्रतिपादितः।



## पाठान्तप्रश्नाः

१. "चार्थे द्वन्द्वः" इति सूत्रस्य व्याख्यां कुरुत।
२. "द्वन्द्वे घि" इति सूत्रस्य व्याख्यां कुरुत।
३. "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्रस्य व्याख्यां कुरुत।
४. "विप्रतिषिद्धं चानधिकरणवाचि" इति सूत्रस्य व्याख्यां कुरुत।
५. "येषां च विरोधः शाश्वतिकः" इति सूत्रस्य व्याख्यां कुरुत।
६. "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति सूत्रस्य व्याख्यां कुरुत।
७. चार्थाः के। तान् विवृणुत।
८. द्वन्द्वे पूर्वपरनिपातः इति विषयमाश्रित्य टिप्पणीं लिखत।
९. समाहारद्वन्द्वे एकवद्भावः इति विषयमाश्रित्य टिप्पणीं लिखत।
१०. धवखदिरौ इति रूपं साधयत।
११. पाणिपादम् इति रूपं साधयत।
१२. शीतोष्णम् इति रूपं साधयत।
१३. अहिनकुलम् इति रूपं साधयत।





## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते।

२. "समुच्चयान्वाचयेतरेतरयोग-समाहाराश्चार्थाः।

३. परस्परनिरपेक्षाणाम् अनेकपदानां यत्र एकस्मिन् क्रियापदे अन्वयः भवति तत्र समुच्चयः चार्थः। ईश्वरं गुरुं च भजस्व इति उदाहरणम्।

४. अन्यतरस्य एकस्य पदस्य यत्र अप्रधानत्वेन क्रियायामन्वयः, अन्यस्य च प्रधानत्वेन तत्र चार्थः अन्वाचयः। भिक्षाम् अट गां च आनय इति।

५. परस्परापेक्षितानां समुदितानाम् एकस्मिन् क्रियापदे अन्वयः यत्र तत्र चार्थः इतरेतरयोगः। धवखदिरौ इति छिन्धि इति उदाहरणम्।

६. एकीभूय क्रियायामन्वयः यत्र तत्र चार्थः समाहारः। पाणिपादम् इति उदाहरणम्।

७. परस्परम् अन्वयाभावात्।

८. राजदन्तादिषु पूर्वप्रयोगार्हं परं भवति।

९. राजदन्तः इति।

१०. धर्मादिषु समस्यमानयोः अन्यतरस्य पूर्वनिपातो परनिपातो वा भवति।

११. अर्थधर्मौ धर्मार्थौ इति उदाहरणम्।

१२. द्वन्द्वे घिसंज्ञकं पूर्वं प्रयुज्यते।

१३. हरिशब्दः घिसंज्ञकः अतः तस्य पूर्वनिपातः।

### उत्तराणि-२

१४. अनेकस्य घिसंज्ञकस्य पदस्य द्वन्द्वप्राप्तौ सत्यामेकस्य घिसंज्ञकस्य पूर्वनिपातनियमः,अन्यस्मिन् घिसंज्ञकविषये पूर्वनिपातस्य विकल्पो भवति।

१५. हरिगुरुहराः हरिहरगुरवः इत्यादिकमेतस्य वार्तिकस्योदाहरणम्।

१६. द्वन्द्वे यद् अजादि अदन्तं च तत् पूर्वं भवति।

१७. ईशकृष्णौ।

१८. द्वन्द्वे अल्पाच्तरं पदं पूर्वं भवति।

१९. शिवकेशवौ इति

२०. समानसंख्याच्कानाम् ऋतूनां नक्षत्राणां च द्वन्द्वे आनुपूर्व्येण क्रमेण निपातो वक्तव्यः।

२१. हेमन्तशिशिरवसन्ताः।

२२. लघ्वक्षरं पदं द्वन्द्वे पूर्वं प्रयोज्यम्।



२३. कुशकाशम्।

## उत्तराणि-३

२४. अभ्यर्हितं पदं द्वन्द्वे पूर्वं प्रयोज्यम्।

२५. वासुदेवार्जुनौ।

२६. द्वन्द्वे वर्णानामानुपूर्व्येण पूर्वनिपातो वक्तव्यः।

२७. ब्राह्मणक्षत्रियविट्शूद्राः।

२८. द्वन्द्वे ज्येष्ठभ्रातृवाचकस्य पदस्य पूर्वनिपातो वक्तव्यः।

२९. युधिष्ठिराजुर्नौ।

३०. समासे अल्पसंख्यावाचकस्य पूर्वनिपातो वक्तव्यः।

३१. द्वादश।

## उत्तराणि-४

३२. प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्व एकवद् भवति।

३३. पाणिपादम्।

३४. मार्दङ्गिकपाणविकम्।

३५. रथिकाश्वहरोम्।

३६. प्राणिवर्जितजातिवाचकानां द्वन्द्व एकवद् भवति।

३७. धानाशष्कुलि।

३८. येषां विरोधः शाश्वतिकः तेषां द्वन्द्व एकवद् भवति।

३९. अहिनकुलम्।

४०. विरुद्धार्थानाम् अद्रव्यवाचिनां द्वन्द्व एकवद् विकल्पेन भवति।

४१. शीतोष्णम्।

## उत्तराणि-५

४२. विधिसूत्रम्।

४३. विद्यायोनिसम्बन्धवाचिनाम् ऋदन्तानाम् उत्तरपदे परे आनङ् भवति।

४४. होतापोतारौ।

४५. द्वन्द्वसमासापवाद एकशेषः।

४६. मातृशब्देन सहोक्तौ पितृशब्दः विकल्पेन अवशिष्यते।

४७. पितरौ।

४८. आनङ्।

४९. देवतावाचिनां द्वन्द्वसमासे उत्तरपदे परे आनङ् भवति।



५०. मित्रावरुणौ।

५१. समासान्तः टच्प्रत्ययः विधीयते।

५२. चवर्गान्ताद् दषहान्ताच्च द्वन्द्वात् समाहारे समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो भवति।

५३. शमीदृषदम्।

॥ इति सप्तमः पाठः॥



८

# प्रकीर्ण समासप्रकरणम्

## प्रस्तावना

आद्येषु पाठेषु केवलसमासः अव्ययीभावसमासः तत्पुरुषसमासः द्वन्द्वसमासश्च वर्णितः। तत्र तत्तत्समासपर्यालोचनावसरे एव समासान्तानां कार्याणां विधायकानि निषेधकानि च सूत्राणि उल्लिखितानि। अस्मिन् पाठे सर्वसमासोपकारकाणि यानि समासान्तकार्यविधायकानि सूत्राणि तेषामुल्लेखः अस्ति। किञ्च, समासान्तकार्यनिषेधकानि सूत्राणि अपि अत्र संगृहीतानि।

ततः पदविधित्वं वृत्तेरस्ति अतः वृत्तिर्नाम का इति जिज्ञासा। ततः वृत्तिस्वरूपं तद्भेदाः विग्रहस्वरूपं तद्भेदाः च अस्मिन् पाठे वर्णिताः। ततः वृत्तिषु अन्यतमस्य समासस्य संक्षेपेण स्वरूपं प्रतिपाद्य तद्भेदा वर्णिताः। तत्तत्समासानां समासान्तकार्येषु कीदृशं महत्त्वं तदपि प्रतिपादितम् अस्मिन् पाठे।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- सर्वसमासान्तविधायकानि सूत्राणि जानीयात्।
- सर्वसमासान्तनिषेधकानि सूत्राणि जानीयात्।
- वृत्तिस्वरूपं जानीयात्।
- विग्रहस्वरूपं जानीयात्।
- वृत्तिभेदान् विग्रहभेदान् च जानीयात्।
- समासभेदान् तल्लक्षणानि च जानीयात्।

अथ सर्वसमासेषु उपकारकाणि समासान्तकार्यविधायकानि सूत्राणि आलोच्यन्ते -

### [८.१] ऋक्पूरब्धूःपथामानक्षे।।॥ (५.४.७४)

**सूत्रार्थः** - ऋगाद्यन्तस्य समासस्य अप्रत्ययः अन्तावयवो भवति, अक्षे या धूः तदन्तस्य न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अप्रत्ययो विधीयते।



पदत्रयात्मके सूत्रेऽस्मिन् ऋक्पूरब्धूःपथाम् अ अनक्षे इति पदच्छेदः। अत्र ऋक्पूरब्धूःपथाम् इति षष्ठीबहुवचनान्तम्, अ इति लुप्तप्रथमैकवचनान्तम् अनक्षे इति च सप्तम्येकवचनान्तं पदम्। ऋक् च पूश्च आपश्च धूश्च पन्थाश्च ऋक्पूरब्धूःपन्थानः, तेषाम् ऋक्पूरब्धूःपथाम् इति इतरेतरद्वन्द्वसमासः। न अक्षः अनक्षः, तस्मिन् अनक्षे इति नञ्तत्पुरुषसमासः। सम्बन्धस्याधिकरणविवक्षायामत्र सप्तमी। सूत्रे "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। समासस्य अन्तः समासान्तः। ऋक्पूरब्धूःपथाम् इत्यस्य विशेष्यत्वात् समासस्येत्यत्र वचनविपरिणामेन समासानाम् इति भवति। ततः ऋक्पूरब्धूःपथाम् इत्यत्र तदन्तविधौ ऋगाद्यन्तानां समासानाम् इत्यन्वयो भवति। अनक्षे इति निषेधः साधारणतया यद्यप्युक्तः तथापि अन्यैः सह निषेधासम्भवात् धुर् इत्यनेनैव सम्बन्धः स्वीक्रियते। एवं सूत्रार्थो भवति - "ऋगाद्यन्तस्य समासस्य अप्रत्ययः अन्तावयवः भवति, परन्तु अक्षशब्दविषये धुरन्तः यः तस्मान्न भवति" इति।

सूत्रे अनक्षे इति प्रतिषेधात् अक्षशब्देन धुर् इत्यस्य समासे न समासान्तः। तथाहि अक्षस्य धूः इति विग्रहे प्रक्रियाकार्ये अक्षधुर् इति जाते अनक्षे इत्यनेन न अप्रत्ययः। ततः सौ प्रक्रियाकार्ये अक्षधूः इति रूपम्।

**उदाहरणम्** - ऋक्शब्दान्तसमासस्य समासान्ते उदाहरणम् अर्धर्चः इति। ऋचः अर्धम् इति लौकिकविग्रहे ऋच् ङस् अर्ध सु इत्यलौकिकविग्रहे "अर्धं नपुंसकम्" इत्यनेन सूत्रेण तत्पुरुषसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि, अर्धशब्दस्य पूर्वनिपाते "आद् गुणः" इत्यनेन सूत्रेण अकारस्य ऋकारस्य च स्थाने गुणे रपरत्वे अर्धर्च् इति भवति। ततः प्रोक्तसूत्रेण ऋगन्तस्य अर्धर्च् इति शब्दस्य समासान्तः अप्रत्ययो भवति। ततः अर्धर्च् अ इति जाते सर्वसंयोगे निष्पन्नस्य अर्धर्चशब्दस्य "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन परवल्लिङ्गत्वे प्राप्ते "अर्धर्चाः पुंसि च" इत्यनेन विकल्पेन पुंलिङ्गे सौ अर्धर्चः इति रूपम्। नपुंसकलिङ्गे सौ अर्धर्चम् इति रूपम्।

पुर्-शब्दान्तसमासस्य समासान्ते उदाहरणं विष्णोः पूः इति विग्रहे विष्णुपुरम् इति। अप्-शब्दान्तसमासस्य समासान्ते उदाहरणं विमला आपो यस्य तद् विमलापं सरः इति। धुर्-शब्दान्तसमासस्य समासान्ते उदाहरणं राज्ञः धूः राजधुरा इति। पथिन्-शब्दान्तसमासस्य समासान्ते उदाहरणं सख्युः पन्थाः सखिपथः इति।

## [८.२] अच् प्रत्यन्ववपूर्वात् सामलोम्नः॥ (५.४.७४)

**सूत्रार्थः** - प्रत्यन्ववपूर्वात् सामलोमान्तात् समासात् समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अच्प्रत्ययो विधीयते। पदत्रयात्मके सूत्रेऽस्मिन् अच् इति प्रथमैकवचनान्तं पदम्। प्रत्यन्ववपूर्वात् सामलोम्नः इति पदद्वयं पञ्चम्येकवचनान्तम्। प्रत्यन्ववपूर्वात् इत्यस्य तात्पर्यं प्रति अनु अव इति पूर्वपदं यस्य तस्मात् इति। सूत्रे "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। प्रत्यन्ववपूर्वाद् इत्यस्य पदस्य विशेष्यं समासाद्



इति। समासाद् इत्यस्य विशेषणत्वात् तदन्तविधौ सामलोम्नः इत्यस्य सामलोमान्ताद् इत्यर्थो भवति। एवं च **सूत्रार्थः** - "प्रत्यन्ववपूर्वात् सामलोमान्तात्समासात् समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति" इति।

**उदाहरणम्** - सामान्तस्य समासस्य समासान्ते उदाहरणं प्रतिसामम् इति। प्रतिगतं साम इति लौकिकविग्रहे प्रति सामन् सु इत्यलौकिकविग्रहे "कुगतिप्रादयः" इत्यनेन सूत्रेण प्रादितत्पुरुषसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि प्रतिसामन् इति भवति। ततः प्रोक्तसूत्रेण प्रतिपूर्वात् सामान्तात् प्रतिसामन् इत्यस्मात् समासात् अच्प्रत्ययो भवति। अचः चकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे प्रतिसामन् अ इति भवति। ततः "यचि भम्" इत्यनेन पूर्वस्य प्रतिसामन् इत्यस्य भसंज्ञायां "नस्तद्धिते" इत्यनेन टेरनः लोपे प्रतिसाम् अ इति जाते सर्वसंयोगे निष्पन्नस्य प्रतिसामशब्दस्य "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन परवल्लिङ्गत्वे प्राप्ते नपुंसके सौ प्रतिसामम् इति रूपम्।

लोमान्तस्य समासान्ते अवलोमम् इत्युदाहरणम्। अवहीनं लोम इति लौकिकविग्रहः।

## [८.३] अक्ष्णोऽदर्शनात्॥ (५.४.७६)

**सूत्रार्थः** - अचक्षुःपर्यायाद् अक्ष्णः समासान्तः तद्धितसंज्ञकः अचप्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अच्प्रत्ययो विधीयते।पदद्वयात्मके सूत्रेऽस्मिन् अक्ष्णः अदर्शनात् इति पदच्छेदः। अत्र अक्ष्णः इति अदर्शनात् इति च पदद्वयं पञ्चम्येकवचनान्तम्। "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" इत्यस्मात् सूत्राद् अच् इति पदमनुवर्तते। सूत्रे "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। दृश्यते अनेनेति दर्शनमिति करणे ल्युट्। नेत्रमित्यर्थः। न दर्शनम् अदर्शनम्, तस्माद् अदर्शनाद् इति नञ्तत्पुरुषसमासः। नेत्रवाचिभिन्नाद् अचक्षुःपर्यायाद् इति। समासस्यान्तः समासान्तः। समासस्येत्यनेनान्वयाद् विभक्तिविरिणामेन तदन्तविधौ अचक्षुःपर्यायान्तस्य समासस्य इति लभ्यते। एवं सूत्रार्थो भवति - "अचक्षुःपर्यायाद् अक्षिशब्दात् समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं गवाक्षः इति। गवाम् अक्षि इव इति लौकिकविग्रहे गो आम् अक्षि सु इत्यलौकिकविग्रहे "षष्ठी" इत्यनेन सूत्रेण गो आम् इति षष्ठ्यन्तं अक्षि सु इति सुबन्तेन सह षष्ठीतत्पुरुषसमाससंज्ञं भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि गो अक्षि इति स्थिते "ङिच्च" इति परिभाषया परिष्कृतेन "अवङ् स्फोटायनस्य" इत्यनेन गोशब्दस्य ओकारस्यावङि अनुबन्धलोपे ग् अव अक्षि इति भवति। ततः अकारद्वयस्य स्थाने सवर्णदीर्घे आकारे गवाक्षि इति निष्पद्यते। गवाक्षि इत्यस्य अचक्षुःपर्यायाक्षिशब्दान्तत्वात् ततः प्रोक्तसूत्रेण अच्प्रत्यये अनुबन्धलोपे गवाक्षि अ इति भवति। तदा गवाक्षिशब्दस्य "यचि भम्" इत्यनेन भसंज्ञायां "यस्येति च" इत्यनेन इकारस्य लोपे सर्वसंयोगे निष्पन्नात् गवाक्षशब्दात् लोकप्रसिद्धत्वात् पुंसि विद्यमानात् सौ प्रक्रियाकार्ये गवाक्षः इति रूपम्।





## पाठगतप्रश्नाः-१

१. "ऋक्पूरब्धूःपथामानक्षे" इति सूत्रेण किं विधीयते।

२. "ऋक्पूरब्धूःपथामानक्षे" इति सूत्रस्यार्थः कः।

३. "ऋक्पूरब्धूःपथामानक्षे" इति सूत्रस्य किमुदाहरणम्।

४. ऋक्पूरब्धूःपथामानक्षे" इति सूत्रे अनक्षे इति पदं किमर्थम्।

५. "अच् प्रत्यन्ववपूर्वात् सामलोम्नः" इति सूत्रेण किं विधीयते।

६. "अच् प्रत्यन्ववपूर्वात् सामलोम्नः" इति सूत्रस्यार्थः कः।

७. "अच् प्रत्यन्ववपूर्वात् सामलोम्नः" इति सूत्रस्य किमुदाहरणम्।

८. "अक्ष्णोऽदर्शनात्" इति सूत्रेण किं विधीयते।

९. "अक्ष्णोऽदर्शनात्" इति सूत्रस्यार्थः कः।

१०. "अक्ष्णोऽदर्शनात्" इति सूत्रस्य किमुदाहरणम्।

## [८.४] उपसर्गादध्वनः॥ (५.४.८५)

**सूत्रार्थः** - प्रादिभ्यः अध्वनः समासान्तः तद्धितसंज्ञकः अचप्रत्ययो भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तः अच्प्रत्ययो विधीयते।पदद्वयात्मके सूत्रेऽस्मिन् उपसर्गाद् अध्वनः इति पदच्छेदः। अत्र उपसर्गाद् इति अध्वनः इति च पदद्वयं पञ्चम्येकवचनान्तम्। "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" इत्यस्मात् सूत्राद् अच् इति पदमनुवर्तते। सूत्रे "प्रत्ययः", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। उपसर्गपदेन प्रादयो गृह्यन्ते। एवं सूत्रार्थो भवति - "प्रादिपूर्वपदाद् अध्वन्नन्तात् समासाद् समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं प्राध्वो रथः इति। प्रगतः अध्वानम् इति लौकिकविग्रहे प्र अध्वन् अम् इत्यलौकिकविग्रहे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन वार्तिकेन प्रादितत्पुरुषसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि प्र अध्वन् इति स्थिते अकारद्वयस्य स्थाने सवर्णदीर्घे आकारे प्राध्वन् इति निष्पद्यते। प्रादिपूर्वकाध्वन्नन्तत्वात् प्राध्वन् इति शब्दस्य ततः प्रोक्तसूत्रेण समासान्तः अच्प्रत्ययो भवति। अचः चकारस्य "हलन्त्यम्" इत्यनेन इत्संज्ञायां "तस्य लोपः" इत्यनेन लोपे प्राध्वन् अ इति भवति। प्राध्वन्शब्दस्य "यचि भम्" इत्यनेन भसंज्ञायां "नस्तद्धिते" इत्यनेन भसंज्ञकस्य प्राध्वन्शब्दस्य टेरनः लोपे प्राध्व् अ इति जाते, सर्वसंयोगे निष्पन्नात् प्राध्वशब्दात् पुंसि सौ प्रक्रियाकार्ये प्राध्वः इति रूपम्।



समासान्तकार्याणां निषेधकानि सूत्राण्यधः प्रस्तूयन्ते -

## [८.५] न पूजनात्॥ (५.४.६९)

**सूत्रार्थः** - पूजनार्थात् परं यत् प्रातिपदिकं तदन्तात् समासात् समासान्ताः न भवन्ति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तनिषेधो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् नेत्यव्ययपदं पूजनात् इति पञ्चम्येकवचनान्तं पदम्। सूत्रे "प्रत्ययः", "ङ्याप्प्रातिपदिकात्", "परश्च", "तद्धिताः", "समासान्ताः" इत्येतानि अधिकृतानि। पूजनशब्देन पूजनार्थकस्य ग्रहणम्। पूजनात् प्रातिपदिकात् इत्यनेनान्वयः। तेन पूजनार्थात्परं यत्प्रातिपदिकं तस्माद् इति लभ्यते। समासस्य अन्ताः समासान्ताः। समासपदेनान्वयात् प्रातिपदिकान्तात् समासात् इति लभ्यते। एवं सूत्रार्थो भवति - "पूजनार्थात् परं यत् प्रातिपदिकं तदन्तात् समासात् समासान्ताः न भवन्ति" इति। "स्वतिभ्यामेव" इति भाष्येष्टिबलेन सु अति इत्युपसर्गद्वयस्य पूजनार्थस्यैव सूत्रे ग्रहणम्। इष्टिः नाम इच्छाप्रतिपादकं वचनम्।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं सुराजा इति। सुशोभनो राजा इति लौकिकविग्रहे सुशोभन सु राजन् सु इत्यलौकिकविग्रहे "कुगतिप्रादयः" इत्यनेन सूत्रेण प्रादितत्पुरुषसमासो भवति। ततः समासस्य प्रातिपदिकत्वात् सुब्लुकि, सुराजन् इति निष्पद्यते। सुराजन् इत्यस्मात् "राजाहःसखिभ्यष्टच्" इत्यनेन टचि प्राप्नोति। परन्तु सुराजन् इत्यत्र सु इति पूजनार्थकम्। एवं सुराजन् इत्यस्य पूजनार्थपूर्वपदकत्वात् प्रोक्तसूत्रेण टचः निषेधे सुराजन् इति भवति। ततः सुराजन् इत्यस्मात् पुंसि सौ प्रक्रियाकार्ये सुराजा इति रूपम्।

एवमेव अतिशयितो राजा अतिराजा इत्यत्र न समासान्तप्रत्ययः।

## [८.६] किमः क्षेपे॥ (५.४.७०)

**सूत्रार्थः** - निन्दार्थकात् किंशब्दात् परं यत् प्रातिपदिकं तदन्तात् समासात् समासान्ताः न भवन्ति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तनिषेधो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् किमः इति पञ्चम्येकवचनान्तं क्षेपे इति सप्तम्येकवचनान्तं पदम्। सूत्रे "प्रत्ययः", "ङ्याप्प्रातिपदिकात्", "परश्च", "तद्धिताः" "समासान्ताः" इत्येतानि अधिकृतानि। क्षेपो नाम निन्दा। किमः इत्यस्य प्रातिपदिकात् इत्यनेनान्वयः। तेन पूजनार्थात्परं यत्प्रातिपदिकम् तस्माद् इति लभ्यते। समासस्य अन्ताः समासान्ताः। समासपदेनान्वयात् प्रातिपदिकान्तात् समासात् इति लभ्यते। एवं **सूत्रार्थः** - "निन्दार्थकात् किंशब्दात् परं यत् प्रातिपदिकं तदन्तात् समासात् समासान्ताः न भवन्ति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं किंराजा इति। कुत्सितो राजा इति लौकिकविग्रहे किम् सु राजन् सु इत्यलौकिकविग्रहे "किं क्षेपे" इत्यनेन सूत्रेण तत्पुरुषसमासो भवति। ततः किमित्यस्य पूर्वनिपाते समासस्य प्रातिपदिकत्वात् सुब्लुकि किंराजन् इति भवति। किंराजन् इत्यस्मात् "राजाहःसखिभ्यष्टच्"



इत्यनेन टचि प्राप्ते किंपूर्वपदकत्वात् प्रोक्तसूत्रेण तन्निषेधे किंराजन् इति भवति। किंराजन् इत्यस्मात् पुंसि सौ किंराजा इति रूपम्।

## [८.७] नञस्तत्पुरुषात्॥ (५.४.७१)

**सूत्रार्थः** - नञ्तत्पुरुषसमासात् समासान्ताः न भवन्ति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तनिषेधो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् नञः तत्पुरुषात् इति पदद्वयं पञ्चम्येकवचनान्तम्। सूत्रे "प्रत्ययः", "परश्च", "तद्धिताः" "समासान्ताः" इत्येतानि अधिकृतानि। एवं सूत्रार्थो भवति - "नञ्तत्पुरुषसमासात् समासान्ताः न भवन्ति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं अराजा इति। न राजा इति लौकिकविग्रहे न राजन् सु इत्यलौकिकविग्रहे "नञ्" इत्यनेन सूत्रेण तत्पुरुषसमासे, प्रातिपदिकत्वात् सुब्लुकि, नलोपे अराजन् इति निष्पद्यते।अराजन् इत्यस्मात् "राजाहःसखिभ्यष्टच्" इत्यनेन टचि प्राप्ते नञ्तत्पुरुषत्वात् प्रोक्तसूत्रेण तन्निषेधे अराजन् इत्यस्मात् पुंसि सौ प्रक्रियाकार्ये अराजा इति रूपम्।

## [८.८] पथो विभाषा॥ (५.४.७२)

**सूत्रार्थः** - पथिन्शब्दान्तात् नञ्तत्पुरुषसमासात् विकल्पेन समासान्ताः न भवन्ति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अनेन सूत्रेण समासान्तनिषेधो विधीयते। पदद्वयात्मके सूत्रेऽस्मिन् पथः पञ्चम्येकवचनान्तं विभाषा इति च विकल्पबोधकम् अव्ययपदम्। सूत्रे "प्रत्ययः", "परश्च", "तद्धिताः" "समासान्ताः" इत्येतानि अधिकृतानि। "नञस्तत्पुरुषात्" इति सूत्रमनुवर्तते। पथिन्शब्दस्य तत्पुरुषादित्यनेनान्वयात् तदन्तविधौ पथिन्शब्दान्तात् तत्पुरुषात् इति लभ्यते। एवं सूत्रार्थो भवति - "पथिन्शब्दान्तात् नञ्तत्पुरुषसमासात् विकल्पेन समासान्ताः न भवन्ति" इति।

**उदाहरणम्** - अस्य सूत्रस्योदाहरणं अपन्थाः इति। न पन्थाः इति लौकिकविग्रहे न पथिन् सु इत्यलौकिकविग्रहे "नञ्" इत्यनेन सूत्रेण तत्पुरुषसमासे, प्रातिपदिकत्वात् सुब्लुकि, नलोप अपथिन् इति निष्पद्यते। अरापथिन् इत्यस्मात् "ऋक्पूरब्धूःपथामानक्षे" इत्यनेन अचि प्राप्ते पथिन्शब्दान्तनञ्तत्पुरुषत्वात् प्रोक्तसूत्रेण विकल्पेन तन्निषेधे अपथिन् इत्यस्मात् पुंसि सौ प्रक्रियाकार्ये अपन्थाः इति रूपम्। निषेधस्य वैकल्पिकत्वात् तदभावपक्षे अचि अपथिन् अ इति स्थिते, भस्य टेरनो लोपे निष्पन्नस्य अपथशब्दस्य "पथः संख्याव्ययादेः" इत्यनेन नपुंसकत्वे सौ अपथम् इति रूपम्।



## पाठगतप्रश्नाः-२

११. "उपसर्गादध्वनः" इति सूत्रस्यार्थः कः।

१२. "उपसर्गादध्वनः" इति सूत्रस्य किमुदाहरणम्।



१३. "न पूजनात्" इति सूत्रस्यार्थः कः।

१४. "न पूजनात्" इति सूत्रस्य किमुदाहरणम्।

१५. "किमः क्षेपे" इति सूत्रस्यार्थः कः।

१६. "किमः क्षेपे" इति सूत्रस्य किमुदाहरणम्।

१७. "नञस्तत्पुरुषात्" इति सूत्रस्यार्थः कः।

१८. "नञस्तत्पुरुषात्" इति सूत्रस्य किमुदाहरणम्।

१९. "पथो विभाषा" इति सूत्रस्यार्थः कः।

२०. "पथो विभाषा" इति सूत्रस्य किमुदाहरणम्।

---

## ८.१) वृत्तिस्वरूपम्, तद्भेदाश्च

"समर्थः पदविधिः" इति सूत्रे पदविधिर्नाम पदसम्बन्धी विधिः इति। अर्थात् पदोद्देश्यकविधिः इति। पदोद्देश्यकविधित्वं वृत्तीनामस्ति। वृत्तिर्नाम का इति प्रश्नः समायाति। अस्मिन् प्रसङ्गे सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेनोक्तं - "कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपाः पञ्च वृत्तयः। परार्थाभिधानं वृत्तिः।" इति।

"परार्थाभिधानं वृत्तिः" इति वृत्तिलक्षणम्। परार्थस्य अभिधानं परार्थाभिधानम् इति षष्ठीतत्पुरुषसमासः। अभिधानमिति करणे ल्युट्प्रत्ययः। परार्थः नाम विग्रहवाक्यावयवपदार्थेभ्यः परः यः अर्थः स परार्थः तत्प्रतिपादिका वृत्तिः। अर्थाद् विग्रहवाक्येषु यानि पदानि सन्ति तेषामर्था भवन्ति, ततः भिन्नस्य विशिष्टैकार्थस्य प्रतिपादिका भवति वृत्तिः। एवं विग्रहवाक्यावयवपदार्थेभ्यः परः अन्यः यः विशिष्टैकार्थः, तत्प्रतिपादिका वृत्तिः। अर्थात् प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन प्रथमविगृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादिका वृत्तिः। समुदायशक्तिर्नाम एकार्थीभावसामर्थ्यम्। एवम् एकार्थीभावसामर्थ्यविशिष्टा वृत्तिः विशिष्टैकार्थं प्रतिपादयति।

वृत्तेः पञ्च भेदाः भवन्ति - कृदन्तवृत्तिः, तद्धितान्तवृत्तिः, समासवृत्तिः, एकशेषवृत्तिः सनाद्यन्तवृत्तिश्चेति। तत्र समासवृत्तौ यथा वृत्तिलक्षणसङ्गमनम्। यथा राज्ञः पुरुषः इत्यत्र राज्ञः इति पदस्य राजसम्बन्धी इत्यर्थः पुरुषः इति पदस्य च पुरुष इत्यर्थः। अत्र समासवृत्तौ सत्यां राजपुरुष इति निष्पद्यते। राजपुरुष इति पदस्यार्थो भवति राजविशिष्टपुरुषः इति।

## ८.२) विग्रहवाक्यस्वरूपम्, तद्भेदाश्च

वृत्तिलक्षणावसरे परार्थो नाम कः इति पृष्टे विग्रहवाक्यावयवपदार्थेभ्यः परः यः अर्थः इति उक्तः। तदा विग्रहः कः प्रश्नः समायाति। अस्मिन् प्रसङ्गे सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेनोक्तं - "वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विविधः। लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्साधुर्लौकिकः। प्रयोगानर्होऽसाधुरलौकिकः।" इति।



"वृत्त्यर्थावबोधकं वाक्यं विग्रहः" इति विग्रहवाक्यस्य लक्षणम्। वृत्त्यर्थस्य अवबोधकं यद् वाक्यं तदेव विग्रहः। यथा राजपुरुषः इति समासवृत्तौ राज्ञः पुरुषः इति वाक्यं तदर्थबोधकः। अतः स विग्रहः।

स च विग्रहः लौकिकः अलौकिकश्चेति द्विधा विभक्तः।

तत्र लौकिकविग्रहः परिनिष्ठितो भवति। परिनिष्ठितो नाम व्याकरणसंस्कृतः। व्याकरणेन संस्कृतानामेव पदानां प्रयोगार्हत्वात् लोके साधुत्वम्। एवं "परिनिष्ठितत्वात् साधुर्लौकिकः" इति लौकिकविग्रहवाक्यलक्षणम्। लौकिको नाम लोके प्रयोगार्हः। अलौकिकः नाम लोके प्रयोगानर्हः। अर्थात् परिनिष्ठितत्वाभावाद् यः विग्रहः लोके प्रयोगार्हं नास्ति सः अलौकिकविग्रहः। एवं "प्रयोगानर्हः असाधुरलौकिकः" इति अलौकिकविग्रहवाक्यलक्षणम्।

यथा उदाहरणं राजपुरुषः इति समासे। राज्ञः पुरुषः इति लौकिकविग्रहवाक्यम्, अस्य वाक्यस्य व्याकरणसंस्कृतत्वात् लोके प्रयोगार्हत्वात्। अत्र राजन् ङस् पुरुष सु इत्यलौकिकविग्रहवाक्यम्। अस्य वाक्यस्य व्याकरणसंस्कृतत्वाभावात् लोके प्रयोगार्हत्वं नास्ति।



## पाठगतप्रश्नाः-३

२१. वृत्तेः किं लक्षणम्।

२२. वृत्तेः कति भेदाः।

२३. विग्रहो नाम कः।

२४. विग्रहस्य कति भेदाः के च ते।

२५. सोदाहरणं लौकिकविग्रहलक्षणं लिखत।

२६. सोदाहरणम् अलौकिकविग्रहलक्षणं लिखत।

## ८.३) समासभेदाः

स च समासः नित्यः अनित्यश्चेति द्विधा विभक्तः। अविग्रहो अस्वपदविग्रहो वा नित्यसमासः। नास्ति विग्रहो यस्य सः अविग्रहः इति। अत्र विग्रहपदेन लौकिकविग्रहः स्वीक्रियते। एवं लौकिकविग्रहवाक्यरहितः नित्यसमासः। नास्ति स्वैः पदैः विग्रहः यस्य सः अस्वपदविग्रहः। अर्थात् समस्यमानैः स्वैः पदैः विग्रहः यस्य समासस्य न भवति सः अस्वपदविग्रहः। अस्वपदविग्रहः स समासः नित्यसमासः।

अविग्रहस्य नित्यसमासस्योदाहरणं यथा कृष्णसर्पः इति। अत्र कृष्णश्चासौ सर्पश्चेति लौकिकविग्रहेन सर्पजातिविशेषवाचकस्य बोधाभावात् कृष्णसर्पः इत्यविग्रहो नित्यसमासः।



अस्वपदविग्रहस्य नित्यसमासस्योदाहरणं यथा कुपुरुषः इति। अत्र कुत्सितश्चासौ पुरुषश्चेति लौकिकविग्रहः। समासे प्रयुज्यमानस्य कु इत्यस्य अर्थबोधनाय लौकिकविग्रहे कुत्सितः इति पदस्य प्रयोगादयं समासः अस्वपदविग्रहो नित्यसमासः।

स्वपदविग्रहो भवति अनित्यसमासः। स्वैः समस्यमानैः पदैः विग्रहो यस्य स स्वपदविग्रहः। अर्थाद् यस्मिन् समासे समासप्रयुक्तैः पदैः एव विग्रहवाक्यं निर्मीयते स स्वपदविग्रहः समासो भवति। सः अनित्यः। यथा पीतम् अम्बरं यस्य स पीताम्बरः इति। अत्र पीतशब्देन अम्बरशब्देन च समस्यमानेन एव विग्रहस्य दर्शनाद् अयम् अनित्यसमासः।

समासस्य कति भेदा इत्यत्र बहूनामस्ति विप्रतिपत्तिः। सामान्यतः समासस्य पञ्च भेदा इति वक्तुं शक्यन्ते। ते च – केवलसमासः अव्ययीभावः तत्पुरुषः बहुव्रीहिः द्वन्द्वः चेति।

## ८.३.१) केवलसमासः

अव्ययीभावादिविशेषसंज्ञाभिः विनिर्मुक्तः यः समासः स केवलसमासः। समासप्रकरणे विद्यमानैः समासविधायकैः सूत्रैः समासः विधीयते। सूत्रेण क्वचित् समासो विधीयते परन्तु तस्य समासस्य विशेषसंज्ञा न क्रियते स समासः केवलसमास इत्युच्यते। विशेषसंज्ञाः भवन्ति - अव्ययीभावः, तत्पुरुषः, द्वन्द्वो बहुव्रीहिश्च। अस्य समासस्य सुप्सुपासमास इति नामान्तरम्। "सह सुपा" इति सूत्रं "इवेन सह समासो विभक्त्यलोपश्च" इति वार्तिकम् अस्य समासस्य विधायकम्। भूतपूर्वः वागर्थाविव इत्यादिकम् अस्य समासस्य उदाहरणम्।

## ८.३.२) अव्ययीभावसमासः

"प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः" इत्यव्ययीभावसमासस्य लक्षणम्। पूर्वपदस्यार्थः पूर्वपदार्थः। पूर्वपदार्थः प्रधानो यत्र स पूर्वपदार्थप्रधानः इति बहुव्रीहिः। अस्मिन् समासे प्रायेण पूर्वपदार्थस्य प्राधान्यं दृश्यते। अव्ययीभाव इति अन्वर्था संज्ञा। अनव्ययम् अव्ययं भवतीति अव्ययीभावः। "अव्ययीभावः" इत्यधिकृत्य विहितः समासः अव्ययीभावसंज्ञकः भवति। एतस्मात् सूत्रात् "तत्पुरुषः" इत्यस्मात् सूत्रात्प्राक् पर्यन्तं यानि सूत्राणि सन्ति तैः विहितः समासः अव्ययीभावसंज्ञको भवति।

अव्ययीभावसमासस्य पाठे समासस्यास्य विधायकानि सूत्राणि पञ्च सूत्राणि सन्निविष्टानि। तानि भवन्ति - "अव्ययं विभक्ति-समीप-समृद्धि-व्यद्ध्यर्थाभावाऽत्ययाऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथाऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्याऽन्तवचनेषु", "यावदवधारणे", "सुप्प्रतिना मात्रार्थे", "संख्या वंश्येन" "नदीभिश्च" चेति। तत्र "अव्ययं विभक्ती"ति सूत्रस्य अधिहरि, उपकृष्णम्, सुमद्रम्, दुर्यवनम् इत्यादीन्युदाहरणानि भवन्ति। "यावदवधारणे" इति सूत्रस्य यावच्छ्लोकम् इति, "सुप्प्रतिना मात्रार्थे" इति सूत्रस्य सूपप्रति इति, "संख्या वंश्येन" इति सूत्रस्य एकविंशतिभारद्वाजम्, "नदीभिश्च" इति सूत्रस्य पञ्चगङ्गम् इत्यादिकम् उदाहरणम्।



अव्ययीभावसमासे पूर्वपदार्थप्राधान्यं दृश्यते। यथा अधिहरि इत्यादौ। हरौ इति लौकिकविग्रहे हरि ङि अधि इत्यलौकिकविग्रहे अधिहरि इति रूपं निष्पद्यते। अधिहरि इत्यत्र अव्ययीभावसमासे अधि इत्यव्ययं पूर्वपदम्। अत्र पूर्वपदस्य अधिकरणार्थस्य प्राधान्यात् अधिहरि इति पूर्वपदार्थप्रधानः।

परन्तु सूपप्रति इत्यत्रास्ति पूर्वपदार्थप्राधान्यस्य व्यभिचारः। "सुप्प्रतिना मात्रार्थे" इत्यनेन सूत्रेण सूपस्य लेशः इति लौकिकविग्रहे समासे सूपप्रति इति रूपं निष्पद्यते। सूपप्रति इत्यत्र प्रति इति मात्राबोधकम्। वस्तुतः अत्र मात्रार्थस्य उत्तरपदार्थस्यैव प्राधान्यमस्ति, पूर्वपदार्थस्य च अप्राधान्यम्। अत एवोच्यते प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः।

"समासान्ताः" इत्यधिकृत्य केचन समासान्ताः प्रत्यया विधीयन्ते । ते च प्रत्ययाः "तद्धिताः" इत्यधिकारबलात् तद्धितसंज्ञका भवन्ति। अत्र अव्ययीभावसमासस्य पाठे टच्प्रत्ययविधायकानि चत्वारि सूत्राणि उल्लिखितानि। तेषु "अव्ययीभावे शरत्प्रभृतिभ्यः" "अनश्च" इति सूत्रद्वयं नित्यं टच्प्रत्ययविधायकम्। अत्र यथाक्रमम् उपशरदम् अध्यात्मम् इत्यादिकमुदाहरणम्। "नपुंसकादन्यतरस्याम्" "झयः" इति सूत्रद्वयं विकल्पेन टच्प्रत्ययविधायकम्। अत्र यथाक्रमम् उपचर्म उपचर्मम् उपसमिधम् उपसमित् इत्यादिकमुदाहरणम्।

अव्ययीभावसमासनिष्पन्नस्य शब्दस्य "अव्ययीभावः" इत्यनेन नपुंसकत्वं भवति। तेन "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यनेन सूत्रेण नपुंसकस्य ह्रस्वं भवति। अव्ययीभावसमासस्य "अव्ययीभावश्च" इत्यनेन सूत्रेण अव्ययसंज्ञा भवति। अव्ययसंज्ञायां सत्याम् "अव्ययादाप्सुपः" इत्यनेन सुपो लुक् प्राप्नोति। यदा अव्ययीभावसमासनिष्पन्नः शब्दः अकारान्तः भवति तदा विशेषकार्यं भवति। तदा "नाव्ययीभावादतोम्त्वपञ्चम्याः" "तृतीयासप्तम्योर्बहुलम्" इति सूत्रद्वयं प्रवर्तते। "नाव्ययीभावादतोम्त्वपञ्चम्याः" इत्यनेन अदन्ताद् अव्ययीभावात् परस्य सुपः "अव्ययादाप्सुपः" इत्यनेन लुको निषेधो भवति। किञ्च पञ्चमीं विना सुपः स्थाने अमादेशो भवति। "तृतीयासप्तम्योर्बहुलम्" इति सूत्रेण अदन्ताद् अव्ययीभावात् तृतीयायां सप्तम्यां च बहुलम् सोः अमादेशो भवति। तेन उपकृष्णम् उपकृष्णेन उपकृष्णे उपकृष्णम् इत्यादयः प्रयोगाः संगच्छन्ते।



## पाठगतप्रश्नाः-४

२७. नित्यसमासस्य किं लक्षणम्।

२८. नित्यसमासस्य पक्षद्वये उदाहरणं दर्शयत।

२९. समासस्य सामान्यतः कति भेदाः।

३०. केवलसमासस्य लक्षणं किम्।

३१. विशेषसंज्ञाः काः।

३२. अव्ययीभावसमासस्य लक्षणं किम्।

३३. अव्ययीभावसमासलक्षणे प्रायेण इति पदं किमर्थम्।



३४. अव्ययीभावसमासे समासान्तटच्प्रत्ययस्य विधायकानि सूत्राणि कानि।

३५. अव्ययीभावसमासे अमादेशविधायकं सूत्रद्वयं किम्।

## ८.३.४) तत्पुरुषसमासः

"प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः" इति तत्पुरुषसमासस्य लक्षणम्। उत्तरपदस्यार्थः पूर्वपदार्थः। उत्तरपदार्थः प्रधानो यत्र स उत्तरपदार्थप्रधानः इति बहुव्रीहिः। अस्मिन् समासे प्रायेण उत्तरपदार्थस्य प्राधान्यं दृश्यते। "तत्पुरुषः" इत्यधिकृत्य विहितः समासः तत्पुरुषसंज्ञकः भवति। एतस्मात् सूत्रात् "शेषो बहुव्रीहिः" इत्यस्मात् सूत्रात्प्राक् पर्यन्तं यानि सूत्राणि सन्ति तैः विहितः समासः तत्पुरुषसंज्ञको भवति।

अस्य समासस्य कृष्णश्रितः इत्यादिकम् उदाहरणम्। कृष्णश्रितः इत्यत्र समासे श्रितः इत्युत्तरपदम्। तस्यार्थस्य प्राधान्यात् उत्तरपदार्थप्राधान्याद् अयं समासः उत्तरपदार्थप्रधानः तत्पुरुषः।

परन्तु अतिमालः इत्यत्रास्ति उत्तरपदार्थप्राधान्यस्य व्यभिचारः। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन वार्तिकेन मालामतिक्रान्तः इति लौकिकविग्रहे समासे अतिमालः इति रूपं निष्पद्यते। अतिमालः इत्यत्र अति इति अतिक्रान्तार्थबोधकम्। अत्र अतिक्रान्तार्थस्य पूर्वपदार्थस्यैव प्राधान्यमस्ति, उत्तरपदार्थस्य च अप्राधान्यम्। अत एवोच्यते प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः।

तत्पुरुषसमासस्य बहवः भेदा भवन्ति। समानाधिकरणः व्यधिकरणश्चेति भेदद्वयम् इति वक्तुं शक्यन्ते। तत्र व्यधिकरणतत्पुरुषस्य द्वितीयातत्पुरुषः, तृतीयातत्पुरुषः, चतुर्थीतत्पुरुषः, पञ्चमीतत्पुरुषः, षष्ठीतत्पुरुषः सप्तमीतत्पुरुषश्चेति षट् भेदाः सन्ति। समानाधिकरणतत्पुरुषः नाम कर्मधारयः समासः इति। अन्यथा अपि सामान्यः, कर्मधारयः, द्विगुः, नञ्प्रभृतयश्चेति चत्वारो भेदा इति वक्तुं शक्यन्ते।

तत्र सामान्या भवन्ति द्वितीयादिसप्तमीतत्पुरुषाः। तत्पुरुषपाठे सामान्यतत्पुरुषविधायकानि अष्टौ सूत्राणि समुल्लिखितानि। द्वितीयातत्पुरुषस्य "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति विधायकं सूत्रम्। कृष्णश्रितः दुःखातीतः इत्यादिकमेतस्योदाहरणम्। तृतीयातत्पुरुषस्य "तृतीया तत्कृतार्थेन गुणवचनेन" "कर्तृकरणे कृता बहुलम्" इति विधायकं सूत्रद्वयम्। शङ्कुलाखण्डः नखभिन्नः इत्यादिकं यथाक्रमम् उदाहरणम्। चतुर्थीतत्पुरुषस्य "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति विधायकं सूत्रम्। यूपदारु द्विजार्थः सूपः इत्यादिकमेतस्योदाहरणम्। पञ्चमीतत्पुरुषस्य "पञ्चमी भयेन" "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति विधायकं सूत्रद्वयम्। चोरभयम् इत्यादिकमत्र उदाहरणम्। षष्ठीतत्पुरुषस्य "षष्ठी" इति विधायकं सूत्रम्। राजपुरुषः इत्यादिकमत्र उदाहरणम्। सप्तमीतत्पुरुषस्य "सप्तमी शौण्डैः" इति विधायकं सूत्रम्। अक्षशौण्डः इत्यादिकमत्र उदाहरणम्। किञ्च षष्ठीसमासनिषेधकानि सप्त सूत्राणि सन्ति - "न निर्धारणे" "पूरणगुणसुहितार्थसदव्ययतव्य-समानाधिकरणेन" "क्तेन च पूजायाम्" "अधिकरणवाचिना च" "कर्मणि च" "तृजकाभ्यां कर्तरि" "कर्तरि च" इति। षष्ठीसमासस्य अपवादभूतं सूत्रद्वयं "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति "अर्धं नपुंसकम्" इति च। अत्र पूर्वकायः अर्धपिप्पली इति यथाक्रमम् उदाहरणम्।





समानविभक्त्यन्तपदानां यदा तत्पुरुषसमासस्तदा कर्मधारयसंज्ञा। अत्र "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति सूत्रं प्रमाणम्। समानाधिकरणतत्पुरुषविधायकानि तत्पुरुषसमासस्य पाठे नव सूत्राणि संगृहीतानि। तानि तावद् - "विशेषणं विशेष्येण बहुलम्" "कुत्सितानि कुत्सनैः" "पापाणके कुत्सितैः" "उपमानानि सामान्यवचनैः" "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" "वृन्दारकनागकुञ्जरैः पूज्यमानम्" "किं क्षेपे" "प्रशंसावचनैश्च" इति। नीलोत्पलम्, वैयाकरणखसूचिः, पापनापितः, घनश्यामः, पुरुषव्याघ्रः, सद्वैद्यः, गोवृन्दारकः, किंराजा गोतल्लजः इत्यादीनि यथाक्रमं सूत्राणाम् उदाहरणानि। अत्र "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" इति वार्तिकमपि पठितम्। शाकपार्थिवः इत्यादिकमिहोदाहरणम्। एतैः सूत्रैः वार्तिकेन च विधीयमानस्य तत्पुरुषस्य सामानाधिकण्यात् कर्मधारयसंज्ञा। एवं कर्मधारयस्य विशेषणपूर्वपदः, विशेषणोत्तरपदः, उपमानपूर्वपदः, उपमानोत्तरपदः इत्यादयः अवान्तरभेदाः कल्पयितुं शक्यन्ते।

तृतीयो भेदः द्विगुः। "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन सूत्रेण विहितः संख्यापूर्वः तत्पुरुषसमासो द्विगुसंज्ञां लभते।अत्र प्रमाणं "संख्यापूर्वो द्विगुः" इति सूत्रम्। द्विगुसमासः त्रिविधः - समाहारद्विगुः, तद्धितार्थद्विगुः, उत्तरपदद्विगुश्चेति। अत्र समाहारद्विगोः उदाहरणं पञ्चगवम् इति। तद्धितार्थद्विगोः उदाहरणं पौर्वशालः इति। उत्तरपदद्विगोश्च उदाहरणं पञ्चगवधनः इति। "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" "गोरतद्धितलुकि" इति सूत्रवार्तिके च द्विगुसमासस्य रूपनिष्पादने उपयोगिनी।

नञ्प्रभृतयः समासाः पञ्च भवन्ति। नञ्तत्पुरुषः, कुतत्पुरुषः, गतितत्पुरुषः, प्रादितत्पुरुषः उपपदतत्पुरुषश्चेति। "नञ्" इति नञ्तत्पुरुषविधायकं सूत्रम्। अब्राह्मणः इत्युदाहरणम्। कुतत्पुरुषः, गतितत्पुरुषः प्रादितत्पुरुषश्च "कुगतिप्रादयः" इति सूत्रेण विधीयते। अत्र कुपुरुषः, ऊरीकृत्य, सुपुरुषः इत्यादीनि यथाक्रमम् उदाहरणानि। प्रादिसमासस्य विधायकानि पञ्च वार्तिकान्यपि समुल्लिखितानि - "प्रादयो गताद्यर्थे प्रथमया", "अत्यादयः क्रान्ताद्यर्थे द्वितीयया", "अवादयः क्रुष्टाद्यर्थे तृतीयया", "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या", "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति। प्राचार्यः, अतिमालः, अवकोकिलः, पर्यध्ययनः, निष्कौशाम्बिः इत्यादीनि एतेषां वार्तिकानां क्रमेण उदाहरणानि। "उपपदमतिङ्" इति उपपदतत्पुरुषविधायकं सूत्रम्। अत्र कुम्भकारः इत्यादीनि उदाहरणानि।

तत्पुरुषसमासे "समासान्ताः" इत्यधिकृत्य केचन समासान्ताः प्रत्यया विधीयन्ते । ते च प्रत्ययाः "तद्धिताः" इत्यधिकारबलात् तद्धितसंज्ञका भवन्ति। अत्र तत्पुरुषसमासस्य पाठे अच्प्रत्ययविधायकं "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इति "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति सूत्रद्वयम् उल्लिखितम्। अत्र द्व्यङ्गुलम्, सर्वरात्रः इत्यादीनि क्रमेण उदाहरणानि। टज्विधायकं "राजाहःसखिभ्यष्टच्" इति सूत्रम्। परमराजः इत्युदाहरणम्। अत्र "रात्राह्नाहाः पुंसि", "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः", "अर्धर्चाः पुंसि च" इत्यादीनि लिङ्गानुशासनपरकाणि सूत्राण्यपि विद्यन्ते। अत्र अहोरात्रः, राजपुत्रः, अर्धर्चः इत्यादीनि क्रमश उदाहरणानि।





## पाठगतप्रश्नाः-५

३६. तत्पुरुषसमासस्य लक्षणं किम्।

३७. तत्पुरुषसमासलक्षणे प्रायेण इति पदं किमर्थम्।

३८. व्यधिकरणतत्पुरुषस्य कति भेदाः।

३९. समानाधिकरणतत्पुरुषस्य का संज्ञा केन च सूत्रेण।

४०. द्विगुसंज्ञा कस्य केन च सूत्रेण।

४१. प्रादितत्पुरुषसमासविधायकानि वार्तिकानि कानि।

४२. तत्पुरुषे समासान्तस्याच्प्रत्ययविधायकानि सूत्राणि लिखत।

४३. परमराजः इत्यत्र टच्प्रत्ययः केन सूत्रेण।

### ८.३.५) बहुव्रीहिसमासः

"प्रायेण अन्यपदार्थप्रधानः बहुव्रीहिः" इति बहुव्रीहिसमासस्य लक्षणम्। अन्यपदस्यार्थः अन्यपदार्थः। समस्यमानपदार्थापेक्षया भिन्नः पदार्थः अन्यपदार्थो भवति। अन्यपदार्थः प्रधानो यत्र सः अन्यपदार्थप्रधानः। अस्मिन् समासे प्रायेण अन्यपदार्थस्य प्राधान्यं दृश्यते। "शेषो बहुव्रीहिः" इत्यधिकृत्य विहितः समासः तत्पुरुषसंज्ञकः भवति। एतस्मात् सूत्रात् "चार्थे द्वन्द्वः" इत्यस्मात् सूत्रात्प्राक् पर्यन्तं यानि सूत्राणि सन्ति तैः विहितः समासः बहुव्रीहिसंज्ञको भवति।

अस्य समासस्य पीताम्बरः इत्यादिकम् उदाहरणम्। पीताम्बर इत्यत्र समस्यमानं पीतम् अम्बरं चेति पदद्वयम्। पीताम्बररूपसमस्यमानपदयोः अर्थापेक्षया अन्यपदार्थः भवति विष्णुरूपः। तस्य अन्यपदार्थस्य विष्णोः प्राधान्यात् अयं समासः अन्यपदार्थप्रधानः बहुव्रीहिः।

परन्तु द्वित्राः इत्यत्रास्ति अन्यपदार्थप्राधान्यस्य व्यभिचारः। "संख्ययाव्ययासन्नदूराधिकसंख्याः संख्येये" इत्यनेन सूत्रेण द्वौ च त्रयश्च इति लौकिकविग्रहे समासे द्वित्राः इति रूपं निष्पद्यते। द्वित्राः इत्यत्र उभयपदार्थस्य प्राधान्यमस्ति, अन्यपदार्थस्य च प्राधान्याभावः। अत एवोच्यते प्रायेण अन्यपदार्थप्रधानः बहुव्रीहिः इति।

बहुव्रीहिसमासस्य विधायकानि पञ्च सूत्राणि सन्ति "अनेकमन्यपदार्थे", "संख्ययाव्ययासन्नदूराधिक-संख्याः संख्येये", "दिङ्नामान्यन्तराले" "तत्र तेनेदमिति सरूपे", "तेन सहेति तुल्ययोगे" इति। अत्र पीताम्बरः, द्वित्राः, दक्षिणपूर्वा, हस्ताहस्ति, केशाकेशि इत्यादीनि क्रमशः सूत्राणामुदाहरणानि। "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः", "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः", "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इत्येतानि वार्तिकानि बहुव्रीहिविधायकानि सन्ति।



बहुव्रीहिसमासे पूर्वनिपातविधायकानि "सप्तमीविशेषणे बहुव्रीहौ" "निष्ठा" "वाऽऽहिताग्न्यादिषु" इति सूत्राणि सन्ति। अत्र च पूर्वनिपातस्य यथाक्रमं कण्ठेकालः युक्तयोगः अग्न्याहितः इत्यादीन्युदाहरणानि।

बहुव्रीहिसमासे "समासान्ताः" इत्यधिकृत्य केचन समासान्ताः प्रत्यया विधीयन्ते । ते च प्रत्ययाः "तद्धिताः" इत्यधिकारबलात् तद्धितसंज्ञका भवन्ति। "अप्पूरणीप्रमाण्योः" "अन्तर्बहिर्भ्यां च लोम्नः" इति सूत्रद्वयम् अप्प्रत्ययस्य विधायकम्। कल्याणीपञ्चमाः अन्तर्लोमः इत्यादीनि क्रमशः उदाहरणानि। "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच्प्रत्ययस्य विधायकम्। उपदशाः इत्यादिकम् इहोदाहरणम्। "इच्कर्मव्यतिहारे" इति इच्प्रत्ययस्य विधायकम्। केशाकेशि इत्यादिकम् इहोदाहरणम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति षच्प्रत्ययस्य विधायकम्। दीर्घसक्थः इत्यादिकम् अत्रोदाहरणम्। "द्वित्रिभ्यां ष मूर्ध्नः" इति षप्रत्ययविधायकम्। द्विमूर्धः इत्यादिकम् अत्रोदाहरणम्। "उरःप्रभृतिभ्यः कप्", "इनः स्त्रियाम्, ""शेषाद्विभाषा" इति सूत्रत्रयं कप्प्रत्ययविधायकम्। व्यूढोरस्कः, बहुदण्डिका महायशस्कः इत्यादीनि अत्रोदाहरणानि। समासान्तलोपविधानाय "पादस्य लोपोऽहस्त्यादिभ्यः" "संख्यासुपूर्वस्य" "उद्विभ्यां काकुदस्य" "पूर्णाद्विभाषा" इत्येतानि चत्वारि सूत्राणि पठितानि। व्याघ्रपात्, द्विपात्, उत्काकुत्, पूर्णकाकुत् इत्यादीनि क्रमश उदाहरणानि भवन्ति।

## ८.३.६) द्वन्द्वसमासः

"प्रायेण उभयपदार्थप्रधानः द्वन्द्वः" इति द्वन्द्वसमासस्य लक्षणम्। उभयपदस्यार्थः उभयपदार्थः। समस्यमानस्य पूर्वपदस्य उत्तरपदस्य चार्थ उभयपदार्थो भवति। उभयपदार्थः प्रधानो यत्र सः उभयपदार्थप्रधानः। अस्मिन् समासे प्रायेण उभयपदार्थस्य प्राधान्यं दृश्यते। "चार्थे द्वन्द्वः" इति द्वन्द्वसमासविधायकं सूत्रम्। चार्थाः समुच्चयान्वाचयेतरतेरयोगसमाहाराः। एतेषु समुच्चयान्वाचययोः असमार्थ्यात् समासो न भवति। एवं इतरेतरयोगः समाहारश्चेति द्वन्द्वसमासो द्विधा विभज्यते।

अस्य समासस्य धवखदिरौ इत्यादिकम् उदाहरणम्। धवखदिरौ इत्यत्र समस्यमानधवखदिरपदयोः अर्थस्य प्राधान्याद् अयम् उभयपदार्थप्रधानः द्वन्द्वः।

परन्तु दन्तोष्ठम् इत्यत्रास्ति उभयप्राधान्यस्य व्यभिचारः। "चार्थे द्वन्द्वः" इत्यनेन सूत्रेण दन्तः च ओष्ठश्च तयोः समाहारः इति लौकिकविग्रहे समासे दन्तोष्ठम् इति रूपं निष्पद्यते। दन्तोष्ठम् इत्यत्र अन्यपदार्थस्य समाहारस्य प्राधान्यमस्ति, उभयपदार्थस्य च प्राधान्यं नास्ति। अत एवोच्यते प्रायेण उभयपदार्थप्रधानः द्वन्द्वः।

द्वन्द्वसमासे पूर्वनिपातविधायकानि "द्वन्द्वे घि" "अजाद्यन्तम्" "अल्पाच्तरम्" इति सूत्राणि सन्ति। अत्र हरिहरौ ईशकृष्णौ शिवकेशवौ इत्यादीनि क्रमश उदाहरणानि। ततः परनिपातविधायकेषु "राजदन्तादिषु परम्" इत्युल्लेखार्हम्। तेन राजदन्तः इत्यादिकं सिध्यति। "धर्मादिष्वनियमः" "अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे", "ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण" "लघ्वक्षरं पूर्वम्" "अभ्यर्हितं च", "वर्णानामानुपूर्व्येण" "भ्रातुर्ज्यायसः" इत्यादीनि पूर्वपरनिपातबोधकानि वार्तिकानि सन्ति।



ततः एकवद्भावविधायकानि "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" "जातिरप्राणिनाम्" "विप्रतिषिद्धं चानधिकरणवाचि" "येषां च विरोधः शाश्वतिकः" इत्यादीनि कानिचन सूत्राणि सन्ति। तत्र पाणिपादम्, धानाशष्कुलि, शीतोष्णम्, अहिनकुलम् इत्यादिकम् उदाहरणम्।

द्वन्द्वसमासे "समासान्ताः" इत्यधिकृत्य समासान्तः तद्धितसंज्ञकः टच्प्रत्ययो विहितः। तत्र च "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति विधायकम्। वाक्त्विषम्, शमीदृषदम् इत्यादिकम् उदाहरणम्।



## पाठगतप्रश्नाः-६

४४. बहुव्रीहिसमासस्य लक्षणं किम्।

४५. बहुव्रीहिसमासलक्षणे प्रायेण इति पदं किमर्थम्।

४६. बहुव्रीहिसमासविधायकानि वार्तिकानि लिखत।

४७. बहुव्रीहौ समासान्तस्य अप्प्रत्ययस्य विधायकं किम्।

४८. बहुव्रीहौ के के समासान्ताः प्रत्यया भवन्ति।

४९. समासान्तलोपविधायकानि कानिचन सूत्राणि लिखत।

५०. द्वन्द्वसमासस्य लक्षणं किम्।

५१. द्वन्द्वसमासलक्षणे प्रायेण इति पदं किमर्थम्।

५२. द्वन्द्वसमासे एकवद्भावविधायकानि सूत्राणि लिखत।

५३. द्वन्द्वसमासे पूर्वनिपातविधायकानि सूत्राणि लिखत।

५४. द्वन्द्वसमासे पूर्वपरनिपातविधायकानि वार्तिकानि लिखत।

५५. द्वन्द्वसमासे समासान्तः टच्प्रत्ययः केन विधीयते।



## पाठसारः

आद्येषु सप्तसु पाठेषु समासभेदा वर्णिताः। तत्र तत्तत्समासपर्यालोचनावसरे एव समासान्तकार्यविधायकनिषेधकसूत्राणां समुल्लेखः विहितः। अस्मिन् पाठे सर्वसमासोपकारकाणि समासान्तकार्यविधायकानि सूत्राणि व्याख्यातानि। तथाहि "ऋक्पूरब्धूःपथामानक्षे" इति समासान्तस्य अप्रत्ययस्य विधायकम्, "अच् प्रत्यन्ववपूर्वात् सामलोम्नः" इति, "अक्ष्णोऽदर्शनात्" इति "उपसर्गादध्वनः" इति च अच्प्रत्ययस्य विधायकं सूत्रं व्याख्यातम्। प्रसङ्गतः समासान्तनिषेधकानि "न पूजनात्" इति,"किमः क्षेपे" इति, "नञस्तत्पुरुषात्" इति "पथो विभाषा" इति च समासान्तनिषेधकानि सूत्राणि प्रतिपादितानि।



ततः वृत्तिस्वरूपं पर्यालोचितम्। "परार्थाभिधानं वृत्तिः" इति वृत्तिलक्षणम्। परार्थस्य अभिधानं परार्थाभिधानम्। परार्थः नाम विग्रहवाक्यावयवपदार्थेभ्यः परः यः अर्थः स परार्थः तत्प्रतिपादिका वृत्तिः। वृत्तेः पञ्च कृत्तद्धितसमास-सनाद्यन्तैकशेषरूपाः भेदाः भवन्ति।

ततः विग्रहस्य स्वरूपं प्रतिपादितं "वृत्त्यर्थावबोधकं वाक्यं विग्रहः" इति। वृत्त्यर्थस्य अवबोधकं यद् वाक्यं तदेव विग्रहः। स च विग्रहः द्विविधः लौकिकः अलौकिकश्चेति। तत्र लौकिकविग्रहः परिनिष्ठितः अर्थाद् व्याकरणेन संस्कृतः। व्याकरणेन संस्कृतानामेव पदानां प्रयोगार्हत्वात् लोके। अत एव "परिनिष्ठितत्वात् साधुर्लौकिकः" इति लौकिकविग्रहवाक्यलक्षणम्। अलौकिकः नाम लोके प्रयोगानर्हः। अर्थात् परिनिष्ठितत्वाभावाद् यः विग्रहः लोके प्रयोगार्हं नास्ति सः अलौकिकविग्रहः। एवं "प्रयोगानर्हः असाधुरलौकिकः" इति अलौकिकविग्रहवाक्यलक्षणम्।

वृत्तिषु अन्यतमः भवति समासः। स च समासः सामान्यतः नित्यः अनित्यश्चेति द्विधा विभक्तः। तत्र अविग्रहः अस्वपदविग्रहो वा नित्यसमासः। स्वपदविग्रहो भवति अनित्यसमासः। समासस्य कति भेदा इत्यत्र बहूनामस्ति विप्रतिपत्तिः। सामान्यतः समासस्य पञ्च भेदाः सन्ति। ते च – केवलसमासः अव्ययीभावः तत्पुरुषः बहुव्रीहिः द्वन्द्वः चेति। ततः पूर्वतनेषु पाठेषु केवलादीनां पञ्चानां समासानां कथं परिशीलनं संवृत्तम् इति संक्षेपेण अस्मिन् पाठे प्रस्तुतम्।



## पाठान्तप्रश्नाः

१. "ऋक्पूरब्धूःपथामानक्षे" इति सूत्रं व्याख्यात।
२. सर्वसमासान्तप्रत्ययाः इति विषयम् आश्रित्य टिप्पणीं लिखत।
३. समासान्तनिषेधकानि इति विषयम् आश्रित्य टिप्पणीं लिखत।
४. वृत्तिस्वरूपं तद्भेदान् च वर्णयत।
५. विग्रहस्वरूपं तद्भेदान् च वर्णयत।
६. समासभेदाः के भवन्ति। कानि च तेषां लक्षणानि।
७. अव्ययीभावसमासं विवृणुत।
८. तत्पुरुषसमासं विवृणुत।
९. द्वन्द्वसमासं विवृणुत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. समासान्तः अप्रत्ययः।



२. ऋगाद्यन्तस्य समासस्य अप्रत्ययः अन्तावयवो भवति, अक्षे या धूः तदन्तस्य न भवति।

३. अर्धर्चः।

४. अनक्षे इति प्रतिषेधात् अक्षशब्देन धुर् इत्यस्य समासे न समासः।

५. समासान्तः अच्प्रत्ययः विधीयते।

६. प्रत्यन्ववपूर्वात् सामलोमान्तात् समासात् समासान्तः तद्धितसंज्ञकः अच्प्रत्ययो भवति।

७. प्रतिसामम्।

८. समासान्तः अच्प्रत्ययो विधीयते।

९. अचक्षुःपर्यायाद् अक्ष्णः समासान्तः तद्धितसंज्ञकः अचप्रत्ययो भवति।

१०. गवाक्षः।

## उत्तराणि-२

११. प्रादिभ्यः अध्वनः समासान्तः तद्धितसंज्ञकः अचप्रत्ययो भवति।

१२. प्राध्वो रथः।

१३. पूजनार्थात् परं यत् प्रातिपदिकं तदन्तात् समासात् समासान्ताः न भवन्ति।

१४. सुराजा।

१५. निन्दार्थकात् किंशब्दात् परं यत् प्रातिपदिकं तदन्तात् समासात् समासान्ताः न भवन्ति।

१६. किंराजा।

१७. नञ्तत्पुरुषसमासात् समासान्ताः न भवन्ति।

१८. अराजा।

१९. पथिन्शब्दान्तात् नञ्तत्पुरुषसमासात् विकल्पेन समासान्ताः न भवन्ति।

२०. अपन्थाः।

## उत्तराणि-३

२१. "परार्थाभिधानं वृत्तिः" इति वृत्तिलक्षणम्।

२२. पञ्च।

२३. "वृत्त्यर्थावबोधकं वाक्यं विग्रहः" इति विग्रहवाक्यस्य लक्षणम्।

२४. द्वौ भेदौ।

२५. "परिनिष्ठितत्वात् साधुर्लौकिकः" इति लौकिकविग्रहवाक्यलक्षणम्। उदाहरणं- राज्ञः पुरुषः।

२६. "प्रयोगानर्हः असाधुरलौकिकः" इति अलौकिकविग्रहवाक्यलक्षणम्। उदाहरणं-राजन् ङस् पुरुष सु।



## उत्तराणि-४

२७. अविग्रहो अस्वपदविग्रहो वा नित्यसमासः।

२८. कृष्णसर्पः इति अविग्रहे, कुपुरुषः इति अस्वपदविग्रहे।

२९. पञ्च।

३०. अव्ययीभावादिविशेषसंज्ञाभिः विनिर्मुक्तः यः समासः स केवलसमासः।

३१. विशेषसंज्ञाः भवन्ति - अव्ययीभावः, तत्पुरुषः, द्वन्द्वो बहुव्रीहिश्च।

३२. "प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः" इत्यव्ययीभावसमासस्य लक्षणम्।

३३. वस्तुतः अत्र मात्रार्थस्य उत्तरपदार्थस्यैव प्राधान्यमस्ति, पूर्वपदार्थस्य च अप्राधान्यम्। अत एवोच्यते प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः।

३४. "अव्ययीभावे शरत्प्रभृतिभ्यः" "अनश्च" इति सूत्रद्वयं नित्यं टच्प्रत्ययविधायकम्। "नपुंसकादन्यतरस्याम्" "झयः" इति सूत्रद्वयं विकल्पेन टच्प्रत्ययविधायकम्।

३५. नाव्ययीभावादतोम्त्वपञ्चम्याः इति, तृतीयासप्तम्योर्बहुलम् इति च।

## उत्तराणि-५

३६. "प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः" इति तत्पुरुषसमासस्य लक्षणम्।

३७. "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन वार्तिकेन मालामतिक्रान्तः इति लौकिकविग्रहे समासे अतिमालः इति रूपं निष्पद्यते। अतिमालः इत्यत्र अति इति अतिक्रान्तार्थबोधकम्। अत्र अतिक्रान्तार्थस्य पूर्वपदार्थस्यैव प्राधान्यमस्ति, उत्तरपदार्थस्य च अप्राधान्यम्। अत एवोच्यते प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः।

३८. व्यधिकणतत्पुरुषस्य द्वितीयातत्पुरुषः, तृतीयातत्पुरुषः, चतुर्थीतत्पुरुषः, पञ्चमीतत्पुरुषः, षष्ठीतत्पुरुषः सप्तमीतत्पुरुषश्चेति षट् भेदाः सन्ति।

३९. कर्मधारयसंज्ञा "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति सूत्रेण भवति।

४०. संख्यापूर्वः तत्पुरुषसमासो द्विगुसंज्ञां लभते। प्रमाणभूतं सूत्रं हि संख्यापूर्वो द्विगुः इति।

४१. प्रादिसमासस्य विधायकानि पञ्च वार्तिकान्यपि समुल्लिखितानि - "प्रादयो गताद्यर्थे प्रथमया", "अत्यादयः क्रान्ताद्यर्थे द्वितीयया", "अवादयः क्रुष्टाद्यर्थे तृतीयया", "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या", "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति।

४२. "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इति "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति सूत्रद्वयम् उल्लिखितम्।

४३. राजाहःसखिभ्यष्टच् इति सूत्रेण।



## उत्तराणि-६

४४. "प्रायेण अन्यपदार्थप्रधानः बहुव्रीहिः" इति बहुव्रीहिसमासस्य लक्षणम्।

४५. द्वित्राः इत्यत्र उभयपदार्थस्य प्राधान्यमस्ति, अन्यपदार्थस्य च प्राधान्याभावः। अत एवोच्यते प्रायेण अन्यपदार्थप्रधानः बहुव्रीहिः इति।

४६. "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः", "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः", "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च" इत्येतानि वार्तिकानि बहुव्रीहिविधायकानि सन्ति।

४७. "अप्पूरणीप्रमाण्योः" "अन्तर्बहिर्भ्यां च लोम्नः" इति सूत्रद्वयम् अप्प्रत्ययस्य विधायकम्।

४८. अप्, इच्, डच्,षच्, कप् इति पञ्च समासान्ताः प्रत्ययाः भवन्ति।

४९. समासान्तलोपविधानाय "पादस्य लोपोऽहस्त्यादिभ्यः" "संख्यासुपूर्वस्य" "उद्विभ्यां काकुदस्य" "पूर्णाद्विभाषा" इत्येतानि चत्वारि सूत्राणि पठितानि।

५०. "प्रायेण उभयपदार्थप्रधानः द्वन्द्वः" इति द्वन्द्वसमासस्य लक्षणम्।

५१. दन्तोष्ठम् इत्यत्र अन्यपदार्थस्य समाहारस्य प्राधान्यमस्ति, उभयपदार्थस्य च प्राधान्यं नास्ति। अत एवोच्यते प्रायेण उभयपदार्थप्रधानः द्वन्द्वः।

५२. "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" "जातिरप्राणिनाम्" "विप्रतिषिद्धं चानधिकरणवाचि" "येषां च विरोधः शाश्वतिकः" इत्यादीनि कानिचन सूत्राणि सन्ति।

५३. "द्वन्द्वे घि" "अजाद्यन्तम्" "अल्पाच्तरम्" इति सूत्राणि सन्ति।

५४. "धर्मादिष्वनियमः" "अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे", "ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण" "लघ्वक्षरं पूर्वम्" "अभ्यर्हितं च", "वर्णानामानुपूर्व्येण" "भ्रातुर्ज्यायसः" इत्यादीनि पूर्वपरनिपातबोधकानि वार्तिकानि सन्ति।

५५. द्वन्द्वाच्चुदषहान्तात्समाहारे इति सूत्रेण।

॥ इति अष्टमः पाठः॥

# स्त्रीप्रत्ययप्रकरणम्

## भूमिका

संस्कृतभाषायां प्रातिपदिकसंज्ञकानां शब्दानां त्रयः अर्थाः भवन्ति। जातिः व्यक्तिः लिङ्गं चेति। तत्र लिङ्गानि त्रीणि भवन्ति पुंस्त्वम्, स्त्रीत्वम्, नपुंसकत्वं चेति। तत्र किं पुंस्त्वम्, किं स्त्रीत्वम्, किं च नपुंसकत्वम् इति जिज्ञासायां शास्त्रकारैः त्रयाणां लिङ्गानां लक्षणं प्रोच्यते -

**स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।**

**उभयोरन्तरं यच्च तदभावे नपुंसकम्।।**

अर्थात् स्तनकेशवती स्त्री भवति। लोमवान् पुरुषः भवति। तदभावे स्तनकेशलोमादिव्यञ्जकाभावे सति यद् उभयोः अन्तरं सादृश्यं भवति तन्नपुंसकं भवति इति भावः। एतेन स्तनकेशादिमत्त्वं स्त्रीत्वस्य लक्षणं प्रतिफलति। लोमादिमत्त्वं पुंस्त्वस्य लक्षणं प्रतिफलति। स्तनकेशलोमाद्यभावत्वविशिष्टोभयसदृशत्वं च नपुंसकत्वस्य लक्षणं प्रतिफलति। परन्तु लिङ्गस्य इदं लौकिकं लक्षणं जडपदार्थेषु न सम्भवति। यथा वृक्षादिपदार्थानां न किमपि प्रोक्तं लिङ्गं दृश्यते। यतो हि तत्र लोमादिकं नास्ति। खट्वादिपदार्थानां न किमपि प्रोक्तं लिङ्ग दृश्यते। यतो हि तत्र स्तनकेशादिकं नास्ति। अतः दोषयुक्तमपि इदं लक्षणम् अस्ति। तथाहि सुहृदः पर्यायभूतः मित्रशब्दः नपुंसकलिङ्गः अस्ति अर्थात् नपुंसकलिङ्गविशिष्टार्थस्य वाचकः अस्ति। किन्तु मित्रवाच्यः अर्थः तु बालिका अपि भवितुमर्हति, बालकः अपि भवितुमर्हति। तत्र स्तनकेशादिकमपि भवितुमर्हति लोमादिकमपि भवितुमर्हति। तत्र लौकिकलक्षणानुसारं मित्रपदार्थस्य स्त्रीत्वमपि प्राप्तं पुंस्त्वमपि प्राप्तम्। किन्तु मित्रशब्दः नित्यनपुंसकलिङ्गविशिष्टस्य अर्थस्य वाचकः अस्ति। अत एव अयं शब्दः नित्यनपुंसकलिङ्गः इति व्यवहारः। तस्माद् एतल्लक्षणानुसारं शास्त्रे लिङ्गस्य व्यवस्था भवितुं नार्हति। अतः लौकिकलिङ्गस्य लक्षणे दोषान् दृष्ट्वा शास्त्रकर्तृभिः लिङ्गस्य शास्त्रीयं लक्षणं कल्पितम् अस्ति। तथाहि सत्त्वम्, रजः, तमः, इत्येते त्रयाः गुणाः सन्ति। एते च गुणाः जडे चेतने च तिष्ठन्ति। पुनः प्रत्येकं वस्तुनि तिष्ठन्ति। एवञ्च सत्त्वरजोतमसां प्राकृतगुणानाम् उपचयः पुंस्त्वम्। सत्त्वरजोतमसां प्राकृतगुणानाम् अपचयः स्त्रीत्वम्। सत्त्वरजोतमसां प्राकृतगुणानां स्थितिमात्रं नपुंसकत्वम्। तत्र प्रत्येकं पदार्थे एते त्रयः गुणाः तिष्ठन्ति। पुनः प्रत्येकं पदार्थे एतेषां गुणानाम् उपचयः अपचयः स्थितिमात्रं च भवति। तस्मात् प्रत्येकं पदार्थे त्रीणि लिङ्गानि भवन्ति। परन्तु कः एकलिङ्गकः पदार्थः, कः द्विलिङ्गकः, कः त्रिलिङ्गकः इत्यत्र कोशादिकमेव प्रमाणम्। यथा तटशब्दः लिङ्गत्रयविशिष्टस्य अर्थस्य वाचकः अस्ति। त्रिषु लिङ्गेषु वर्तते। रामादिशब्दाः नित्यपुंस्त्वविशिष्टस्यार्थस्य वाचकाः सन्ति। अत एव नित्यपुल्लिङ्गाः सन्ति। ज्ञानादिशब्दाः नित्यनपुंसकत्वविशिष्टस्यार्थस्य वाचकाः सन्ति। अतः नित्यनपुंसकलिङ्गाः सन्ति। एवमेवान्यत्रापि बोध्यम्। तस्माद् कस्य शब्दस्य किं लिङ्गम् इत्यस्य ज्ञानाय अमरकोशादिग्रन्थाः लिङ्गानुशासनादिकं च पठनीयम्। तेनैव शब्दानां लिङ्गविषये प्रामाणिकं ज्ञानं भवति।

# ९

# स्त्रीप्रत्ययः - चाप् टाप् डाप् प्रत्ययाः

## प्रस्तावना

तत्र त्रिषु लिङ्गेषु मध्ये पुंस्त्वबोधनाय नपुंसकत्वबोधनाय च प्रत्ययान्तरम् अपेक्षितं नास्ति। प्रातिपदिकेनैव तेषां प्रतीतिः भवति। किन्तु स्त्रीत्वबोधनाय केचन् प्रत्ययाः कल्पिताः सन्ति। ते च

**टाप्-डाप्-चापस्त्रयोप्येते ङीप्-ङीष्-ङीन्-प्रत्ययैः सह।**

**ऊङ्-तिभ्यां मिलिताश्चापि सन्त्यष्टौ प्रत्ययाः स्त्रियाम्।।**

एवञ्च टाप् डाप् चाप् ङीप् ङीष् ङीन् ऊङ् ति इत्येते अष्टौ प्रत्ययाः स्त्रीत्वस्य द्योतनाय प्रातिपदिकात् भवन्ति। तत्र कस्माद् प्रातिपदिकात् टाप् भवति कस्मात् वा डाप् भवति इति बोधयितुं प्रकृतं प्रकरणं प्रवर्तते। अत्र च पाठे टाप् डाप् चाप् ङीन् ति इत्येते पञ्च प्रत्ययाः कस्मात् प्रातपदिकात् भवन्ति इति प्रतिपाद्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- टाप् डाप् चाप् ङीन् ति इति एतान् पञ्च स्त्रीप्रत्ययान् ज्ञातुं शक्नुयात्।
- टाप् डाप् चाप् ङीन् ति इति एतान् पञ्च स्त्रीप्रत्ययान् प्रयोक्तुं प्रभवेत्।
- एतेषां प्रत्ययानां संयोजनेन शब्देषु किं किं परिवर्तनं भवति इति ज्ञातुं शक्नुयात्।।
- एतेषां प्रत्ययानां संयोजनं कृत्वा स्त्रीलिङ्गशब्दानां निर्माणं कर्तुं शक्नुयात्।
- पठनपाठनकाले तत्र तत्र शब्देषु एतेषु कः स्त्रीप्रत्ययः अस्ति इति सुस्पष्टं ज्ञातुं प्रभवेत्।

## [९.१] अजाद्यतष्टाप्॥ (४.१.४)

**सूत्रार्थः** - स्त्रीत्वे द्योत्ये अजादिगणपठितशब्दान्तात् प्रातिपदिकात् परः टाप् प्रत्ययः भवति। एवं स्त्रीत्वे द्योत्ये ह्रस्वाकारान्तात् प्रातिपदिकात् परः टाप् प्रत्ययः भवति।

सूत्रव्याख्या - इदं विधिसूत्रम्। इदं सूत्रं टाप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। अजाद्यतः इति पञ्चम्येकवचनान्तं पदम्। टाप् इति प्रथमैकवचनान्तं पदम्। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अस्मिन् सूत्रे अजाद्यतः इति पदे बहुव्रीहिगर्भसमाहारद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति - अजः आदिः येषां ते अजादयः।



अजादयश्च अत् च इत्यनयोः समाहारः अजाद्यत्, तस्मात् अजाद्यतः। एवञ्च अस्य अर्थः भवति - अजादेः अतः च। तत्र अजादेः इत्यस्य अजादिगणपठितशब्दात् इत्यर्थः। अतः इत्यस्य ह्रस्वाकारात् इत्यर्थः। तत्र अजादेः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण अजादेः इत्यत्र तदन्तविधिः भवति। एवञ्च अजादेः इत्यस्यार्थो भवति अजादिगणपठितशब्दान्तात् इति। एवम् अतः इत्यपि प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च अतः इत्यत्रापि येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन अतः इत्यस्यार्थो भवति ह्रस्वाकारान्तात् इति। एवञ्च सूत्रार्थो भवति अजादिगणपठितशब्दान्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये टाप् प्रत्ययः परः भवति। एवं ह्रस्वाकारान्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये टाप् प्रत्ययः परः भवति।

**उदाहरणम्** - अजा। खट्वा।

**सूत्रार्थसमन्वयः** -

**अजा।** तत्र अजादिगणे अज इति प्रातिपदिकं पठितम् अस्ति। पुनः व्यपदेशिवद्भावेन अजान्तमपि अस्ति। एवञ्च अजादिगणपठितशब्दान्तं प्रातिपदिकम्, अज इति प्रातिपदिकम्। तस्मात् स्त्रीत्वद्योतनाय अजाद्यतष्टाप् इति सूत्रेण टाप् प्रत्ययः भवति। तेन च अज टाप् इति स्थितिः भवति। ततः परं चुटू इति सूत्रेण प्रत्ययाद्यस्य टापः टकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च तस्य लोपः भवति। पुनः टापः पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति तस्य लोपः इति सूत्रेण च तस्य लोपः भवति। ततश्च अज आ इति स्थितिः भवति। ततः परम् अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते सति अजा इति रूपं सिद्ध्यति। ततश्च स्वादिप्रत्यययोगेन प्रथमैकवचने अजा इति सुबन्तं पदं सिध्यति। अन्येषां रूपाणां सिद्धिप्रक्रिया अजन्तस्त्रीलिङ्गप्रकरणे रमाशब्दवत् वर्तते।

**खट्वा।** अत्र खट्व इति प्रातिपदिकम् अस्ति। अस्य च अन्त्यवर्णः ह्रस्वाकारः अस्ति। तेन इदं प्रातिपदिकं ह्रस्वाकारान्तम् अस्ति। ततश्च ह्रस्वाकारान्तात् खट्व इति प्रातिपदिकात् स्त्रीत्वद्योतनाय अजाद्यतष्टाप् इति सूत्रेण टाप् प्रत्ययः भवति। तेन च खट्व टाप् इति स्थितिः भवति। ततः परं चुटू इति सूत्रेण टापः टकारस्य इत्संज्ञा भवति तस्य लोपः इति सूत्रेण च तस्य लोपः भवति। पुनः टापः पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति तस्य लोपः इति सूत्रेण च तस्य लोपः भवति। ततश्च खट्व आ इति स्थितिः भवति। ततः परम् अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते सति खट्वा इति रूपं सिद्ध्यति।

अत्राजादिगणपठितशब्दानामन्यान्युदाहरणानि - अजा एडका अश्वा चटका मूषिका बाला वत्सा होडा पाका मन्दा विलाता क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा मध्यमा कोकिला दंष्ट्रा इति।

अत्रादन्तप्रातिपदिकानामन्यान्युदाहरणानि - खट्वा रमा माला मेधा गङ्गा यमुना शाला सर्वा धनिका कृत्रिमा स्वभावजा गता माया विद्या अविद्या इति।

## [९.२] डाबुभाभ्यामन्यतरस्याम्॥ (४.१.१३)

**सूत्रार्थः** - मन्नन्तात् प्रातिपदिकात् अन्नन्तात् बहुव्रीहिसंज्ञकात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये वा डाप् प्रत्ययः स्यात्।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं डाप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। डाप् इति प्रथमैकवचनान्तं पदम्। उभाभ्याम् इति पञ्चमीद्विवचनान्तं पदम्। अन्यतरस्याम् इति अव्ययपदम्। अत्र मनः इति सूत्रात् मनः (५/१) इति अनुवर्तते। अनो बहुव्रीहेः इति सम्पूर्णमपि सूत्रम् अनुवर्तते। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। अत्र मनः इति अनः इति च प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण मनः इत्यत्र अनः इत्यत्र च तदन्तविधिः भवति। तेन मनः इत्यस्य मन्नन्तात् इत्यर्थो भवति। अनः इत्यस्य च अन्नन्तात् इत्यर्थो भवति। बहुव्रीहेः इत्यपि प्रातिपदिकात् इत्यस्य विशेषणं भवति। एवञ्च सूत्रार्थो भवति - मन्नन्तात् प्रातिपदिकात्, अन्नन्तात् बहुव्रीहिसंज्ञकात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये वा डाप् प्रत्ययः परः भवति।

**उदाहरणम्** - दामा। बहुयज्वा।

**सूत्रार्थसमन्वयः** -

**दामा।** अत्र दामन् इति प्रातिपदिकम्। एतच्च मन्नन्तम् अस्ति। अतः मन्नन्तात् दामन् इति प्रातिपदिकात् स्त्रीत्वद्योतनाय डाबुभाभ्यामन्यतरस्याम् इति सूत्रेण विकल्पेन डाप् प्रत्ययः भवति। तेन च दामन् डाप् इति स्थितिः भवति। ततः परं चुटू इति सूत्रेण डकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन दामन् आ इति स्थितिः जायते। ततः परं टेः इति सूत्रेण दामन् इति शब्दस्य टेः अन् इत्यस्य लोपे सति दाम् आ इति स्थितिः जायते। वर्णसम्मेलने च सति दामा इति रूपं सिध्यति। डाप् इत्यस्य अभावे तु दामन् इत्येव रूपं तिष्ठति। एवमेव दामा पामा सीमा अतिमहिमा इत्यादावपि बोध्यम्।

**बहुयज्वा।** अत्र बहुयज्वन् इति प्रातिपदिकम्। एतच्च अन्नन्तम् अस्ति। पुनः अत्र बहुव्रीहिसमासः अपि अस्ति। अतः इदं बहुव्रीहिसंज्ञकमपि अस्ति। एवञ्च अन्नन्तात् बहुव्रीहिसंज्ञकात् बहुयज्वन् इति प्रातिपदिकात् स्त्रीत्वद्योतनाय डाबुभाभ्यामन्यतरस्याम् इति सूत्रेण विकल्पेन डाप् प्रत्ययः भवति। तेन च बहुयज्वन् डाप् इति स्थितिः भवति। ततः परं चुटू इति सूत्रेण डकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण च पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन बहुयज्वन् आ इति स्थितिः जायते। ततः परं टेः इति सूत्रेण बहुयज्वन् इति शब्दस्य टेः अन् इत्यस्य लोपे सति बहुयज्व् आ इति स्थितिः जायते। वर्णसम्मेलने च सति बहुयज्वा इति रूपं सिध्यति। डाप् इत्यस्य अभावे तु बहुयज्वन् इत्येव रूपं तिष्ठति। एवमेव सुचर्मा सुपर्वा बहुराजा इत्यादावपि बोध्यम्।

## [९.३] यङश्चाप्॥ (४.१.७४)

**सूत्रार्थः** - ञ्यङन्तात् प्रातिपदिकात्, ष्यङन्तात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये चाप् प्रत्ययः परः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं चाप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। यङः इति पञ्चम्येकवचनान्तं पदम्। चाप् इति प्रथमैकवचनान्तं पदम्। च इति अव्ययपदम्। अत्र सूत्रे



स्त्रियाम् (७/१) इति अधिकारः आगच्छति। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। अत्र यङः इत्यनेन ञ्यङः ष्यङः च ग्रहणम् अस्ति। ञ्यङः ष्यङः च प्रत्ययौ इति कृत्वा अत्र प्रत्ययग्रहणे तदन्ता ग्राह्याः इति नियमेन तदन्तविधिः भवति। तेन यङः इति पदस्य ञ्यङन्तात् ष्यङन्तात् च इत्यर्थः भवति। पुनः ञ्यङन्तात् ष्यङन्तात् इति अनयोः च प्रातिपदिकात् इत्यत्र अन्वयः भवति। एवञ्च सूत्रार्थो भवति - ञ्यङन्तात् प्रातिपदिकात्, ष्यङन्तात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये चाप् प्रत्ययः परः भवति।

**उदाहरणम् -** आम्बष्ठ्या। कारीषगन्ध्या।

**सूत्रार्थसमन्वयः -**

**आम्बष्ठ्या।** अत्र आम्बष्ठ्य इति शब्दः ञ्यङन्तः अस्ति। यतोहि अम्बष्ठशब्दात् अम्बष्ठस्य अपत्यं स्त्री इत्यर्थे वृद्धेत्कोसलाजादाञ्ञ्यङ् इति सूत्रेण ञ्यङ् इति प्रत्यये अम्बष्ठ ञ्यङ् इति जाते ञकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, ङकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण उभयोः लोपे च सति अम्बष्ठ य इति स्थितिः भवति। ततः तद्धितेष्वचामादेः इति सूत्रेण आदिवृद्धौ यस्येति च इति सूत्रेण अम्बष्ठशब्दस्य अन्त्यस्य अकारस्य लोपे च सति आम्बष्ठ् य इति रूपं भवति। ततः वर्णसम्मेलनं कृत्वा आम्बष्ठ्य इति रूपं जायते। एवञ्च आम्बष्ठ्य इति प्रातिपदिकं ञ्यङन्तमस्ति इति सुस्पष्टमेव। तेन च स्त्रीत्वविवक्षायां ञ्यङन्तात् आम्बष्ठ्य इति प्रातिपदिकात् यङश्चाप् इति सूत्रेण चाप् प्रत्यये सति आम्बष्ठ्य चाप् इति स्थितिः भवति। ततः चापः चकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण उभयोः लोपे सति आम्बष्ठ्य आ इति स्थितिः भवति। ततः अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे च सति आम्बष्ठ्या इति रूपं सिध्यति। अम्बष्ठनामकस्य जनस्य पुत्री इति तदर्थः।

**कारीषगन्ध्या।** अत्र कारीषगन्ध्य इति शब्दः ष्यङन्तः अस्ति। यतोहि करीषगन्धिशब्दात् करीषगन्धेः गोत्रापत्यं स्त्री इत्यर्थे अण्-प्रत्यये सति करीषगन्धि अण् इति स्थितौ अणः स्थाने अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे इति सूत्रेण ष्यङ् इत्यादेशे सति करीषगन्धि ष्यङ् इति जाते षकारस्य षः प्रत्ययस्य इति सूत्रेण इत्संज्ञायाम्, ङकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण उभयोः लोपे च सति करीषगन्धि य इति स्थितिः भवति। ततः तद्धितेष्वचामादेः इति सूत्रेण आदिवृद्धौ यस्येति च इति सूत्रेण करीषगन्धिशब्दस्य इकारस्य लोपे च सति कारीषगन्ध् य इति रूपं भवति। ततः वर्णसम्मेलनं कृत्वा कारीषगन्ध्य इति रूपं जायते। एवञ्च कारीषगन्ध्य इति प्रातिपदिकं ष्यङन्तमस्ति इति सुस्पष्टमेव। तेन च स्त्रीत्वविवक्षायां ष्यङन्तात् कारीषगन्ध्य इति प्रातिपदिकात् यङश्चाप् इति सूत्रेण चाप् प्रत्यये सति कारीषगन्ध्य चाप् इति स्थितिः भवति। ततः चापः चकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण उभयोः लोपे सति कारीषगन्ध्य आ इति स्थितिः भवति। ततः अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे च सति कारीषगन्ध्या इति रूपं सिध्यति। कारीषगन्धिः इति कस्यचित् जनस्य नाम। तस्य गोत्रापत्यं स्त्री कारीषगन्ध्या इति।

## [९.४] यूनस्तिः॥ (४.१.७७)

**सूत्रार्थः** - युवन् इति प्रातिपदिकात् स्त्रीत्वे द्योत्ये ति प्रत्ययो भवति। स च तद्धितः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं तिप्रत्ययं विदधाति। सूत्रेऽस्मिन् यूनः इति पञ्चम्येकवचनान्तं पदम्। ति इति प्रथमैकवचनान्तं पदम्। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः तद्धिताः (१/३) इति अधिकारः च अत्र आगच्छति। अत्र ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। अत्र यूनः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। एवञ्च सूत्रार्थो भवति - युवन् इति प्रातिपदिकात् स्त्रीत्वे द्योत्ये ति प्रत्ययः परः भवति स च तद्धितः भवति।

**उदाहरणम्** - युवतिः।

**सूत्रार्थसमन्वयः** -

**युवति।** अत्र युवन् इति नान्तं प्रातिपदिकम् अस्ति। एवञ्च स्त्रित्वविवक्षायां युवन् इति प्रातिपदिकात् यूनस्ति इति सूत्रेण ति प्रत्ययः भवति। तेन युवन् ति इति स्थितिः भवति। ततः परं नलोपः प्रातिपदिकस्य इति सूत्रेण युवन् इति शब्दस्य नकारस्य लोपः भवति। तेन च युवति इति जायते। ततः तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां स्वादिकार्ये च कृते युवतिः इति रूपं सिध्यति। तरुणी इति तदर्थः।

## [९.५] शार्ङ्गरवाद्यञो ङीन्॥ (४.१.७३)

**सूत्रार्थः** - जातिवाचकात् अनुपसर्जनात् शार्ङ्गरवादिगणपठितात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीन् प्रत्ययः परः भवति। जातिवाचकात् अनुपसर्जनात् अञन्तात् अदन्तात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये ङीन् प्रत्ययः परः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीन्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। शार्ङ्गरवाद्यञः इति पञ्चम्येकवचनान्तं पदम्। ङीन् इति प्रथमैकवचनान्तं पदम्। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः (५/१) इति पदमनुवर्तते। जातेरस्त्रीविषयादयोपधात् इति सूत्रात् जातेः (५/१) इति पदमनुवर्तते। अनुपसर्जनात् (५/१) इति अधिकारः अत्र आगच्छति। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। शार्ङ्गरवाद्यञः इति पदं समस्तम् अस्ति। अत्र च बहुव्रीहिगर्भसमाहारद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति - शार्ङ्गरवः आदिः येषां ते शार्ङ्गरवादयः। शार्ङ्गरवादयश्च अञ् च इति शार्ङ्गरवाद्यञ्, तस्मात् शार्ङ्गरवाद्यञः। एवञ्च अस्यार्थो भवति - शार्ङ्गरवादेः अञः च इति। शार्ङ्गरवादेः इत्यस्य च शार्ङ्गरवादिगणपठितात् इत्यर्थः। अत्र जातेः इति पदम् अनुपसर्जनात् इति पदं च शार्ङ्गरवादेः इत्यस्य विशेषणं भवति। पुनः शार्ङ्गरवादेः इति पदं प्रातिपदिकात् इत्यस्य विशेषणं भवति। अञः इति प्रत्ययग्रहणम् अस्ति। तेन प्रत्ययग्रहणे तदन्ता ग्राह्याः इति परिभाषया तत्र तदन्तविधिः भवति। तेन अञः इत्यस्य अञन्तात् इत्यर्थः भवति। पुनः अञन्तात् इत्यस्य जातेः



इति पदम् अनुपसर्जनात् इति पदं च विशेषणं भवति। तेन जातिवाचकात् अनुपसर्जनात् अञन्तात् इत्यर्थो लभ्यते। अञन्तात् इति प्रातिपदिकात् इत्यस्य विशेषणम् अस्ति। अतः इति पदमपि प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन येन विधिस्तदन्तस्य इति परिभाषया अत्र तदन्तविधिः भवति। तेन अदन्तात् प्रातिपदिकात् इत्यर्थो भवति। एवञ्च सूत्रार्थो भवति - जातिवाचकात् अनुपसर्जनात् शार्ङ्गरवादिगणपठितात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीन् प्रत्ययः परः भवति। जातिवाचकात् अनुपसर्जनात् अञन्तात् अदन्तात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये ङीन् प्रत्ययः परः भवति।

**उदाहरणम्** - शार्ङ्गरवी। बैदी।

**सूत्रार्थसमन्वयः** -

**शार्ङ्गरवी।** अत्र शार्ङ्गरव इति शब्दः शार्ङ्गरवादिगणे पठितः अस्ति। पुनः जातिवाचकः अस्ति। अनुपसर्जनः अस्ति, अदन्तश्च अस्ति। अतः स्त्रीत्वविवक्षायां शार्ङ्गरवाद्यञो ङीन् इति सूत्रेण ङीन् प्रत्ययः भवति। तेन शार्ङ्गरव ङीन् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन शार्ङ्गरव ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते शार्ङ्गरवी इति रूपं सिध्यति। अस्य रूपप्रक्रिया च अजन्तस्त्रीलिङ्गप्रकरणे गौरीशब्दवद् बोध्या।

**बैदी।** अत्र बैद इति शब्दः अस्ति। अयं शब्दः अञन्तः अस्ति। पुनः जातिवाचकः अस्ति। अनुपसर्जनः अस्ति, अदन्तश्च अस्ति। अतः स्त्रीत्वविवक्षायां शार्ङ्गरवाद्यञो ङीन् इति सूत्रेण ङीन् प्रत्ययः भवति। तेन बैद ङीन् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन बैद ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते बैदी इति रूपं सिध्यति। अस्य रूपप्रक्रिया च अजन्तस्त्रीलिङ्गप्रकरणे गौरीशब्दवद् बोध्या।

## [९.६] प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः॥ (७.३.४४)

**सूत्रार्थः** - प्रत्ययस्थात् कात् पूर्वस्य अतः स्थाने इत् भवति आपि परे। किन्तु सुप्परके आपि परे अतः स्थाने इद् न भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रम् इत् इति आदेशं विदधाति। सूत्रेऽस्मिन् सप्त पदानि सन्ति। प्रत्ययस्थात् इति पञ्चम्यन्तं पदम्। कात् इति पञ्चम्यन्तं पदम्। पूर्वस्य इति षष्ठ्यन्तं पदम्। अतः इति षष्ठ्यन्तं पदम्। इद् इति प्रथमान्तं पदम्। आपि इति सप्तम्यन्तं पदम्। असुपः इति पञ्चम्यन्तं पदम्। असुपः इति पदं समस्तम् अस्ति। अत्र नञ्तत्पुरुषसमासः अस्ति। अस्य च विग्रहः भवति न सुप् इति असुप्, तस्मात् असुपः। प्रत्ययस्थात् इति पदं कात् इत्यस्य विशेषणं भवति। कात् इति पदं पूर्वस्य



इत्यस्य विशेषणं भवति। पूर्वस्य इति पदम् अतः इत्यस्य विशेषणं भवति। एवञ्च अस्य सूत्रस्यार्थः भवति प्रत्ययस्थात् कात् पूर्वस्य अतः स्थाने इत् भवति आपि परे। किन्तु सुप्परके आपि परे अतः स्थाने इद् न भवति। इत् इत्यत्र तकारः उच्चारणार्थः न तु श्रवणार्थः।

**उदाहरणम् -** कारिका बालिका इत्यादीनि उदाहरणानि सन्ति।

**सूत्रार्थसमन्वयः -**

**कारिका।** अत्र कृ धातोः ण्वुल्तृचौ इति सूत्रेण ण्वुल्प्रत्यये कृते कृ ण्वुल् इति जाते ततः परं चुटू इति सूत्रेण णकारस्य इत्संज्ञायाम्, लकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां च सत्यां तस्य लोपः इति सूत्रेण उभयोः लोपे कृ वु इति जायते। ततश्च युवोरनाकौ इति सूत्रेण वोः स्थाने अक इति आदेशे कृ अक इति जाते अचो ञ्णिति इति सूत्रेण ऋकारस्य स्थाने वृद्धिं कृत्वा कार् अक इति जाते वर्णसम्मेलने च सति कारक इति शब्दः सिध्यति। ततः कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां जातायाम्, कारक इत्यस्य अदन्तप्रातिपदिकत्वात् अजाद्यतष्टाप् इति सूत्रेण टाप्-प्रत्यये टापः टकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण उभयोः लोपे सति कारक आ इति स्थितिः भवति। तदा अत्र टापि परे अकरूपप्रत्ययस्थात् कात् पूर्वस्य अतः स्थाने प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः इति सूत्रेण इत् इत्यादेशे कारिक आ इति स्थितिः भवति। तत्पश्चात् अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे सति कारिका इति रूपं सिध्यति।

अन्यानि उदाहरणानि - बालिका अश्वपालिका अध्यापिका तारिका हारिका धारिका परिव्राजिका शयिका नायिका गायिका पाचिका पाठिका इत्यादीनि।



## पाठगतप्रश्नाः

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. कति लिङ्गानि भवन्ति। कानि च तानि।
२. कति स्त्रीप्रत्ययाः सन्ति।
३. अजाद्यतष्टाप् इति सूत्रेण किं विधीयते।
४. यूनस्ति इति सूत्रेण किं विधीयते।
५. दामा इत्यत्र कः स्त्रीप्रत्ययः अस्ति।
६. यङश्चाप् इति सूत्रेण किं विधीयते।
७. अजादिपदे कः समासः कश्च विग्रहः।
८. पुंस्त्वस्य शास्त्रीयं लक्षणं किम्।
९. स्त्रीत्वस्य शास्त्रीयं लक्षणं किम्।



१०. नपुंसकत्वस्य शास्त्रीयं लक्षणं किम्।

११. सिद्धान्ते लिङ्गं किन्निष्ठम्।



## पाठसारः

अत्र पाठे टाप् डाप् चाप् ङीन् ति इति पञ्चानां स्त्रीप्रत्ययानां वर्णनं वर्तते। अत्र सर्वप्रथमं टाप्प्रत्ययविधायकस्य अजाद्यतष्टाप् इति सूत्रस्य व्याख्यानम् अस्ति। तदुदाहरणानि च दत्तानि सन्ति। पुनः डाप्प्रत्ययविधायकस्य डाबुभाभ्यामन्यतरस्याम् इति सूत्रस्य व्याख्यानम् उदाहरणं च वर्तते। ततः परं चाप्प्रत्ययविधायकस्य यङश्चाप् इति सूत्रस्य व्याख्यानं तदुदाहरणं च अस्ति। एवं तिप्रत्ययविधायकस्य यूनस्तिः इति सूत्रस्य व्याख्या वर्तते। पुनः ङीन्प्रत्ययविधायकस्य शार्ङ्गरवाद्यञो ङीन् इति सूत्रस्य व्याख्या कृता तदुदाहरणानि च साधितानि। प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः इति सूत्रस्य व्याख्यानं तदुदाहरणानां च सिद्धिः दर्शिता इति।



## पाठान्तप्रश्नाः

अत्र परीक्षोपयोगिनः प्रष्टव्याः प्रश्नाः प्रदीयन्ते।

१. अजाद्यतष्टाप् इति सूत्रस्य सोदाहरणं व्याख्यां लिखन्तु।

२. डाबुभाभ्यामन्यतरस्याम् इति सूत्रस्य सोदाहरणं व्याख्या कार्या।

३. यङश्चाप् इति सूत्रस्य सोदाहरणं व्याख्यां लिखत।

४. यूनस्ति इति सूत्रस्य सोदाहरणं व्याख्यां लिखत।

५. शार्ङ्गरवाद्यञो ङीन् इति सूत्रस्य सोदाहरणं व्याख्यां कुर्वन्तु।

६. प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः इति सूत्रस्य व्याख्या लेख्या।

७. कारिका इति प्रयोगस्य सिद्धिप्रक्रियां लिखन्तु।

८. शार्ङ्गरवी इति प्रयोगस्य सिद्धिप्रक्रियां लिखत।

९. कारीषगन्ध्या इति प्रयोगस्य सिद्धिप्रक्रियां लिखत।

१०. बहुयज्वा इति प्रयोगस्य सिद्धिप्रक्रियां प्रदर्श्यन्तु।



## पाठगतप्रश्नोत्तराणि

१. त्रीणि लिङ्गानि भवन्ति। स्त्रीत्वम्, पुंस्त्वम् नपुंसकत्वम् च इति।

२. अष्टौ स्त्रीप्रत्ययाः सन्ति।



३. अजाद्यतष्टाप् इति सूत्रेण टाप्प्रत्ययः विधीयते।

४. यूनस्ति इति सूत्रेण तिप्रत्ययः विधीयते।

५. दामा इत्यत्र डाप्प्रत्ययः अस्ति।

६. यङश्चाप् इति सूत्रेण चाप्प्रत्ययः विधीयते।

७. अजादिपदे बहुव्रीहिसमासः अस्ति। अस्य च अजः आदिः येषां ते अजादयः इति विग्रहः।

८. सत्त्वरजस्तमसां प्राकृतगुणानाम् उपचयः पुंस्त्वम्।

९. सत्त्वरजस्तमसां प्राकृतगुणानाम् अपचयः स्त्रीत्वम्।

१०. सत्त्वरजस्तमसां प्राकृतगुणानां स्थितिमात्रं नपुंसकत्वम्।

११. पदार्थनिष्ठम्।

॥इति नवमः पाठः॥



१०

# स्त्रीप्रत्ययः - ङीप् प्रत्ययः

## प्रस्तावना

अत्र स्त्रीप्रत्ययप्रकरणस्यादौ एव वर्णितं यद् अष्टौ स्त्रीप्रत्ययाः सन्ति। तेषु ङीप्प्रत्ययः अपि प्रमुखः प्रत्ययः अस्ति। तस्य विधायकानि अनेकानि सूत्राणि सन्ति। तेषु - ऋन्नेभ्यो ङीप् , उगितश्च, वयसि प्रथमे, द्विगोः, वर्णादनुदात्तात्तोपधात् तो नः, टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति एतानि सूत्राणि मुख्यानि अत्र चितानि च। तेषामेवात्र व्याख्यानं प्रस्तूयते।



## उद्देश्यानि

अमुम् पाठं पठित्वा भवान् -

- ङीप्प्रत्ययं ज्ञातुं शक्नुयात्।
- ङीप्प्रत्ययः कस्मात् प्रातिपदिकात् भवति इति ज्ञातुं प्रभवेत्।
- ङीप्प्रत्ययान्तशब्दं ज्ञातुं शक्नुयात्।
- ङीप्प्रत्ययस्य संयोजनेन शब्दपरिवर्तनं ज्ञातुं शक्नुयात्।
- ङीप्प्रत्ययस्य संयोजनं कृत्वा स्त्रीलिङ्गशब्दानां निर्माणे अर्हः भवेत्।
- पठनपाठनकाले तत्र तत्र शब्देषु ङीप्प्रत्ययः अस्ति न वा इति सुस्पष्टं ज्ञातुं प्रभवेत्।।

## [१०.१] ऋन्नेभ्यो ङीप्॥ (४.१.५)

**सूत्रार्थः** - ऋदन्तात् प्रातिपदिकात् नान्तात् च प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति।

**सूत्रावतरणम्** - तत्र तावत् टाप् डाप् चाप् ङीप् ङीष् ङीन् इत्येते षट् मुख्यस्त्रीप्रत्ययाः सन्ति। तेषु ङीप्प्रत्ययः अपि एकः। तस्य प्रत्ययस्य विधानाय ऋन्नेभ्यो ङीप् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। ऋन्नेभ्यः इति पञ्चमीबहुवचनान्तं पदम्। ङीप् इति प्रथमैकवचनान्तं पदम्। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते।



प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। ऋन्नेभ्यः इति पदं समस्तं वर्तते। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। तस्य च विग्रहः भवति ऋत् च नश्च इति ऋन्नः, तेभ्यः ऋन्नेभ्यः। एवञ्च अस्य अर्थः भवति ऋतः नात् इति। तत्र ऋतः इति नात् इति च प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च येन विधिस्तदन्तस्य इति सूत्रेण अत्र तदन्तविधिः भवति। तेन ऋदन्तात् प्रातिपदिकात् नान्तात् प्रातिपदिकात् च इति लभ्यते। ततश्च सूत्रार्थः भवति - ऋदन्तात् प्रातिपदिकात् नान्तात् च प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः परः भवति।

**उदाहरणम्** - कर्त्री। दण्डिनी।

**सूत्रार्थसमन्वयः** -

**कर्त्री।** अत्र कर्तृ इति शब्दः ऋदन्तः अस्ति, अपि च कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च ऋदन्तं प्रातिपदिकम् अस्ति कर्तृ इति। तस्मात् स्त्रीत्वे द्योत्ये ऋन्नेभ्यो ङीप् इति सूत्रेण ङीप्प्रत्ययो भवति तेन कर्तृ ङीप् इति भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन कर्तृ ई इति स्थितिः भवति। ततः परम् इको यणचि इति सूत्रेण यणादेशे कृते वर्णसम्मेलने च कृते कर्त्री इति रूपं सिद्ध्यति।

**दण्डिनी।** अत्र दण्डिन् इति शब्दः नान्तः अस्ति, अपि च कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च नान्तं प्रातिपदिकम् अस्ति दण्डिन् इति। तस्मात् स्त्रीत्वे द्योत्ये ऋन्नेभ्यो ङीप् इति सूत्रेण ङीप्प्रत्ययो भवति। तेन दण्डिन् ङीप् इति भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन दण्डिन् ई इति स्थितिः भवति। ततः परं वर्णसम्मलेने कृते सति दण्डिनी इति रूपे सिद्ध्यति।

## [१०.२] उगितश्च॥ (४.१.६)

**सूत्रार्थः** - उगिदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। उगितः इति पञ्चम्येकवचनान्तं पदम्। च इति अव्ययपदम्। अत्र ऋन्नेभ्यो ङीप् इति सूत्रात् ङीप् (१/१) इति अनुवर्तते। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। उगितः इति पदं समस्तं वर्तते। अत्र च बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति। उक् इत् यस्य सः उगित्, तस्य उगितः। तत्र उगितः इति पदं प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च येन विधिस्तदन्तस्य इति सूत्रेण अत्र तदन्तविधिः भवति। तेन उगिदन्तात् प्रातिपदिकात् इति लभ्यते। ततश्च सूत्रार्थः भवति - उगिदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति।

**उदाहरणम्** - पचन्ती। भवन्ती। नमन्ती। पठन्ती। पतन्ती।



**सूत्रार्थसमन्वयः -**

**पचन्ती।** पच् इति धातोः वर्तमाने लट् इति सूत्रेण लट्प्रत्यये सति पच् लट् इति जायते। ततः लटः स्थाने लटः शतृशानचावप्रथमासमानाधिकरणे इति सूत्रेण शतृप्रत्यये कृते पच् शतृ इति जाते शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे, ऋकारस्य उपदेशेऽजनुनासिक इत्, इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे सति पच् अत् इति जायते। ततः शतुः शित्त्वात् तिङ्शित्सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायाम्, कर्तरि शप् इति सूत्रेण शप्प्रत्यये सति पच् शप् अत् इति जायते। ततः शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे, पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे सति पच् अ अत् इति जायते। ततश्च अतो गुणे इति सूत्रेण पररूपे पचत् इति सिद्ध्यति। तत्र शतृप्रत्ययस्य ऋकारस्य इत्संज्ञा भवति। तेन शतृप्रत्ययः उगित् अस्ति। ततश्च पचत् इति शब्दः उगिदन्तः अस्ति। अपि च कृत्तद्धितसमासाश्च इति सूत्रेण तस्य प्रातिपदिकसंज्ञा भवति। तेन पचत् इति उगिदन्तं प्रातिपदिकम् अस्ति। अतः उगिदन्तात् प्रातिपदिकात् पचत् इत्यतः उगितश्च इति सूत्रेण ङीप्प्रत्ययः भवति। तेन पचत् ङीप् इति भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन पचत् ई इति जायते। ततः शप्श्यनोर्नित्यम् इति नुमागमे अनुबन्धलोपे च सति पचन्त् ई इति स्थिते वर्णमेलने च पचन्ती इति रूपं सिध्यति।

**भवन्ती।** भू इति धातोः वर्तमाने लट् इति सूत्रेण लट्प्रत्यये सति भू लट् इति जायते। ततः लटः स्थाने लटः शतृशानचावप्रथमासमानाधिकरणे इति सूत्रेण शतृप्रत्यये कृते भू शतृ इति जाते शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे, ऋकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे सति भू अत् इति जायते। ततः शतुः शित्त्वात् तिङ्शित्सार्वधातुकम् इति सूत्रेण सार्वधातुकसंज्ञायाम्, कर्तरि शप् इति सूत्रेण शप्प्रत्यये सति भू शप् अत् इति जायते। ततः शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे, पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायाम्, तस्य लोपः इति सूत्रेण लोपे सति भू अ अत् इति जायते। ततश्च शपः अपि शित्त्वेन सार्वधातुकत्त्वात् सार्वधातुकार्धधातुकयोः इति सूत्रेण भुवः ऊकारस्य गुणे ओकारे एचोऽयवायावः इति सूत्रेण अव् इत्यादेशे च कृते भव् अ अत् इति जाते अतो गुणे इति सूत्रेण पररूपे भवत् इति सिद्ध्यति। अत्र शतृप्रत्ययस्य ऋकारस्य इत्संज्ञा भवति। तेन शतृप्रत्ययः उगित् अस्ति। ततश्च भवत् इति शब्दः उगिदन्तः अस्ति। अपि च कृत्तद्धितसमासाश्च इति सूत्रेण तस्य प्रातिपदिकसंज्ञा भवति। तेन भवत् इति उगिदन्तं प्रातिपदिकम् अस्ति। अतः उगिदन्तात् प्रातिपदिकात् भवत् इत्यतः उगितश्च इति सूत्रेण ङीप्प्रत्ययः भवति। तेन भवत् ङीप् इति भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन भवत् ई इति जायते। ततः नुमागमे अनुबन्धलोपे च सति भवन्ती इति रूपं सिध्यति। अन्यानि उदाहरणानि एवमेव सिद्ध्यन्तीत्यूह्यम्।



## [१०.३] वयसि प्रथमे॥ (४.१.२०)

**सूत्रार्थः** - प्रथमवयोवाचकात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। वयसि इति सप्तम्येकवचनान्तं पदम्। प्रथमे इति सप्तम्येकवचनान्तं पदम्। अत्र ऋन्नेभ्यो ङीप् इति सूत्रात् ङीप् (१/१) इति पदम्, अजाद्यतष्टाप् इति सूत्रात् अतः (५/१) इति पदं च अनुवर्तते। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र सूत्रे प्रथमे इति वयसि इत्यस्य विशेषणं भवति, वयसि इति च प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन प्रथमवयोवाचकात् इत्यर्थः समायाति। अतः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन अदन्तात् प्रातिपदिकात् इत्यर्थो भवति। ततश्च सूत्रार्थो भवति - प्रथमवयोवाचकात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति। प्राणिनाम् कालकृतावस्थाविशेषो वयः। तच्च कौमारं यौवनं वार्धकम् इति त्रिधा।

**पिता रक्षति कौमारे भर्ता रक्षति यौवने।**
**पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति।।**

इति शास्त्रवचनमत्र प्रमाणम्। केषांचिद् आचार्याणां मते वयः चतुर्विधम्। तथाहि पद्यम् -

**आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्।**
**तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति।।**

एवं त्रिविधं वा भवतु, चतुर्विधं वा वयः भवतु। प्रथमं वयः तु कौमारं वयः इत्येव।

**उदाहरणम्** - कुमारी। वधूटी। चिरन्टी।

**सूत्रार्थसमन्वयः** -

**कुमारी।** कुमार इति शब्दः अदन्तः अस्ति, अपि च प्रातिपदिकमपि अस्ति। एवमेव प्रथमवयसि विद्यमानानां शिशूनां वाचकः अपि अस्ति। अतः स्त्रीत्वविवक्षायां प्रथमवयोवाचकात् अदन्तात् कुमार इति प्रातिपदिकात् वयसि प्रथमे इति सूत्रेण ङीप्प्रत्ययः भवति। तेन कुमार ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन कुमार ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण कुमार इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते कुमारी इति रूपं सिध्यति।

## [१०.४] द्विगोः॥ (४.१.२१)

**सूत्रार्थः** - अदन्तात् द्विगुसंज्ञकात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति।



**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् एकमेव पदम् अस्ति। द्विगोः इति पञ्चम्यन्तं पदम्। अत्र ऋन्नेभ्यो ङीप् इति सूत्रात् ङीप् (१/१) इति पदम्, अजाद्यतष्टाप् इति सूत्रात् अतः (५/१) इति पदं च अनुवर्तते। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र सूत्रे द्विगोः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन द्विगुसंज्ञकात् प्रातिपदिकात् इत्यर्थः समायाति। अतः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन अदन्तात् प्रातिपदिकात् इत्यर्थो भवति। ततश्च सूत्रार्थो भवति - द्विगुसंज्ञकात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति।

**उदाहरणम्** - त्रिलोकी। त्रिपादी। अष्टाध्यायी। पञ्चवटी। चतुःसूत्री। दशरथी। पञ्चमूली। पञ्चलक्षणी।

**सूत्रार्थसमन्वयः** -

**त्रिलोकी।** त्रिलोक इति शब्दे द्विगुः समासः अस्ति। तथाहि त्रयाणां लोकानां समाहारः इति विग्रहे तद्धितार्थोत्तरपदसमाहारे च इति सूत्रेण समासः भवति। ततः परं संख्यापूर्वो द्विगुः इति सूत्रेण तस्य द्विगुसंज्ञा भवति। एवमेव त्रिलोक इति शब्दः अदन्तः अस्ति। अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां द्विगुसंज्ञकात् अदन्तात् त्रिलोक इति प्रातिपदिकात् द्विगोः इति सूत्रेण ङीप्प्रत्ययः भवति। तेन त्रिलोक ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन त्रिलोक ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण त्रिलोक इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते त्रिलोकी इति रूपं सिध्यति।

## [१०.५] वर्णादनुदात्तात्तोपधात्तो नः॥ (४.१.३९)

**सूत्रार्थः** - वर्णवाचकात् तोपधात् अनुपसर्जनात् अनुदात्तान्तात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीप् प्रत्ययः भवति, तकारस्य स्थाने नकारश्च भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। वर्णात् इति पञ्चम्यन्तं पदम्। अनुदात्तात् इति पञ्चम्यन्तं पदम्। तोपधात् इति पञ्चम्यन्तं पदम्। तः इति षष्ठ्यन्तं पदम्। नः इति प्रथमान्तं पदम्। अत्र सूत्रे ऋन्नेभ्यो ङीप् इति सूत्रात् ङीप् (१/१) इति पदमनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः (५/१) इति पदं च अनुवर्तते। मनोरौ वा इति सूत्रात् वा इति अव्ययपदमनुवर्तते। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। तोपधात् इति पदमत्र समस्तं वर्तते। अत्र बहुव्रीहिसमासः अस्ति। तथाहि तः उपधा यस्य सः तोपधः। तस्मात् तोपधात्। अत्र सूत्रे अनुदात्तात् इति पदं अतः इति पदं च प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन अनुदात्तात् इत्यत्र अतः इत्यत्र च तदन्तविधिः भवति। तेन अनुदात्तात्



इत्यस्य अनुदात्तान्तात् इत्यर्थः। अतः इत्यस्य अदन्तात् इत्यर्थश्च भवति। वर्णात् इति पदम्, तोपधात् इति पदम्, अनुपसर्जनात् इति च प्रातिपदिकात् इत्यस्यैव विशेषणं भवति। तेन सूत्रार्थः भवति - वर्णवाचकात् तोपधात् अनुपसर्जनात् अनुदात्तान्तात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीप् प्रत्ययः भवति, तकारस्य स्थाने नकारश्च भवति।

**उदाहरणम् -** एनी एता। रोहिणी रोहिता। श्येनी श्येता। हरिणी हरिता।

**सूत्रार्थसमन्वयः -**

**एनी, एता**। अत्र एत इति शब्दः अस्ति। अयं चित्रवर्णस्य वाचकः अस्ति। पुनः अस्य शब्दस्य उपधायां तकारः अस्ति। अतः अयं शब्दः तोपधः अपि अस्ति। एत इति शब्दस्य अन्त्यः अकारः अनुदात्तः अस्ति। अतः अयं शब्दः अनुदात्तान्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। पुनः अदन्तः अस्ति। अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां वर्णवाचकात् तोपधात् अनुदात्तान्तात् अनुपसर्जनात् अदन्तात् एत इति प्रातिपदिकात् वर्णादनुदात्तात्तोपधात्तो नः इति सूत्रेण ङीप् प्रत्ययः, तकारस्य नकारश्च भवति। तेन एन ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन एन ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण एन इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते एनी इति रूपं सिध्यति। एवञ्च वर्णादनुदात्तात्तोपधात्तो नः इति सूत्रं विकल्पेन प्रवर्तते। यदा अस्य सूत्रस्य प्रवृत्तिः नैव भवति, तदा एत इत्यस्य अदन्तत्वात् स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इति सूत्रेण टापि कृते एता इति रूपं सिध्यति।

**रोहिणी, रोहिता।** अत्र रोहित इति शब्दः अस्ति। अयं रक्तवर्णस्य वाचकः अस्ति। पुनः अस्य शब्दस्य उपधायां तकारः अस्ति। अतः अयं शब्दः तोपधः अपि अस्ति। रोहित इति शब्दस्य अन्त्यः अकारः अनुदात्तः अस्ति। अतः अयं शब्दः अनुदात्तान्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। पुनः अदन्तः अस्ति। अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां वर्णवाचकात् तोपधात् अनुदात्तान्तात् अनुपसर्जनात् अदन्तात् रोहित इति प्रातिपदिकात् वर्णादनुदात्तात्तोपधात्तो नः इति सूत्रेण ङीप् प्रत्ययः, तकारस्य नकारश्च भवति। तेन रोहिन ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन रोहिन ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण रोहिन इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे नकारस्य णकारे च कृते वर्णसम्मेलने च कृते रोहिणी इति रूपं सिध्यति। पुनः वर्णादनुदात्तात्तोपधात्तो नः इति सूत्रं विकल्पेन प्रवर्तते। एवञ्च यदा अस्य सूत्रस्य प्रवृत्तिः नैव भवति, तदा रोहित इत्यस्य अदन्तत्वात् स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इति सूत्रेण टापि कृते रोहिता इति रूपं सिध्यति।



### [१०.६] टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः॥ (४.१.१५)

**सूत्रार्थः** - टिदन्तात् ढप्रत्ययान्तात् अण्-प्रत्ययान्तात् अञ्-प्रत्ययान्तात् द्वयसच्-प्रत्ययान्तात् दघ्नञ्-प्रत्ययान्तात् मात्रच्-प्रत्ययान्तात् तयप्-प्रत्ययान्तात् ठक्-प्रत्ययान्तात् ठञ्-प्रत्ययान्तात् कञ्-प्रत्ययान्तात् क्वरप्-प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीप्प्रत्ययं विदधाति। सूत्रेऽस्मिन् एकमेव पदमस्ति। टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति पञ्चम्येकवचनान्तं पदम्। अत्र सूत्रे ऋन्नेभ्यो ङीप् इति सूत्रात् ङीप् (१/१) इति पदमनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः (५/१) इति पदं च अनुवर्तते। अत्र सूत्रे स्त्रियाम् (७/१) इति अधिकारः आगच्छति। अपि च ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् (५/१) इति अनुवर्तते। प्रत्ययः (१/१) इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र अनुपसर्जनात् इति अधिकारः आगच्छति। टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति पदं समस्तमस्ति। अत्र च समाहारद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति - टित् च ढः च अण् च अञ् च द्वयसच् च दघ्नञ् च मात्रच् च तयप् च ठक् च ठञ् च कञ् च क्वरप् च इति टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्। तस्मात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति। अत्र टित् इति पदं समस्तमस्ति। अत्र च बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति ट् इत् यस्य सः टित्। अर्थात् टकारेत्संज्ञकः। अत्र सूत्रे टित्पदेन टितः प्रातिपदिकस्य प्रत्ययस्य धातोः च ग्रहणम् अस्ति। पुनः टिदंशे तदन्तविधिः भवति। तेन टितः इत्यस्य टिदन्तात् इत्यर्थः। सूत्रे ढ इत्यतः आरभ्य क्वरप्पर्यन्तं सर्वे अपि प्रत्ययाः सन्ति। सर्वत्रैव च तदन्तविधिः भवति प्रत्ययग्रहणे तदन्ता ग्राह्या इति परिभाषया। तेन च ढप्रत्ययान्तात् अण्प्रत्ययान्तात् अञ्प्रत्ययान्तात् द्वयसच्प्रत्ययान्तात् दघ्नञ्प्रत्ययान्तात् मात्रच्प्रत्ययान्तात् तयप्प्रत्ययान्तात् ठक्प्रत्ययान्तात् ठञ्प्रत्ययान्तात् कञ्प्रत्ययान्तात् क्वरप्प्रत्ययान्तात् इत्यर्थः तेषां लभ्यते। एतेषां समेषामपि प्रातिपदिके अन्वयः भवति। अत्र सूत्रे अतः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन अतः इत्यंशे येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन अतः इत्यस्य अदन्तात् इत्यर्थो भवति। अनुपसर्जनात् इत्यपि प्रातिपदिकात् इत्यत्र अन्वेति। एवञ्च सूत्रार्थो भवति - टिदन्तात् ढप्रत्ययान्तात् अण्प्रत्ययान्तात् अञ्प्रत्ययान्तात् द्वयसच्प्रत्ययान्तात् दघ्नञ्प्रत्ययान्तात् मात्रच्प्रत्ययान्तात् तयप्प्रत्ययान्तात् ठक्प्रत्ययान्तात् ठञ्प्रत्ययान्तात् कञ्प्रत्ययान्तात् क्वरप्प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात्।

**उदाहरणम्** - नदी। कुरुचरी। सौपर्णेयी। ऐन्द्री। कुम्भकारी। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी।



**सूत्रार्थसमन्वयः -**

**नदी**। टिदन्तात् अदन्तात् अनुपसर्जनात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः भवति इत्यंशस्य इदम् उदाहरणम् अस्ति। अत्र नदट् इति शब्दः अस्ति। अस्य टकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण लोपः भवति। तेन नद इति अवशिष्यते। इदं टित् प्रातिपदिकमस्ति। अपि च व्यवदेशिवद्भावेन टिदन्तम् अपि अस्ति। अदन्तमपि अस्ति। अनुपसर्जनमपि अस्ति। तस्मात् टिदन्तात् अनुपसर्जनात् अदन्तात् नद इति प्रातिपदिकात् स्त्रीत्वे द्योत्ये टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन नद ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन नद ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण नद इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते नदी इति रूपं सिध्यति। एवमेव देवी चोरी इत्यादावपि बोध्यम्।

**कुरुचरी**। टिदन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य इदम् उदाहरणम् अस्ति। अत्र कुरुचर इति शब्दः अस्ति। अयं शब्दः कुरुषु चरति इत्यर्थे कुरु सु चर् इत्यतः चरेष्टः इति सूत्रेण टप्रत्यये कृते सति सिध्यति। तस्मादयं शब्दः टिदन्तः अस्ति। अपि च अदन्तः अपि अस्ति। अनुपसर्जनम् अपि अस्ति। प्रातिपदिकम् अपि अस्ति। अतः टिदन्तात् अनुपसर्जनात् अदन्तात् कुरुचर इति प्रातिपदिकात् स्त्रीत्वे द्योत्ये टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन कुरुचर ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन कुरुचर ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण कुरुचर इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते कुरुचरी इति रूपं सिध्यति।

**सौपर्णेयी**। ढप्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य इदम् उदाहरणम् अस्ति। अत्र सौपर्णेय इति शब्दः अस्ति। अयं शब्दः सुपर्ण्याः अपत्यं स्त्री इत्यर्थे स्त्रीभ्यो ढक् इति सूत्रेण ढक्-प्रत्यये कृते सति सिध्यति। तस्मादयं शब्दः ढप्रत्ययान्तः अस्ति। अपि च अदन्तः अपि अस्ति। अनुपसर्जनम् अपि अस्ति। प्रातिपदिकम् अपि अस्ति। अतः ढप्रत्ययान्तात् अनुपसर्जनात् अदन्तात् सौपर्णेय इति प्रातिपदिकात् स्त्रीत्वे द्योत्ये टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन सौपर्णेय ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन सौपर्णेय ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण सौपर्णेय इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते सौपर्णेयी इति रूपं सिध्यति। एवमेव वैनतेयी इत्यादावपि बोध्यम्।





**ऐन्द्री**। अणन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य इदम् उदाहरणम् अस्ति। अत्र ऐन्द्र इति शब्दः अस्ति। अयं शब्दः इन्द्रो देवता अस्याः इति विग्रहे इन्द्रशब्दात् सास्य देवता इति सूत्रेण अण् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः अण्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च अण्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् ऐन्द्र इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन ऐन्द्र ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन ऐन्द्र ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण ऐन्द्र इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते ऐन्द्री इति रूपं सिध्यति।

**कुम्भकारी**। अणन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य इदम् उदाहरणम् अस्ति। अत्र कुम्भकार इति शब्दः अस्ति। अयं शब्दः कुम्भं करोति इति विग्रहे कुम्भ अम् कृ इत्यतः कर्मण्यण् इति सूत्रेण अण् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः अण्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च अण्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् कुम्भकार इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन कुम्भकार ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन कुम्भकार ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण कुम्भकार इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते कुम्भकारी इति रूपं सिध्यति।

**औत्सी**। इदम् अञन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र औत्स इति अस्ति। अयं शब्दः उत्सस्य इयम् इति विग्रहे उत्स इति शब्दात् उत्सादिभ्योऽञ् इति सूत्रेण अञ् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः अञ्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च अञ्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् औत्स इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन औत्स ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन औत्स ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण औत्स इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते औत्सी इति रूपं सिध्यति।

**ऊरुद्वयसी**। इदम् द्वयसजन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र ऊरुद्वयस इति अस्ति। अयं शब्दः ऊरू प्रमाणम् अस्याः इति विग्रहे ऊरू इति शब्दात् प्रमाणे द्वयसजदघ्नञ्मात्रचः इति सूत्रेण द्वयसच् इति प्रत्यये कृते

सति सिध्यति। एवञ्च अयं शब्दः द्वयसच्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च द्वयसच्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् ऊरुद्वयस इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन ऊरुद्वयस ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन ऊरुद्वयस ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण ऊरुद्वयस इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते ऊरुद्वयसी इति रूपं सिध्यति।

**ऊरुदघ्नी**। इदम् दघ्नजन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र ऊरुदघ्न इति अस्ति। अयं शब्दः ऊरू प्रमाणम् अस्याः इति विग्रहे ऊरू इति शब्दात् प्रमाणे द्वयसजदघ्नञ्मात्रचः इति सूत्रेण दघ्नच् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः दघ्नच्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च दघ्नच्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् ऊरुदघ्न इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन ऊरुदघ्न ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन ऊरुदघ्न ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण ऊरुदघ्न इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते ऊरुदघ्नी इति रूपं सिध्यति।

**ऊरुमात्री**। इदम् मात्रजन्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र ऊरुमात्र इति अस्ति। अयं शब्दः ऊरू प्रमाणम् अस्याः इति विग्रहे ऊरू इति शब्दात् प्रमाणे द्वयसजदघ्नञ्मात्रचः इति सूत्रेण मात्रच् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः मात्रच्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च मात्रच्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् ऊरुमात्र इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन ऊरुमात्र ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन ऊरुमात्र ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण ऊरुमात्र इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते ऊरुमात्री इति रूपं सिध्यति।

**पञ्चतयी**। इदम् तयप्प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र पञ्चतय इति अस्ति। अयं शब्दः पञ्च अवयवाः अस्याः इति विग्रहे पञ्च इति शब्दात् संख्यायाः अवयवे तयप् इति सूत्रेण तयप् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः तयप्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च तयप्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् पञ्चतय इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन



पञ्चतय ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन पञ्चतय ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण पञ्चतय इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते पञ्चतयी इति रूपं सिध्यति।

**आक्षिकी**। इदम् ठक्प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र आक्षिक इति अस्ति। अयं शब्दः अक्षैः दीव्यति इति विग्रहे अक्ष इति शब्दात् तेन दीव्यति खनति जयति जितम् इति सूत्रेण ठक् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः ठक्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च ठक्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् आक्षिक इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन आक्षिक ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन आक्षिक ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण आक्षिक इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते आक्षिकी इति रूपं सिध्यति।

**लावणिकी**। इदम् ठञ्प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र लावणिक इति अस्ति। अयं शब्दः लवणं पण्यम् अस्याः इति विग्रहे लवण इति शब्दात् लवणाट् ठञ् इति सूत्रेण ठञ् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः ठञ्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च ठञ्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् लावणिक इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन लावणिक ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन लावणिक ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण लावणिक इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते लावणिकी इति रूपं सिध्यति।

**यादृशी**। इदम् कञ्प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र यादृश इति अस्ति। अयं शब्दः यत् इति शब्दात् त्यदादिषु दृशोऽनालोचने कञ् इति सूत्रेण कञ् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः कञ्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च कञ्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् यादृश इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन यादृश ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन यादृश ई इति स्थितिः



भवति। ततः यचि भम् इति सूत्रेण यादृश इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते यादृशी इति रूपं सिध्यति।

**इत्वरी**। इदम् क्वरप्प्रत्ययान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीप् प्रत्ययः स्यात् इत्यंशस्य उदाहरणम् अस्ति। अत्र इत्वर इति अस्ति। अयं शब्दः इण् इति धातोः इण्नशजिसर्तिभ्यः क्वरप् इति सूत्रेण क्वरप् इति प्रत्यये कृते सति सिध्यति। एवञ्च अयं शब्दः क्वरप्प्रत्ययान्तः अस्ति। अदन्तः अपि अस्ति। अनुपसर्जनः अपि अस्ति। प्रातिपदिकसंज्ञकः अपि अस्ति। एवञ्च क्वरप्प्रत्ययान्तात् अदन्तात् अनुपसर्जनात् इत्वर इति प्रातिपदिकात् टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रेण ङीप् प्रत्ययः भवति। तेन इत्वर ङीप् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीपः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण पकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन इत्वर ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण इत्वर इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते इत्वरी इति रूपं सिध्यति।



## पाठगतप्रश्नाः

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. ऋन्नेभ्यः इति पदे कः समासः, कश्च विग्रहः।

२. उगितः इति पदे कः समासः कश्च विग्रहः।

३. तोपधात् इति पदे कः समासः कश्च विग्रहः।

४. कुम्भकारी इत्यस्य कः विग्रहः।

५. ऊरुद्वयसी इत्यस्य कः अर्थः।

६. पञ्चतयी इत्यस्य कः अर्थः।



## पाठसारः

ऋन्नेभ्यो ङीप् इति सूत्रं ङीप्प्रत्ययविधायकेषु सूत्रेषु प्रमुखं सूत्रमस्ति, तस्य सर्वप्रथमम् अत्र पाठे व्याख्या वर्तते। ततः परम् उगितश्च इति सूत्रस्य व्याख्या अस्ति। तदन्तरं वयसि प्रथमे इति सूत्रस्य व्याख्या विद्यते। तत्पश्चात् द्विगोः इति सूत्रस्य व्याख्या वर्तते। ततश्च वर्णादनुदात्तात्तोपधात् तो नः इति सूत्रस्य व्याख्यानं विद्यते। अन्तिमे च टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रस्य व्याख्या अस्ति। एवञ्च यथासम्भवम् उदाहरणेषु सूत्रार्थस्य समन्वयः अपि प्रदर्शितः अस्ति।





## पाठान्तप्रश्नाः-

अत्र परीक्षोपयोगिनः प्रष्टव्याः प्रश्नाः प्रदीयन्ते।

१. ऋन्नेभ्यो ङीप् इति सूत्रस्य व्याख्यां लिखत।

२. उगितश्च इति सूत्रं व्याख्यात।

३. वयसि प्रथमे इति सूत्रस्य व्याख्यानं कुर्वन्तु।

४. द्विगोः इति सूत्रस्य व्याख्यानं लिख।

५. वर्णादनुदात्तात्तोपधात् तो नः इति सूत्रस्य व्याख्यां लिखन्तु।

६. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति सूत्रस्य व्याख्या कार्या।

७. सौपर्णेयी इति प्रयोगं साधयत।

८. कुमारी इति प्रयोगः साधनीयः।

९. भवन्ती इति प्रयोगस्य सिद्धिप्रक्रियां लिखत।

१०. इत्वरी इति प्रयोगस्य सिद्धिं लिखन्तु।

११. रोहिणी, रोहिता इत्यनयोः प्रयोगयोः सिद्धिः कार्या।



## पाठगतप्रश्नोत्तराणि -

१. ऋन्नेभ्यः इति पदे इतरेतरयोगद्वन्द्वसमासः अस्ति। तस्य च विग्रहः भवति - ऋच्च नश्च इति ऋन्नः, तेभ्यः ऋन्नेभ्यः।

२. उगितः इति पदे बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति - उक् इत् यस्य सः उगित्। तस्य उगितः।

३. तोपधात् इति पदे बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति - तः उपधा यस्य सः तोपधः। तस्मात् तोपधात्।

४. कुम्भं करोति या सा कुम्भकारी इति विग्रहः।

५. ऊरू प्रमाणम् अस्याः इति ऊरुद्वयसी इत्यस्य अर्थः।

६. पञ्च अवयवाः अस्याः इति पञ्चतयी इत्यस्य अर्थः।

॥ इति दशमः पाठः॥



# ११

# स्त्रीप्रत्ययः - ङीष्-प्रत्ययः

## प्रस्तावना

अत्र स्त्रीप्रत्ययप्रकरणस्यादौ एव वर्णितं यद् अष्टौ स्त्रीप्रत्ययाः सन्ति। तेषु ङीष्प्रत्ययः अपि प्रमुखः प्रत्ययः अस्ति। तस्य विधायकानि अनेकानि सूत्राणि सन्ति। तेषामेवात्र व्याख्यानं क्रियते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- ङीष्प्रत्ययं ज्ञातुं शक्नुयात्।
- ङीष्प्रत्ययः कस्मात् प्रातिपदिकात् भवति इति ज्ञातुं प्रभवेत्।
- ङीष्प्रत्ययान्तशब्दं ज्ञातुं शक्नुयात्।
- ङीष्प्रत्ययस्य संयोजनेन शब्देषु किं किं परिवर्तनं भवति इति ज्ञातुं शक्नुयात्।
- ङीष्प्रत्ययस्य संयोजनं कृत्वा स्त्रीलिङ्गशब्दानां निर्माणं कर्तुं शक्नुयात्।
- पठनपाठनकाले तत्र तत्र शब्देषु ङीष्प्रत्ययः अस्ति नवा इति सुस्पष्टं ज्ञातुं प्रभवेत्।

## [११.१] षिद्गौरादिभ्यश्च॥ (४.१.४१)

**सूत्रार्थः** - षिदन्तात् अदन्तात् प्रातिपदिकात्, गौरादिगणपठितशब्दान्तात् अदन्तात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय षिद्गौरादिभ्यश्च इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। षिद्गौरादिभ्यः इति पञ्चम्यन्तं पदम्। च इति अव्ययं पदम्। अत्र सूत्रे अन्यतो ङीष् इति सूत्रात् ङीष् इति पदमनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः इति पदं च अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र षिद्गौरादिभ्यः इति पदं समस्तम् अस्ति। अत्र च बहुव्रीहिगर्भेतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति ष् इत् यस्य सः षित्। गौरः आदिः येषां ते गौरादयः। षित् च गौरादयश्च इति षिद्गौरादयः।



तेभ्यः षिद्गौरादिभ्यः। तेन अस्य शब्दस्य अर्थो भवति षितः गौरादेः च। गौरादेः इत्यस्य च गौरादिगणपठितात् इत्यर्थः।

**सूत्रार्थविचारः -** अत्र सूत्रे षिद्गौरादिभ्यः इति पदं प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। ततश्च षिदन्तात् गौरादिगणपठितशब्दान्तात् इत्यर्थः समागच्छति। पुनः अतः इत्यपि प्रातिपदिकात् इत्यस्य विशेषणं भवति तेन अतः इत्यत्रापि येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति तेन अतः इत्यस्य अदन्तात् इत्यर्थो लभ्यते। एवं समेषां पदानां संयोजनेन सूत्रार्थो भवति षिदन्तात् अदन्तात् प्रातिपदिकात्, गौरादिगणपठितशब्दान्तात् अदन्तात् प्रातिपदिकात् च स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**उदाहरणम् -** नर्तकी, खनकी, रजकी इत्यादीनि षितः उदाहरणानि। गौरी, सुन्दरी, नटी, कटी, पितामही, मातामही, इत्यादीनि गौरादिगणस्य उदाहरणानि सन्ति।

**सूत्रार्थसमन्वयः -** नर्तकी, गौरी, इत्यनयोः उदाहरणयोः सूत्रार्थस्य समन्वयः प्रस्तूयते।

**नर्तकी।** नृत् इति धातोः शिल्पिनि ष्वुन् इति सूत्रेण ष्वुन् प्रत्यये सति नृत् ष्वुन् इति स्थितिः भवति। ततः षकारस्य षः प्रत्ययस्य इति सूत्रेण नकारस्य च हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति। ततः तस्य लोपः इति सूत्रेण उभयोः लोपे कृते नृत् वु इति स्थितिः भवति। ततः वु इत्यस्य आर्धधातुसंज्ञकत्वात् पुगन्तलघूपधस्य च इति सूत्रेण उपधागुणे वु इत्यस्य स्थाने अक इत्यादेशे कृते नर्तक इति शब्दः सिध्यति। तत्र ष्वुन् प्रत्ययः षिद् अस्ति। तस्मात् नर्तकशब्दः षिदन्तः अस्ति। अदन्तः अस्ति, अपि च कृदन्तत्वात् प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां षिदन्तात् अदन्तात् नर्तक इति प्रातिपदिकात् षिद्गौरादिभ्यश्च इति सूत्रेण ङीष्प्रत्ययः भवति। तेन नर्तक ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन नर्तक ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण नर्तक इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते नर्तकी इति रूपं सिध्यति।

**गौरी।** गौरादिगणे गौर इति शब्दः पठितः अस्ति। तस्मादयं शब्दः गौरादिगणपठितः अस्ति। अपि च व्यपदेशिवद्भावेन गौरादिगणपठितशब्दान्तः अपि अस्ति। एवमेव अदन्तः अस्ति, अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां गौरादिगणपठितशब्दान्तात् अदन्तात् गौर इति प्रातिपदिकात् षिद्गौरादिभ्यश्च इति सूत्रेण ङीष्प्रत्ययः भवति। तेन गौर ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन गौर ई इति स्थितिः भवति। ततः यचि भम् इति सूत्रेण गौर इत्यस्य भसंज्ञा भवति। तेन च यस्येति च इति सूत्रेण अन्त्यस्य अकारस्य लोपे वर्णसम्मेलने च कृते गौरी इति रूपं सिध्यति।



## [११.२] वोतो गुणवचनात्॥ (४.१.४४)

**सूत्रार्थः** - गुणवाचकात् अनुपसर्जनात् उदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीष् प्रत्ययः भवति।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय वोतो गुणवचनात् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। उतः इति पञ्चम्यन्तं पदम्। गुणवचनात् इति पञ्चम्यन्तं पदम्। वा इति अव्ययपदम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति।

**सूत्रार्थविचारः** - अत्र गुणवचनात् इत्यस्य गुणवाचकात् इत्यर्थः। एतत्पदं च प्रातिपदिकात् इत्यस्य विशेषणं भवति। उतः इति पदमपि प्रातिपदिकात् इत्यस्य विशेषणं भवति ततश्च येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन उतः इत्यस्य उदन्तात् इत्यर्थो भवति। ततश्च सूत्रार्थो भवति गुणवाचकात् अनुपसर्जनात् उदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीष् प्रत्ययः भवति।

**उदाहरणम्** - मृद्वी, मृदुः। लघ्वी, लघुः। गुर्वी, गुरुः। तन्वी, तनुः। पृथ्वी, पृथुः। साध्वी साधुः। पट्वी पटुः। इत्यादीनि उदन्तगुणवाचकस्य उदाहरणानि भवन्ति।

**सूत्रार्थसमन्वयः** - मृद्वी, मृदुः, इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**मृद्वी, मृदुः।** अत्र मृदु इति शब्दः अस्ति। अयं शब्दः गुणवाचकः अस्ति। उदन्तः अस्ति। अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां गुणवाचकात् उदन्तात् मृदु इति प्रातिपदिकात् वोतो गुणवचनात् इति सूत्रेण विकल्पेन ङीष्प्रत्ययः भवति। तेन मृदु ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन मृदु ई इति स्थितिः भवति। ततः इको यणचि इति सूत्रेण यणादेशे कृते वर्णसम्मेलने च कृते मृद्वी इति रूपं सिध्यति। यदा च ङीष्प्रत्ययः न भवति तदा मृदुः इत्येव रूपं तिष्ठति।

## [११.३] बह्वादिभ्यश्च॥ (४.१.४५)

**सूत्रार्थः** - बह्वादिगणपठितात् अनुपसर्जनात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीष् प्रत्ययः भवति।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय बह्वादिभ्यश्च इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। वह्वादिभ्यः इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम् अनुवर्तते। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति



पदम्। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र बह्वादिभ्यः इति पदं समस्तम् अस्ति। अत्र च बहुव्रीहिसमासः अस्ति। एतस्य विग्रहः भवति बहुः आदिः येषां ते बह्वादयः। तेभ्यः बह्वादिभ्यः। अस्य बह्वादिगणपठितशब्देभ्यः इत्यर्थः।

**सूत्रार्थविचारः** - अत्र बह्वादिभ्यः इति प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च सूत्रार्थो भवति बह्वादिगणपठितात् अनुपसर्जनात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीष् प्रत्ययः भवति।

**उदाहरणम् - बह्वी, बहुः।** कपी, कपिः। अही, अहिः। मुनी, मुनिः। इत्यादीनि बह्वादिगणस्य उदाहरणानि सन्ति।

**सूत्रार्थसमन्वयः** - बह्वी बहुः, इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**बह्वी, बहुः।** अत्र बहु इति शब्दः अस्ति। अयं शब्दः बह्वादिगणे पठितः अस्ति। अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां बह्वादिगणपठितात् बहु इति प्रातिपदिकात् बह्वादिभ्यश्च इति सूत्रेण विकल्पेन ङीष्प्रत्ययः भवति। तेन बहु ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन बहु ई इति स्थितिः भवति। ततः इको यणचि इति सूत्रेण यणादेशे कृते वर्णसम्मेलने च कृते बह्वी इति रूपं सिध्यति। यदा च ङीष्प्रत्ययः न भवति तदा बहुः इत्येव रूपं तिष्ठति।

## [११.४] इतो मनुष्यजातेः॥ (४.१.६५)

**सूत्रार्थः** - मनुष्यजातिवाचकात् अनुपसर्जनात् इदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय इतो मनुष्यजातेः इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। इतः इति पञ्चम्यन्तं पदम्। मनुष्यजातेः इति पञ्चम्यन्तं पदम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र मनुष्यजातेः इति पदं समस्तम् अस्ति। अत्र च षष्ठीतत्पुरुषसमासः अस्ति। एतस्य विग्रहः भवति मनुष्याणां जातिः इति मनुष्यजातिः, तस्याः मनुष्यजातेः। अस्य मनुष्यजातिवाचकात् इत्यर्थः।

**सूत्रार्थविचारः** - अत्र इतः इति पदं प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन इतः इत्यस्य इदन्तात् इत्यर्थः लभ्यते। मनुष्यजातेः इत्यपि प्रातिपदिकात् इत्यस्य विशेषणम् अस्ति। ततश्च सूत्रार्थो भवति मनुष्यजातिवाचकात् अनुपसर्जनात् इदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**उदाहरणम् -** दाक्षी। प्लाक्षी। औदमेयी। अवन्ती। कुन्ती। इत्यादीनि इदन्तमनुष्यजातिवाचकस्य उदाहरणानि भवन्ति।

**सूत्रार्थसमन्वयः -** दाक्षी इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**दाक्षी**। अत्र दाक्षि इति शब्दः अस्ति। अयं शब्दः मनुष्यजातिवाचकः अस्ति। अपि च इदन्तः अपि अस्ति प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां इदन्तात् मनुष्यजातिवाचकात् दाक्षि इति प्रातिपदिकात् इतो मनुष्यजातेः इति सूत्रेण विकल्पेन ङीष्प्रत्ययः भवति। तेन दाक्षि ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन दाक्षि ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण इकारलोपे कृते वर्णसम्मेलने च कृते दाक्षी इति रूपं सिध्यति।

## [११.५] पुंयोगादाख्यायाम्॥ (४.१.४८)

**सूत्रार्थः -** पुरुषसम्बन्धात् स्त्रियां विद्यमानात् पुरुषवाचकात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**सूत्रावतरणम् -** ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय पुंयोगादाख्यायाम् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। पुंयोगाद् इति पञ्चम्येकवचनान्तं पदम्। आख्यायाम् इति सप्तम्येकवचनान्तं पदम्। परन्तु अत्र पञ्चम्यर्थे सप्तमीविभक्तिः अस्ति, तस्मात् आख्यायाम् इत्यस्य स्थाने आख्यायाः इति ज्ञेयम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र पुंयोगात् इत्यस्य च पुरुषसम्बन्धात् इत्यर्थो बोध्यः। एवम् आख्याशब्दस्य वाचकः इत्यर्थः अस्ति। तेन आख्यायाः इत्यस्य वाचकात् इत्यर्थः ज्ञेयः। तत्र कस्य वाचकात् इति जिज्ञासायाम् पुंयोगात् इति पदसान्निध्यवशात् पुरुषवाचकात् इति लभ्यते।

**सूत्रार्थविचारः -** अत्र पुंयोगात् इत्यस्य स्त्रियाम् इत्यत्र अन्वयः भवति। स्त्रियाम् इत्यस्य च पुरुषवाचकात् इत्यत्र अन्वयः भवति। पुरुषवाचकात् इत्यस्य प्रातिपदिकात् इत्यत्र अन्वयः भवति। अतः इति पदं प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन अतः इत्यस्य अदन्तात् इत्यर्थः लभ्यते। एवं सर्वपदसंयोजनेन सूत्रार्थः भवति पुरुषसम्बन्धात् स्त्रियां विद्यमानात् पुरुषवाचकात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**उदाहरणम् -** गोपी। गणकी। महापात्री। गिरीशी। इत्यादीनि उदाहरणानि सन्ति।



**सूत्रार्थसमन्वयः** - गोपी इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**गोपी**। अत्र गोप इति शब्दः अस्ति। अयं शब्दः गोपालनकर्तुः पुरुषस्य वाचकः अस्ति। परन्तु गोपालेन पुरुषेण सह यस्याः स्त्रियाः विवाहः भवति तस्यै अपि अयं गोपशब्दः प्रयुज्यते। अतः अयं गोपशब्दः पुरुषसम्बन्धात् स्त्रियाम् अपि विद्यमानं भवति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायां पुरुषसम्बन्धात् स्त्रियां विद्यमानात् अदन्तात् गोप इति प्रातिपदिकात् पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति। तेन गोप ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन गोप ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते गोपी इति रूपं सिध्यति। तत्र गोपः इत्यस्य गोपालनकर्ता इत्यर्थः। गोपी इत्यस्य च गोपस्य स्त्री इत्यर्थः भवति।

## [११.६] जातेरस्त्रीविषयादयोपधात्॥ (४.१.६३)

**सूत्रार्थः** - अनियतस्त्रीलिङ्गात् यकारोपधभिन्नात् अनुपसर्जनात् जातिवाचकात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय जातेरस्त्रीविषयादयोपधात् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। जातेः इति पञ्चम्यन्तं पदम्। अस्त्रीविषयाद् इति पञ्चम्यन्तं पदम्। अयोपधात् इति पञ्चम्यन्तं पदम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र अस्त्रीविषयात् इति पदं समस्तम् अस्ति। अत्र च बहुव्रीहिगर्भनञ्तत्पुरुषसमासः अस्ति। एतस्य विग्रहः भवति स्त्री विषयः यस्य सः स्त्रीविषयः, अस्य च नित्यस्त्रीलिङ्गः इत्यर्थः। न स्त्रीविषयः यस्य सः अस्त्रीविषयः। तस्मात् अस्त्रीविषयात्। अस्य नित्यस्त्रीलिङ्गभिन्नात् इत्यर्थः, अनियतस्त्रीलिङ्गात् इति यावत्। पुनः अयोपधात् इत्यपि समस्तं पदम्। अत्रापि बहुव्रीहिगर्भनञ्तत्पुरुषसमासः अस्ति। अस्य च विग्रहः भवति यः उपधा यस्य सः योपधः, न योपधः इति अयोपधः, तस्मात् अयोपधात् इति। अस्य च यकारोपधभिन्नात् इत्यर्थः।

**सूत्रार्थविचारः** - अत्र जातेः इति पदम्, अस्त्रीविषयात् इति पदम्, अयोपधात् इति पदम्, अनुपसर्जनात् इति पदं च प्रातिपदिकात् इत्यस्य विशेषणं भवति। तेन सूत्रार्थः भवति अनियतस्त्रीलिङ्गात् यकारोपधभिन्नात् अनुपसर्जनात् जातिवाचकात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**उदाहरणम्** - तटी। कुक्कुटी। सूकरी। वृषली। कठी। बह्वृची। औपगवी। इत्यादीनि उदाहरणानि सन्ति।



**सूत्रार्थसमन्वयः** - तटी, वृषली, कठी, इति त्रिषु उदाहरणेषु सूत्रार्थस्य समन्वयः क्रियते।

**तटी**। अत्र तट इति शब्दः अस्ति। अयं शब्दः त्रिलिङ्गः अस्ति इत्यतः अनियतस्त्रीलिङ्गः अस्ति। अस्य शब्दस्य उपधायां यकारः नास्ति, अतः यकारोपधभिन्नः अपि अस्ति। अपि च अनुपसर्जनः अपि अस्ति। पुनः जातिवाचकः अपि अस्ति। एवमेव प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अनियतस्त्रीलिङ्गात् अयोपधात् अनुपसर्जनात् जातिवाचकात् तट इति प्रातिपदिकात् जातेरस्त्रीविषयादयोपधात् इति सूत्रेण ङीष्प्रत्ययः भवति। तेन तट ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन तट ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते तटी इति रूपं सिध्यति।

**वृषली**। अत्र वृषल इति शब्दः अस्ति। अयं शब्दः द्विलिङ्गः अस्ति इत्यतः अनियतस्त्रीलिङ्गः अस्ति। अस्य शब्दस्य उपधायां यकारः नास्ति, अतः यकारोपधभिन्नः अपि अस्ति। अपि च अनुपसर्जनः अपि अस्ति। पुनः जातिवाचकः अपि अस्ति। एवमेव प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अनियतस्त्रीलिङ्गात् अयोपधात् अनुपसर्जनात् जातिवाचकात् वृषल इति प्रातिपदिकात् जातेरस्त्रीविषयादयोपधात् इति सूत्रेण ङीष्प्रत्ययः भवति। तेन वृषल ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन वृषल ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते वृषली इति रूपं सिध्यति।

**कठी**। अत्र कठ इति शब्दः अस्ति। अयं शब्दः द्विलिङ्गः अस्ति इत्यतः अनियतस्त्रीलिङ्गः अस्ति। अस्य शब्दस्य उपधायां यकारः नास्ति, अतः यकारोपधभिन्नः अपि अस्ति। अपि च अनुपसर्जनः अपि अस्ति। पुनः जातिवाचकः अपि अस्ति। एवमेव प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अनियतस्त्रीलिङ्गात् अयोपधात् अनुपसर्जनात् जातिवाचकात् कठ इति प्रातिपदिकात् जातेरस्त्रीविषयादयोपधात् इति सूत्रेण ङीष्प्रत्ययः भवति। तेन कठ ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन कठ ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते कठी इति रूपं सिध्यति।

## [११.७] स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्॥ (४.१.५४)

**सूत्रार्थः** - संयोगोपधभिन्नम् उपसर्जनीभूतं च यत् स्वाङ्गम्, तादृशस्वाङ्गवाचकात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीष् स्यात्।



**सूत्रावतरणम् -** ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। स्वाङ्गात् इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम्। उपसर्जनात् इति पञ्चम्यन्तं पदम्। असंयोगोपधात् इति पञ्चम्यन्तं पदम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। वोतो गुणवचनात् इति सूत्रात् वा इति पदमनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः इति पदं च अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अत्र सूत्रे प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। असंयोगोपधात् इति पदं समस्तम् अस्ति। अत्र च बहुव्रीहिगर्भनञ्तत्पुरुषसमासः अस्ति। अस्य च विग्रहः भवति, संयोगः उपधायां यस्य सः संयोगोपधः, न संयोगोपधः इति असंयोगोपधः, तस्मात् असंयोगोपधात् इति। अस्य च संयोगोपधभिन्नात् इत्यर्थः।

**सूत्रार्थविचारः -** अत्र उपसर्जनात् इति असंयोगोपधात् इति च स्वाङ्गात् इत्यस्य विशेषणं भवति। तेन संयोगोपधभिन्नम् उपसर्जनं च यद् स्वाङ्गम्, इति लभ्यते। पुनः स्वाङ्गात् इति पदं प्रातिपदिकात् इत्यस्य विशेषणम् अस्ति। अतः इति पदमपि प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन स्वाङ्गान्तात् अदन्तात् इत्यर्थः लभ्यते। ततश्च सूत्रार्थः भवति संयोगोपधभिन्नम् उपसर्जनीभूतं च यत् स्वाङ्गम्, तादृशस्वाङ्गवाचकशब्दान्तात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये वा ङीष् स्यात्।

**उदाहरणम् -** अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। सुकेशी, सुकेशा। पीनस्तनी, पीनस्तना। इत्यादीनि उदाहरणानि सन्ति।

**सूत्रार्थसमन्वयः -** अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा, इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**अतिकेशी, अतिकेशा**। अत्र अतिकेश इति शब्दः अस्ति। अत्र केशशब्दः स्वाङ्गवाचकः अस्ति। पुनः केशशब्दस्य उपधायां संयोगः नास्ति अतः असंयोगोपधः अपि अस्ति। अपि च एतस्य अर्थः भवति केशान् अतिक्रान्तः इति। तस्मात् केशपदार्थः अतिक्रान्ते अर्थे उपसर्जनम् अपि अस्ति। एवञ्च असंयोगोपधः उपसर्जनीभूतः स्वाङ्गवाचकः शब्दः केशशब्दः। तादृशकेशशब्दान्तम् अदन्तं प्रातिपदिकं भवति अतिकेश इति। एवञ्च असंयोगोपधम् उपसर्जनीभूतं च स्वाङ्गम् केश इति तदन्तात् अदन्तात् अतिकेश इति प्रातिपदिकात् स्त्रीत्वविवक्षायां स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् इति सूत्रेण विकल्पेन ङीष्प्रत्ययः भवति। तेन अतिकेश ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन अतिकेश ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते अतिकेशी इति रूपं सिध्यति। यदा च ङीष्प्रत्यय नैव भवति तदा अजाद्यतष्टाप् इति सूत्रेण टापि प्रत्यये कृते अतिकेश टाप् इति स्थितौ



अनुबन्धलोपे च कृते अतिकेश आ इति स्थितिः भवति। ततः अकः सवर्णे दीर्घः इति सूत्रेण दीर्घैकादेशे कृते अतिकेशा इति रूपं सिध्यति।

**चन्द्रमुखी, चन्द्रमुखा।** अत्र चन्द्रमुख इति शब्दः अस्ति। अत्र मुखशब्दः स्वाङ्गवाचकः अस्ति। पुनः मुखशब्दस्य उपधायां संयोगः नास्ति अतः असंयोगोपधः अपि अस्ति। अपि च एतस्य अर्थः भवति चन्द्रसदृशमुखवान् इति। तस्मात् मुखपदार्थः अन्यपदार्थे उपसर्जनम् अपि अस्ति। एवञ्च असंयोगोपधः उपसर्जनीभूतः स्वाङ्गवाचकः शब्दः मुखशब्दः। तादृशमुखशब्दान्तम् अदन्तं प्रातिपदिकं भवति चन्द्रमुख इति। एवञ्च असंयोगोपधम् उपसर्जनीभूतं च स्वाङ्गम् मुख इति तदन्तात् अदन्तात् चन्द्रमुख इति प्रातिपदिकात् स्त्रीत्वविवक्षायां स्वाङ्गच्चोपसर्जनादसंयोगोपधात् इति सूत्रेण विकल्पेन ङीष्प्रत्ययः भवति। तेन चन्द्रमुख ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन चन्द्रमुख ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते चन्द्रमुखी इति रूपं सिध्यति। यदा च ङीष्प्रत्ययो नैव भवति तदा अजाद्यतष्टाप् इति सूत्रेण टापि प्रत्यये कृते चन्द्रमुख टाप् इति स्थितौ अनुबन्धलोपे च कृते चन्द्रमुख आ इति स्थितिः भवति। ततः अकः सवर्णे दीर्घः इति सूत्रेण दीर्घैकादेशे कृते चन्द्रमुखा इति रूपं सिध्यति।

## [११.८] क्रीतात्करणपूर्वात्॥ (४.१.५०)

**सूत्रार्थः** - करणपूर्वात् क्रीतान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय क्रीतात्करणपूर्वात् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। क्रीतात् इति पञ्चम्यन्तं पदम्। करणपूर्वात् इति पञ्चम्यन्तं पदम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः इति पदं च अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र करणपूर्वात् इति पदं समस्तम् अस्ति। अत्र च बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति करणं पुर्वं यस्य सः करणपूर्वः, तस्मात् करणपूर्वात्। अस्य च करणपूर्वकात् इत्यर्थः।

**सूत्रार्थविचारः** - अत्र अतः इति पदम्, क्रीतात् इति पदं च प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन च अदन्तात् क्रीतान्तात् इत्यर्थः लभ्यते। करणपूर्वात् इति पदमपि प्रातिपदिकात् इत्यस्य विशेषणं भवति। ततश्च सूत्रार्थो भवति करणपूर्वात् क्रीतान्तात् अनुपसर्जनात् अदन्तात् प्रातिपदिकात् स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः भवति।

**उदाहरणम्** - वस्त्रक्रीती। अश्वक्रीती।



**सूत्रार्थसमन्वयः** - वस्त्रक्रीती इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**वस्त्रक्रीती।** अत्र वस्त्रक्रीत इति शब्दः अस्ति। अयं शब्दः क्रीतान्तः अस्ति। अपि च अदन्तः अपि पुनः अस्य शब्दस्य पूर्वभागः अस्ति वस्त्र इति तच्च करणम् अस्ति, अतः अयं शब्दः करणपूर्वकः अपि अस्ति। अपि च प्रातिपदिकमपि अस्ति। अतः स्त्रीत्वविवक्षायां करणपूर्वकात् क्रीतान्तात् अदन्तात् वस्त्रक्रीत इति प्रातिपदिकात् क्रीतात्करणपूर्वात् इति सूत्रेण ङीष्प्रत्ययः भवति। तेन वस्त्रक्रीत ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। तेन वस्त्रक्रीत ई इति स्थितिः भवति। यचि भम् इति सूत्रेण भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण अकारलोपे कृते वर्णसम्मेलने च कृते वस्त्रक्रीती इति रूपं सिध्यति।

## [११.९] इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्॥ (४.१.४९)

**सूत्रार्थः** - इन्द्र वरुण भव शर्व रुद्र मृड हिम अरण्य यव यवन मातुल आचार्य इति एतेभ्यः अदन्तेभ्यः प्रातिपदिकेभ्यः स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः स्यात्, इन्द्रादिप्रातिपदिकानाम् आनुक् इत्यागमश्च स्यात्।

**सूत्रावतरणम्** - ङीप् ङीष् ङीन् इत्येतेषु त्रिषु प्रत्ययेषु ङीष् प्रत्ययः अन्यतमः अस्ति। तस्य विधानाय इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं ङीष्प्रत्ययम् आनुगागमं च विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणाम् इति षष्ठीबहुवचनान्तं पदम्। आनुक् इति प्रथमैकवचनान्तं पदम्। अत्र अन्यतो ङीष् इति सूत्रात् ङीष् इति पदम् अनुवर्तते। पुंयोगादाख्यायाम् इति सम्पूर्णमपि सूत्रमत्र अनुवर्तते। अजाद्यतष्टाप् इति सूत्रात् अतः इति पदं च अनुवर्तते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति अनुवर्तते। अनुपसर्जनात् इति अधिकारः, प्रत्ययः इति अधिकारः परश्च इति अधिकारः च अत्र आगच्छति। अत्र इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणाम् इति पदं समस्तम् अस्ति। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति इन्द्रश्च वरुणश्च भवश्च शर्वश्च रुद्रश्च मृडश्च हिमं च अरण्यं च यवश्च यवनश्च मातुलश्च आचार्यश्च इति इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याः। तेषाम् इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणाम् इति।

**सूत्रार्थविचारः** - अत्र अतः इति पदम्, प्रातिपदिकात् इत्यस्य विशेषणं भवति। अतः येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिः भवति। तेन च अदन्तात् इत्यर्थः लभ्यते। इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणाम् इति पदमपि प्रातिपदिकात् इत्यस्य विशेषणं



भवति। ततश्च इन्द्र वरुण भव शर्व रुद्र मृड हिम अरण्य यव यवन मातुल आचार्य इति एतेभ्यः अदन्तेभ्यः प्रातिपदिकेभ्यः स्त्रीत्वे द्योत्ये ङीष् प्रत्ययः स्यात्, इन्द्रादिप्रातिपदिकानाम् आनुक् इत्यागमश्च स्यात्। अत्रेदं बोध्यम् यत् इन्द्र वरुण भव शर्व रुद्र मृड मातुल आचार्य इति अष्टभ्यः प्रातिपदिकेभ्यः पुरुषसम्बन्धदशायां भवति। अर्थात् तस्य स्त्री इत्यर्थे सति भवति। हिम अरण्य इति द्वाभ्यां प्रातिपदिकाभ्यां तु महत्त्वे अर्थे सति भवति। यव इति प्रातिपदिकात् दुष्टे अर्थे सति भवति। यवन इत्यस्मात् च लिपिः इत्यर्थे सति भवति।

**उदाहरणम्** - इन्द्राणी वरुणानी भवानी शर्वाणी रुद्राणी मृडानी हिमानी अरण्यानी यवानी यवनानी मातुलानी आचार्यानी इत्यादीनि उदाहरणानि सन्ति।

**सूत्रार्थसमन्वयः** - इन्द्राणी वरुणानी आचार्यानी हिमानी अरण्यानी यवानी यवनानी इत्यत्र सूत्रार्थस्य समन्वयः प्रस्तूयते।

**इन्द्राणी**- अत्र इन्द्र इति शब्दः अस्ति। अयं शब्दः देवराजस्य वाचकः अस्ति। परन्तु देवराजेन इन्द्रेण सह यस्याः शचीदेव्याख्यायाः स्त्रियः विवाहः संजातः अस्ति तस्यै शचीदेव्यै अपि अयम् इन्द्रशब्दः प्रयुज्यते। अतः अयम् इन्द्रशब्दः पुरुषसम्बन्धात् स्त्रियाम् अपि विद्यमानं भवति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायां पुरुषसम्बन्धात् स्त्रियां विद्यमानात् अदन्तात् इन्द्र इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, इन्द्र इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन इन्द्र आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन इन्द्र आन् ई इति स्थितिः भवति। ततः इन्द्र आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते इन्द्रान् ई इति स्थितौ वर्णसम्मेलने इन्द्रानी इति जाते अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णत्वे च कृते इन्द्राणी इति सिध्यति। एतस्य च इन्द्रस्य स्त्री इत्यर्थः।

**वरुणानी**- अत्र वरुण इति शब्दः अस्ति। अयं शब्दः जलदेवस्य वाचकः अस्ति। परन्तु जलदेवेन वरुणेन सह यस्याः स्त्रियः विवाहः संजातः अस्ति तस्यै अपि अयम् वरुणशब्दः प्रयुज्यते। अतः अयम् वरुणशब्दः पुरुषसम्बन्धात् स्त्रियाम् अपि विद्यमानं भवति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायां पुरुषसम्बन्धात् स्त्रियां विद्यमानात् अदन्तात् वरुण इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, वरुण इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन वरुण आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन वरुण आन् ई इति स्थितिः भवति। ततः वरुण आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते वरुणान् ई इति स्थितौ वर्णसम्मेलने वरुणानी इति सिध्यति। एतस्य च वरुणस्य स्त्री इत्यर्थः। एवमेव भवानी शर्वाणी रुद्राणी मृडानी



इत्यादीनामपि सिद्धिः बोध्या। अत्र विस्तरभयात् न लिख्यते। तत्र भवानी इत्यस्य भवस्य स्त्री इत्यर्थः। शर्वाणी इत्यस्य शर्वस्य स्त्री इत्यर्थः।

**आचार्यानी-** अत्र आचार्य इति शब्दः अस्ति। अयं शब्दः अध्यापकस्य वाचकः अस्ति। परन्तु अध्यापकेन सह यस्याः स्त्रियः विवाहः संजातः अस्ति तस्यै अपि अयम् आचार्यशब्दः प्रयुज्यते। अतः अयम् आचार्यशब्दः पुरुषसम्बन्धात् स्त्रियाम् अपि विद्यमानं भवति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायां पुरुषसम्बन्धात् स्त्रियां विद्यमानात् अदन्तात् आचार्य इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, आचार्य इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन आचार्य आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन आचार्य आन् ई इति स्थितिः भवति। ततः आचार्य आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते आचार्यान् ई इति स्थितौ वर्णसम्मेलने आचार्यानी इति सिध्यति। अत्र यद्यपि नकारस्य स्थाने अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णकारः प्राप्तः अस्ति किन्तु आचार्यादणत्वं च इति वार्तिकेन तस्य निषेधः भवति। तेन आचार्यानी इति रूपं सिध्यति। एतस्य च आचार्यस्य स्त्री इत्यर्थः।

**हिमानी-** अत्र हिम इति प्रातिपदिकम् अस्ति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अदन्तात् हिम इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, हिम इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन हिम आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन हिम आन् ई इति स्थितिः भवति। ततः हिम आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते हिमान् ई इति स्थितौ वर्णसम्मेलने हिमानी इति सिध्यति। एतस्य च महद् हिमम् इत्यर्थः।

**अरण्यानी-** अत्र अरण्य इति प्रातिपदिकम् अस्ति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अदन्तात् अरण्य इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, अरण्य इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन वरुण आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन अरण्य आन् ई इति स्थितिः भवति। ततः अरण्य आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते अरण्यान् ई इति स्थितौ वर्णसम्मेलने अरण्यानी इति सिध्यति। एतस्य च महद् अरण्यम् इत्यर्थः।



**यवानी-** अत्र यव इति प्रातिपदिकम् अस्ति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अदन्तात् यव इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, यव इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन यव आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन यव आन् ई इति स्थितिः भवति। ततः यव आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते यवान् ई इति स्थितौ वर्णसम्मेलने यवानी इति सिध्यति। एतस्य च दुष्टाः यवाः इत्यर्थः।

**यवनानी-** अत्र यवन इति प्रातिपदिकम् अस्ति। अपि च इदम् अदन्तम् अपि अस्ति। अतः स्त्रीत्वविवक्षायाम् अदन्तात् यवन इति प्रातिपदिकात् परः पुंयोगादाख्यायाम् इति सूत्रेण ङीष्प्रत्ययः भवति, यवन इति प्रातिपदिकस्य आनुक् आगमश्च भवति। तेन यवन आनुक् ङीष् इति स्थितिः भवति। ततः लशक्वतद्धिते इति सूत्रेण ङीषः ङकारस्य इत्संज्ञा भवति। हलन्त्यम् इति सूत्रेण षकारस्य इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण च उभयोः लोपः भवति। आनुकः ककारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, आनुकः उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण उभयोः लोपः भवति। तेन यवन आन् ई इति स्थितिः भवति। ततः यवन आन् इत्यत्र अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे कृते यवनान् ई इति स्थितौ वर्णसम्मेलने यवनानी इति सिध्यति। एतस्य च यवनानां लिपिः इत्यर्थः।



## पाठगतप्रश्नाः

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. गौरादयः इति पदे कः समासः कश्च विग्रहः।

२. अस्त्रीविषयात् इति पदस्य कः अर्थः।

३. संयोगोपधः इति पदे कः समासः। कश्च विग्रहः।

४. गुणवचनात् इति पदस्य कः अर्थः।

५. करणपूर्वात् इति पदे कः समासः कश्च विग्रहः।

६. वस्त्रक्रीती इत्यस्य लौकिकं विग्रहं वाक्यं लिख।

७. अतिकेशी इत्यस्य लौकिकं विग्रहवाक्यं किम्।

८. औपगवी इत्यस्य कः अर्थः।





## पाठसारः

अस्मिन् पाठे ङीष्प्रत्ययस्य विवेचनं वर्तते। तत्र सर्वप्रथमं षिद्गौरादिभ्यश्च इति सूत्रस्य व्याख्यानं वर्तते। ततः परं वोतो गुणवचनात् इति सूत्रस्य व्याख्या वर्तते। तदन्तरं बह्वादिभ्यश्च इति सूत्रस्य विवेचनमस्ति। तत्पश्चात् इतो मनुष्यजातेः इति सूत्रस्य सोदाहरणं व्याख्यानं वर्तते। पुनः पुंयोगादाख्यायाम् इति सूत्रस्य व्याख्या अस्ति। तत्पश्चात् जातेरस्त्रीविषयादयोपधात् इति सूत्रस्य व्याख्या प्रदर्शिता। अतः परं स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् इति सूत्रस्य व्याख्यानं कृतम्। अन्तिमे च क्रीतात्पूर्वात्करणपूर्वात् इति सूत्रस्य व्याख्यानं वर्तते। अन्ते च इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् इति सूत्रस्य सोदाहरणं व्याख्यानं वर्तते।



## पाठान्तप्रश्नाः

अत्र परीक्षोपयोगिनः प्रष्टव्याः प्रश्नाः प्रदीयन्ते।

१. षिद्गौरादिभ्यश्च इति सूत्रस्य व्याख्या कार्या।
२. वोतो गुणवचनात् इति सूत्रस्य व्याख्या कार्या।
३. इतो मनुष्यजातेः इति सूत्रस्य व्याख्या कार्या।
४. जातेरस्त्रीविषयादयोपधात् इति सूत्रस्य व्याख्या कार्या।
५. स्वाङ्गाच्चोपसर्जनादसंयोगपधात् इति सूत्रस्य व्याख्या कार्या।
६. पुंयोगादाख्यायाम् इति सूत्रस्य व्याख्या कार्या।
७. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् इति सूत्रस्य व्याख्या कार्या।
८. गौरी इति प्रयोगस्य सिद्धिः लेख्या।
९. नर्तकी इति प्रयोगस्य सिद्धिः लेख्या।
१०. मृद्वी मृदुः इति प्रयोगस्य सिद्धिः लेख्या।
११. दाक्षी इति प्रयोगस्य सिद्धिः लेख्या।
१२. वस्त्रक्रीती इति प्रयोगस्य सिद्धिः लेख्या।
१३. चन्द्रमुखी चन्द्रमुखा इति प्रयोगस्य सिद्धिः लेख्या।
१४. तटी इति प्रयोगस्य सिद्धिः लेख्या।



## पाठगतप्रश्नोत्तराणि

१. गौरादयः इति पदे बहुव्रीहिसमासः अस्ति। गौरः आदिः येषां ते गौरादयः इति च विग्रहः।



२. अस्त्रीपिषयात् इत्यस्य नित्यस्त्रीलिङ्गभिन्नात् इत्यर्थः।

३. संयोगोपधः इति पदे बहुव्रीहिसमासः। संयोगः उपधा यस्य सः संयोगोपधः।

४. गुणवचनात् इति पदस्य गुणवाचकात् इत्यर्थः।

५. करणपूर्वात् इति पदे बहुव्रीहिसमासः। करणं पूर्वं यस्य सः करणपूर्वः, तस्मात् करणपूर्वात्, इति च विग्रहः।

६. वस्त्रक्रीती इत्यस्य लौकिकं विग्रहवाक्यं भवति वस्त्रैः क्रीता इति वस्त्रक्रीती।

७. केशान् अतिक्रान्ता इति अतिकेशी इत्यस्य लौकिकं विग्रहवाक्यम्।

८. उपगोः अपत्यं स्त्री इति औपगवी इत्यस्य अर्थः।

॥ इति एकादशः पाठः॥





# प्रथमपुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्ययीक्रमः**

[८.३] अक्ष्णोऽदर्शनात्॥ (५.४.७६)
[८.२] अच् प्रत्यन्ववपूर्वात् ॥ (५.४.७४)
[९.१] अजाद्यतष्टाप्॥ (४.१.४)
[७.४] अजाद्यदन्तम्॥ (२.२.३३)
[२.१४] अधिकरणवाचिना च॥ (२.२.१३)
[१.२०] अनश्च॥ (५.४.१०८)
[५.२] अनेकमन्यपदार्थे॥ (२.२.२४)
[६.३] अन्तर्बहिर्भ्यां च लोम्नः॥ (५.४.११७)
[५.६] अप्पूरणीप्रमाण्योः॥ (५.४.११६)
[२.१९] अर्धं नपुंसकम्॥ (२.२.२)
[४.१६] अर्धर्चाः पुंसि च॥ (२.४.३१)
[७.५] अल्पाच्तरम्॥ (२.२.३४)
[१.८] अव्ययं विभक्ति-समीप o॥ (२.१.६)
[१.७] अव्ययीभावः॥ (२.१.५)
[१.९] अव्ययीभावश्च॥ (२.४.१८)
[१.१२] अव्ययीभावे चाकाले॥ (६.३.८०)
[१.१९] अव्ययीभावे शरत्प्रभृतिभ्यः॥ (५.४.१०७)
[४.८] अहःसर्वैकदेशसंख्यात o॥ (५.४.८७)
[७.१०] आनङ्तो द्वन्द्वे॥ (६.३.२५)
[४.११] आन्महतः समानाधिकरण o॥ (६.३.४६)
[५.१२] इच्कर्मव्यतिहारे॥ (५.४.१२७)
[६.११] इणः षः॥ (८.३.३९)
[११.४] इतो मनुष्यजातेः॥ (४.१.६५)
[६.१३] इनः स्त्रियाम्॥ (५.४.१५२)
[११.९] इन्द्रवरुणभवशर्वरुद्र o॥ (४.१.४९)
[१०.२] उगितश्च॥ (४.१.६)
[६.६] उद्विभ्यां काकुदस्य॥ (५.४.१४८)
[४.६] उपपदमतिङ्॥ (२.२.१९)
[३.१४] उपमानानि सामान्यवचनैः॥ (२.१.५५)
[३.१५] उपमितं व्याघ्रादिभिःo॥ (२.१.५५)
[८.४] उपसर्गादध्वनः॥ (५.४.८५)
[१.५] उपसर्जनं पूर्वम्॥ (२.२.३०)
[६.९] उरःप्रभृतिभ्यः कप्॥ (५.४.१५१)
[४.२] ऊर्यादिच्विडाचश्च॥ (१.४.६१)
[८.१] ऋक्पूरब्धूःपथामानक्षे॥॥ (५.४.७४)
[१०.१] ऋन्नेभ्यो ङीप्॥ (४.१.५)
[४.३] एकविभक्ति चापूर्वनिपाते॥ (१.२.४४)
[२.१७] कर्तरि च॥ (२.२.१६)
[२.५] कर्तृकरणे कृता बहुलम्॥ (२.१.३२)
[२.१५] कर्मणि च॥ (२.२.१४)
[६.१२] कस्कादिषु च॥ (८.३.४८)
[३.१८] किं क्षेपे॥ (२.१.६४)
[८.६] किमः क्षेपे॥ (५.४.७०)
[४.१] कुगतिप्रादयः॥ (२.२.१८)
[३.१२] कुत्सितानि कुत्सनैः॥ (२.१.५३)
[२.१३] क्तेन च पूजायाम्॥ (२.२.१२)
[११.८] क्रीतात्करणपूर्वात्॥ (४.१.५०)
[३.५] गोरतद्धितलुकि॥ (५.४.९२)
[४.४] गोस्त्रियोरुपसर्जनस्य॥ (१.२.४८)
[२.६] चतुर्थी तदर्थार्थबलिo॥ (२.१.३६)
[७.१] चार्थे द्वन्द्वः॥ (२.२.२९)
[७.७] जातिरप्राणिनाम्॥ (२.४.६)
[११.६] जातेरस्त्रीविषयादयोपधात्॥ (४.१.६३)
[१.२३] झयः॥ (५.४.१११)
[१०.६] टिड्ढाणञ्द्वयसज्दघ्न o॥ (४.१.१५)
[९.२] डाबुभाभ्यामन्यतरस्याम्॥ (४.१.१३)
[३.६] तत्पुरुषः समानाधिकरणःo॥ (१.२.४२)
[२.१] तत्पुरुषः॥ (२.१.२२)
[४.७] तत्पुरुषस्याङ्गुलेःo॥ (५.४.८६)
[५.११] तत्र तेनेदमिति सरूपे॥ (२.२.२७)




[१.१६] नदीभिश्च॥ (२.१.२०)



[११.१] षिद्गौरादिभ्यश्च॥ (४.१.४१)
[३.१०] स नपुंसकम्॥ (२.४.१७)
[५.७] संख्ययाऽव्ययासन्ना०॥ (२.२.२५)
[१.१५] संख्या वंश्येन॥ (२.१.१९)
[३.८] संख्यापूर्वो द्विगुः॥ (२.१.५२)
[६.५] संख्यासुपूर्वस्य॥ (५.४.१४०)
[३.१६] सन्महत्परमोत्तमो०॥ (२.१.६१)
[२.२०] सप्तमी शौण्डैः॥ (२.१.४०)
[५.३] सप्तमीविशेषणे बहुव्रीहौ॥ (२.२.३५)
[१.१] समर्थः पदविधिः॥ (२.१.१)
[१.१८] समासान्ताः॥ (५.४.६८)
[१.३] सह सुपा॥ (२.१.४)
[१.६] सुपो धातुप्रातिपदिकयोः॥ (२.४.७१)
[१.१४] सुप्प्रतिना मात्रार्थे॥ (२.१.९)
[६.८] सुहृद्-दुर्हृदौ मित्रामित्रयोः॥ (५.४.१५०)
[६.१०] सोऽपदादौ॥ (८.३.३८)
[२.८] स्तोकान्तिकदूरार्थ ०॥ (२.१.३९)
[५.५] स्त्रियाः पुंवद्भाषित ०॥ (६.३.३४)
[११.७] स्वाङ्गाच्चोपसर्जनाद ०॥(४.१.५४)
[५.४] हलदन्तात् सप्तम्याः०॥ (६.३.८)